श्रीवृद्धिविजयगुरुभ्यो नमः

॥ श्रीअजितप्रभसूरिविरचितम् ॥

# ॥ श्रीशान्तिनाथचरित्रम् ॥

श्रीमान् वर्द्धमानतपउद्धारक–आचार्यश्रीमद्विजयभक्तिसूरीश्वराणां पंन्यास कञ्चनविजयसंज्ञकानाञ्च
सदुपदेशात् श्रीमण्डवाडियाग्रामनिवासिश्रीमच्छ्रेष्ठिवर्य्य–रत्नाज्यात्मजशङ्करलालस्य
सद्द्रव्यसाहाय्येन पंन्यास कञ्चनविजयेन संशोध्य प्रकाशितम्

पण्यं रु. २–१२–०

मुद्रक: शेठ देवचंद दामजी
आनंद प्रिन्टींग प्रेस
स्टेशन रोड, भावनगर.

सुधासोदरवाग्ज्योत्स्ना-निर्मलीकृतदिङ्मुखः ।
मृगलक्ष्मा तमःशान्त्यै, श्रीशांतिनाथजिनोऽस्तु वः ॥

—कलिकालसर्वज्ञ श्रीमद् हेमचंद्राचार्य

हित्वा संसारहेतूनि, यो रत्नानि चतुर्दश ।
स्वीचक्रे मुक्तिदां रत्न-त्रयीं शान्तिः स वोऽवतात् ॥

—वेणीकृपाण श्रीमद् अमरचंद्रसूरि

वीर संवत् २४६६
विक्रम संवत् १९९६

॥ अर्हम् ॥

श्रीअजितप्रभाचार्यविरचितम्

# ॥ श्रीशान्तिनाथचरित्रम् ॥

श्रेयोरत्नाकरोद्भूतामर्हल्लक्ष्मीमुपास्महे । स्पृहयन्ति न के यस्यै शेषश्रीविरताशयाः ॥ १ ॥
[1]वृषेण भाति यो [2]ब्रह्मकृता लक्ष्मगतेन वा । इत्यन्वर्थाय तस्मै श्रीवृषभस्वामिने नमः ॥ २ ॥
येऽन्तरङ्गारिषड्वर्गोपसर्गोग्रपरीषहैः । न जितास्तेऽजितस्वामिमुख्या नन्दन्तु तीर्थपाः[3] ॥ ३ ॥
[4]कृतारिष्टतमःशान्तिश्चारुहेमतनुद्युतिः । [5]प्रत्यादिष्टभवभ्रान्तिः श्रीशान्तिर्जयताज्जिनः ॥ ४ ॥
[6]गृहिव्रतोपमा यस्य भवाः श्रोतृशुभावहाः । शान्तिनाथस्य तस्यैव चरित्रं कीर्त्तयाम्यहम् ॥ ५ ॥
जम्बूद्वीपस्य भरते क्षेत्रेऽत्रैव हि पत्तनम् । अस्ति रत्नपुरं नाम नररत्ननिवासभूः ॥ ६ ॥
आसीद्दासीकृतारा[7]तिश्चारुनीतिर्महामतिः । रूपलक्ष्म्या रतिपतिः[8] श्रीषेणस्तत्र भूपतिः ॥ ७ ॥

---

१ वृषभेण धर्मेण वा. २ ब्रह्मचर्यकृता. ३ तीर्थकराः. ४ कृताऽरिष्टमुत्पात एवान्धकारस्तस्य शान्तिर्येन. ५ प्रत्यादिष्टा निषिद्धा नाशितेति यावत्. ६ द्वादश. ७ अरातिः शत्रुः. ८ कामदेवसदृशः.

दानमानप्रियालापैः सदा तेनाभिनन्दिता । तस्याभिनन्दिता राज्ञी द्वितीया सिंहनन्दिता ॥ ८ ॥
सा पूर्वप्रेयसी राज्ञ ऋतुस्नानाभिनन्दिता । समधातुः शयनीये सुखसुप्ताऽन्यदा निशि ॥ ९ ॥
स्वप्नेऽपश्यन्निजोत्सङ्गवर्त्तिनौ भानुमालिनौ । प्रध्वंसितान्धतमसौ सूर्याचन्द्रमसौ समम् ॥ १० ॥ (युग्मम्)
कथयामास सा भर्त्तुस्तं स्वप्नं मुदिता प्रगे[1] । तत्फलं सोऽपि विज्ञाय शशंसैवं प्रसन्नवाक् ॥ ११ ॥
युग्मजातौ भुवि ख्यातौ कुलोद्द्योतविधायिनौ । स्वप्नेनानेन हे देवि ! तव पुत्रौ भविष्यतः ॥ १२ ॥
बिभ्रत्युभावथो गर्भौ सा राज्ञी शुशुभेऽधिकम् । उपकर्तृकृतज्ञौ हि दधानेव वसुन्धरा ॥ १३ ॥
सम्पूर्णसमये माऽथ सुषुवे तनयद्वयम् । विधिप्रयुक्ता सन्नीतिरर्थधर्म्माविवावनौ ॥ १४ ॥
इन्दुषेणबिन्दुषेण इति नाम्नी तयोः शुभे । चकार तत्पिता हृष्टो महोत्सवपुरःसरम् ॥ १५ ॥
अष्टवर्षप्रमाणौ तौ कलाचार्यस्य सन्निधौ । कलाभ्यासं विदधतुः क्रमात्प्राप्तौ च यौवनम् ॥ १६ ॥
इतश्चात्रैव भरते देशे मगधनामनि । श्रियाऽभिरामः सद्ग्रामोऽस्त्यचलग्रामनामकः ॥ १७ ॥
तत्राभूद्धरणिजटाभिधानो द्विजपुङ्गवः । वेदवेदाङ्गतत्त्वज्ञो यशोभद्रा च तत्प्रिया ॥ १८ ॥
स नन्दिभूतिश्रीभूती यशोभद्राभवौ सुतौ । यत्नतः पाठयामास वेदशास्त्रमहर्निशम् ॥ १९ ॥
दास्या कपिलया जातः कपिलोऽप्यस्य नन्दनः । स तु जातिविहीनत्वादतिप्रज्ञाधिकोऽभवत् ॥ २० ॥

१ प्रातः.

स्वपित्रा पाठ्यमानौ तौ शृण्वानः कपिलोऽथ सः । जज्ञे चतुर्दशविद्यास्थानविज्ञानकोविदः ॥ २१ ॥
गृहान्निःसृत्य यज्ञोपवीतयुग्मं वहन्नतः । महाब्राह्मणमात्मानं मन्यमानोऽभ्रमद्भुवि ॥ २२ ॥
स आययौ रत्नपुरे सत्यकिर्नाम तत्र च । उपाध्यायो बहून् छात्रान् वेदपाठमकारयत् ॥ २३ ॥
प्रपच्छ कपिलश्छात्रान् वेदोपनिषदं तथा । यथा नोत्तरमेतस्मै दातुमीशा इमेऽभवन् ॥ २४ ॥
विज्ञाय तं महाप्राज्ञमुपाध्यायो निजे पदे । स्थापयामास को नाम गुणैर्न लभते पदम् ? ॥ २५ ॥
उपाध्यायस्य तस्यासीज्जम्बुका नाम गेहिनी । तत्कुक्षिसम्भवा पुत्री सत्यभामाऽभिधा तथा ॥ २६ ॥
योग्योऽयमिति तां तस्मा उपाध्यायो ददौ सुताम् । रममाणस्तया सार्द्धं तत्रास्थात्कपिलः सुखम् ॥२७॥
उपाध्यायस्य मान्योऽयमिति लोकैरपूज्यत । विद्वत्कथासु सर्वत्र क्रियते स्म निदर्शनम् ॥ २८ ॥
जगज्जीवातुधान्यौघतृणवृद्धिविधानतः । परिरक्षितदुष्कालो वर्षाकालोऽन्यदाऽभवत् ॥ २९ ॥
तस्मिंश्च समयेऽन्येद्युः कौतुकी कपिलो ययौ । रात्रौ प्रेक्षणकालोककृते देवकुलादिषु ॥ ३० ॥
महत्यामथ यामिन्यामन्धकारे निरन्तरे । वर्षत्यम्बुधरे गेहमागच्छन् स व्यचिन्तयत ॥ ३१ ॥
मार्गो निःसञ्चरस्तावत्तमसाऽन्तरितेक्षणम् । विश्वं प्रवर्त्तते तत्किं वस्त्रे आर्द्रीकरोम्यहम् ॥ ३२ ॥
विचिन्त्येदमथो कक्षान्तरे प्रक्षिप्य वाससी । स सत्वरमुपेयाय नग्नीभूतो निजे गृहे ॥ ३३ ॥
परिधाय ततो वस्त्रे प्रविवेश गृहान्तरे । तद्भार्या तं बभाषेऽथ ढौकयित्वाऽन्यवाससी ॥ ३४ ॥

अग्रेतने जलक्लिन्ने मुञ्च त्वं नाथ ! चीवरे । इमं च परिधेहीति भणितः कपिलोऽब्रवीत् ॥ ३५ ॥
पश्य प्रिये ! नहि क्लिन्ने मन्त्रशक्त्या ममाम्बरे । करस्पर्शात्तत्प्रियाऽपि ते विवेद तथाविधे ॥ ३६ ॥
दृष्ट्वा च विद्युदुद्द्योतेनाङ्गमस्य जलार्द्रितम् । सैवं विचिन्तयामास मत्या दर्भाग्रतीक्ष्णधीः ॥ ३७ ॥
नूनं वृष्टिभयादेष गोपयित्वाऽम्बरे पथि । नग्न एव समायातो वृथाऽऽत्मानं प्रशंसति ॥ ३८ ॥
अनया चेष्टया नैष कुलीनोऽपि विभाव्यते । तदस्य गृहवासेन मम हन्त विडम्बना ॥ ३९ ॥
इत्यन्तश्चिन्तया मन्दरागा तस्मिन् बभूव सा । तथापि सममेतेन गृहवासमपालयत् ॥ ४० ॥
कपिलस्य पिता सोऽथ ब्राह्मणः कर्मदोषतः । बभूव विभवक्षीणो भूरिविद्याधनोऽपि सन् ॥ ४१ ॥
ज्ञात्वा विभूतिमन्तं तं कपिलं लोकपूजितम् । आगात्प्राघुर्णिकोऽन्येद्युस्तद्गृहेऽसौ धनाशया ॥ ४२ ॥
भोजनावसरे सोऽथ विभिन्नः समुपाविशत् । कपिलो निजतातस्य व्यपदिश्य मिषान्तरम् ॥ ४३ ॥
ततस्तस्या विशेषेणाभवद्भ्रान्तिर्मनोगता । रहः पृष्टश्च विप्रोऽसौ तया शपथपूर्वकम् ॥ ४४ ॥
किमयं तात ! युष्माकमङ्गजो वा परो न्विति । तेनाऽपि मर्ममेतस्यै तदाख्यातं यथातथम् ॥ ४५ ॥
दत्त्वा यथोचितं किञ्चिद्विसृष्टः कपिलेन सः । विप्रो जगाम धरणिजटाख्यो नगरे निजे ॥ ४६ ॥
विरक्ता सत्यभामा सा कपिलस्य गृहात्ततः । गत्वा श्रीषेणभूपालं कृताञ्जलिरथावदत् ॥ ४७ ॥
देव ! त्वं जगतीपालो लोकपालश्च प्रभुः । [illegible]

ततः कुरुष्व कारुण्यं ममाऽप्युपरि भूपते ! । प्रत्यूचे पार्थिवस्तां हि किं ते दुःखस्य कारणम् ॥ ४९ ॥
पूज्यस्तावदुपाध्यायस्तस्य त्वमसि नन्दिनी । गेहिनी कपिलस्यापि मान्यस्त्वत्पितुरेव यः ॥ ५० ॥
उवाच सत्यभामैवमस्ति राजन् ! परं मम । भर्त्ता यः कपिलो नाम सोऽकुलीनत्वदूषितः ॥ ५१ ॥
राज्ञाऽथ कथमित्युक्ता राज्ञोऽग्रे साऽपि सूनृताम् । तत्कथां कथयामास भूयश्चैवमभाषत ॥ ५२ ॥
अमुष्य गृहवासेन पर्याप्तं मम सर्वथा । तथा कुरु महीनाथ ! यथा शीलं चराम्यहम् ॥ ५३ ॥
आकार्य भूभुजाऽभाणि साञ्जमं कपिलोऽथ सः । विरक्ता गृहवासस्य भद्रेयं त्वत्प्रियेत्यलम् ॥ ५४ ॥
तदिमां विगतस्नेहां मुञ्च त्वं स्वपरिग्रहात् । यथाऽसौ पितृगेहस्था कुर्याद्धर्मं कुलोचितम् ॥ ५५ ॥
कपिलोऽप्यब्रवीद्देव ! क्षणमप्यनया विना । न स्थातुमहमीशोऽस्मि तदियं मुच्यते कथम् ? ॥ ५६ ॥
राज्ञा तु सत्यभामा सा पुनः पृष्टाऽब्रवीदिति । नैतस्माद्यदि मे मोक्षस्तन्मरिष्यामि निश्चितम् ॥ ५७ ॥
राज्ञोचे कपिलो भूयो हंहो धृत्वा बलादमूम् । स्त्रीहत्यां किं करोषि त्वं किं बिभेषि न पाप्मनः[1] ? ॥ ५८ ॥
अस्मद्राज्ञीसमीपस्था तिष्ठत्वेषा यथासुखम् ! दिनानि कत्यपीत्युक्तो मेनेऽसौ कपिलोऽपि तत् ॥ ५९ ॥
सत्यभामा विनीता सा कुर्वाणा शीलरक्षणम् । राजराज्ञीसमीपस्था गमयामास वासरान् ॥ ६० ॥
सूरिर्विमलबोधाख्यो विहरन्नवनीतले । तत्रागत्य पुरेऽन्येद्युस्तस्थौ स्थाने यथोचिते ॥ ६१ ॥

१ पापात्.

सूरेरागमनोदन्तमाकर्ण्य जनतामुखात् । ययौ तद्वन्दनाहेतोः श्रीषेणपृथिवीपतिः ॥ ६२ ॥
सूरिं नत्वा यथास्थानमुपाविशन्महीपतिः । तमुद्दिश्य मुनीन्द्रोऽथ विदधे धर्मदेशनाम् ॥ ६३ ॥
मनुष्यकादिसामग्रीं सम्प्राप्याऽपि प्रमादिनः । ये धर्मं नानुतिष्ठन्ति तेषां जन्म निरर्थकम् ॥ ६४ ॥
जैनं धर्मं समाराध्य भूत्वा विभवभाजनम् । प्राप्ताः सिद्धिसुखं ये ते श्लाघ्या मङ्गलकुम्भवत् ॥ ६५ ॥

तद्यथा—

उज्जयिन्यां महापुर्यां वैरिसिंहो महीपतिः । सोमचन्द्रा च तद्भार्या धनदत्तश्च श्रेष्ठ्यभूत् ॥ ६६ ॥
धर्मार्थी सुविनीतात्मा सत्यशीलदयान्वितः । गुरुदेवार्चनप्रीतः स श्रेष्ठी धनदत्तकः ॥ ६७ ॥
सत्यभामेति तद्भार्या शीलालङ्कृतिशालिनी । पत्यौ प्रेमपरा किं त्वपत्यभाण्डविवर्जिता ॥ ६८ ॥
साऽन्यदा श्रेष्ठिनं पुत्रचिन्ताम्लानमुखाम्बुजम् । दृष्ट्वा प्रपच्छ हे नाथ! किं ते दुःखस्य कारणम् ॥ ६९ ॥
श्रेष्ठिना च समाख्याते तस्यै तस्मिन् यथातथे । श्रेष्ठिनी पुनरप्यूचे पर्याप्तं चिन्तयाऽनया ॥ ७० ॥
धर्म एव भवेन्नृणामिहामुत्र सुखप्रदः । स एव सेवनीयो हि विशेषेण सुखैषिणा ॥ ७१ ॥
तत्त्वं देवे गुरौ चापि कुरु भक्तिं यथोचिताम् । देहि दानं सुपात्रेभ्यः पुस्तकं चापि लेखय ॥ ७२ ॥
एवं च कुर्वतोः पुत्रो भावी यदि तदा वरम् । भविता निर्मलो नाथ! परलोकोऽन्यथाऽऽवयोः ॥ ७३ ॥
हृष्टः श्रेष्ठ्यप्युवाचैवं प्रिये! साधूदितं त्वया । सम्यगाराधितो धर्मो भवेच्चिन्तामणिर्नृणाम् ॥ ७४ ॥

ततश्च देवपूजार्थं पुष्पग्रहणहेतवे । आकार्यारामिकं तस्मै ददौ श्रेष्ठी धनं बहु ॥ ७५ ॥
स्वयं गत्वा तदारामे पुष्पाण्यानीय स प्रगे । गृहार्चामर्चयित्वा च गच्छति स्म जिनालये ॥ ७६ ॥
तत्र नैषेधिकीमुख्यान् यथास्थानं दश त्रिकान् । ख्यापयन् परया भक्त्या विदधे चैत्यवन्दनाम् ॥ ७७ ॥
ततः साधून्नमस्कृत्य प्रत्याख्यानं विधाय च । अतिथीनां संविभागं चकार च महामतिः ॥ ७८ ॥
अन्यदप्यखिलं धर्म्मकर्म शर्मनिबन्धनम् । आह्निकं रात्रिकं चैव धनदत्तो व्यधात्सुधीः ॥ ७९ ॥
अथ धर्म्मप्रभावेण तुष्टा शासनदेवता । ददौ तस्मै पुत्रवरं प्रत्यक्षीभूय साऽन्यदा ॥ ८० ॥
पुत्रे गर्भागते रात्रिशेषे श्रेष्ठिन्युदैक्षत । स्वप्ने हेममयं पूर्णकलशं मङ्गलावृतम् ॥ ८१ ॥
जातश्च समये पुत्रस्ततः कृत्वोत्सवं गुरुम् । तस्मै मङ्गलकलश इत्याख्यां तत्पिता ददौ ॥ ८२ ॥
कलाभ्यासपरः सोऽथाष्टवर्षप्रमितोऽन्यदा । तात ! त्वं कुत्र यासीति पप्रच्छ पितरं निजम् ॥ ८३ ॥
सोऽवदद्वत्स ! गत्वाहमारामे प्रतिवासरम् । ततः पुष्पाणि चानीय करोमि जिनपूजनम् ॥ ८४ ॥
ययौ पित्रा सहान्येद्युस्तत्र सोऽपि कुतूहली । आरामिकोऽवदत्कोऽयं बालो नेत्रविशालकः ॥ ८५ ॥
ज्ञात्वा च श्रेष्ठिपुत्रं तं तस्मै सोऽपि ददौ मुदा । नारङ्गकरु(र)णादीनि सुस्वादूनि फलान्यलम् ॥ ८६ ॥
स्वगेहे पुनरागत्य कुर्वतो जिनपूजनम् । श्रेष्ठिनोऽढौकयत्पुत्रः पूजोपकरणं स्वयम् ॥ ८७ ॥
द्वितीये च दिने तेन सादरं भणितः पिता । अतः परं मया गम्यं पुष्पानयनकर्मणि ॥ ८८ ॥

निश्चिन्तेनैव स्थातव्यं त्वया तात ! निजे गृहे । अन्याग्रहेण तद्वाक्यमनुमेने पिताऽपि तत् ॥ ८९ ॥
एवं च कुर्वतस्तस्य धर्माभ्यासं तथान्तरा । कियन्त्यपि गते काले यज्जातं तन्निशम्यताम् ॥ ९० ॥
अस्त्यत्र भरतक्षेत्रे चम्पा नाम महापुरी । अभूत्तत्र महाबाहुः पार्थिवः सुरसुन्दरः ॥ ९१ ॥
राज्ञो गुणावली तस्य सा निजोत्सङ्गवर्त्तिनीम् । दृष्ट्वा कल्पलतां स्वप्ने पार्थिवाय न्यवेदयत् ॥ ९२ ॥
राजा प्रोवाच हे देवि ! तव पुत्री भविष्यति । सर्वलक्षणसम्पूर्णा सर्वनारीशिरोमणिः ॥ ९३ ॥
पूर्णकालेऽथ चार्वङ्गी सा देवी सुषुवे सुताम् । त्रैलोक्यसुन्दरी नाम तस्याश्चक्रे महीपतिः ॥ ९४ ॥
लावण्यधनमञ्जूषा सौभाग्यरसनिम्नगा । बभूव यौवनप्राप्ता सा मूर्त्तेव सुराङ्गना ॥ ९५ ॥
तां विलोक्यानवद्याङ्गीं दध्याविति धराधिपः । रमणः कोऽनुरूपोऽस्या वत्साया मे भविष्यति ॥ ९६ ॥
ऊचे च प्रेयसीः सर्वा वराऽर्हेयं सुताऽभवत् । दातव्या ब्रूत तत् कस्मा अत्रार्थे वः प्रधानता ॥ ९७ ॥
ता ऊचुरियमस्माकं जीवितादपि वल्लभा । नालं धर्त्तुं वयं प्राणान् क्षणमप्यनया विना ॥ ९८ ॥
दातव्या तदसौ मन्त्रिपुत्रायात्रैव हे प्रिय ! । प्रत्यहं नयनानन्दकारिणी दृश्यते यथा ॥ ९९ ॥
ततो राज्ञा समाहूय सुबुद्धिः सचिवो निजः । अभाणि यन्मया दत्ता त्वत्सुतायात्मनन्दिनी ॥ १०० ॥
अमात्योऽप्यवदद्देव ! किमयुक्तं ब्रवीष्यदः । कस्मैचिद्राजपुत्राय दातुं कन्या तवोचिता ॥ १०१ ॥
राज्ञोचे न त्वया वाच्यमित्यर्थे किञ्चनाऽपि भोः । देया त्वत्सूनवेऽवश्यं पुत्री त्रैलोक्यसुन्दरी ॥ १०२ ॥

मन्त्री कृताग्रहिन्थोऽथ गृहे गत्वा व्यचिन्तयत्। हा व्याघ्रदुस्तटीन्याये पतितोऽस्मि करोमि किम्?॥ १०३ ॥
रतिरम्भोपमाकारा राज्ञः पुत्री सुतस्तु मे। कुष्ठी तदेतयोर्योगं कथं जानन् करोम्यहम् ॥ १०४ ॥
अथवाऽयं मयोपायो लब्धो यत्कुलदेवताम्। आराध्य साधयिष्यामि सर्वमात्मसमीहितम् ॥ १०५ ॥
ततश्चाराधयामास विधिना कुलदेवताम्। उवाच साऽपि प्रत्यक्षीभूय मन्त्रिन्! स्मृताऽस्मि किम् ॥ १०६ ॥
मंत्र्यूचे त्वं स्वयं वेत्सि सर्वं दुःखस्य कारणम्। तथा कुरु यथा पुत्रो नीरोगाङ्गो[1] भवेन्मम ॥ १०७ ॥
देव्यूचे नान्यथाकर्त्तुं नृणां कर्म पुराकृतम्। दैवतैरपि शक्येत वृथेयं प्रार्थना तव ॥ १०८ ॥
मन्त्री प्रोवाच यद्येवं तदन्यमपि पूरुषम्। तदाकारं निराकल्यं कुतोऽप्यानीय मेऽर्प्पय ॥ १०९ ॥
तेनोद्वाह्य महाराजपुत्रीं कमललोचनाम्। अर्प्पयिष्यामि पुत्रस्य करिष्येऽस्य यथोचितम् ॥ ११० ॥
देवतोचे पुरीद्वारेऽश्वरक्षकनरान्तिके। शीतव्यथानिरासार्थमग्निसेवापरो हि यः ॥ १११ ॥
कुतोऽप्यानीय मयका मुक्तो भवति बालकः। स मन्त्रिन! भवता ग्राह्यः पश्चात्कुर्य्याद्यथोचितम् ॥ ११२ ॥ (युग्मम्)
इत्युक्त्वाऽन्तर्दधे देवी हृष्टोऽथ सचिवेश्वरः। सर्वां विवाहसामग्रीं प्रगुणीकुरुते स्म सः ॥ ११३ ॥
अश्वपालनरं छन्नमाकार्य निजकं ततः। तस्मै निवेद्य सकलं वृत्तान्तं सन्यमादितः ॥ ११४ ॥
इदमूचे च यः कश्चिदभ्येति भवदन्तिके। कुतोऽपि बालकः सो हि समर्प्यो मेऽविलम्बितम् ॥ ११५ ॥

१ रोगरहितम्.

तं श्रेष्ठिनन्दनं तस्या वरं विज्ञाय भाविनम् । उज्जयिन्यां ययौ पुर्य्यां मन्त्रिणः कुलदेवता ॥ ११६ ॥
अन्तरिक्षस्थितोवाच सा चैवं तस्य शृण्वतः । पुष्पाण्यानीय चारामाद्गच्छतो निजवेश्मनि ॥ ११७ ॥
स एष बालको याति पुष्पभाजनपाणिकः । परिणेष्यति यो राजकन्यकां भाटकेन हि ॥ ११८ ॥
तच्छ्रुत्वा विस्मितः सोऽथ किमेतदिति सम्भ्रमात् । तातस्य कथयिष्यामीति ध्यायन् सदनं ययौ ॥ ११९ ॥
गृहं गतस्य सा वाणी विस्मृता तस्य दैवतो । द्वितीये दिवसेऽप्येवं श्रुत्वा पुनरचिन्तयत् ॥ १२० ॥
अहो अद्यापि सा वाणी या श्रुता ह्यो मयाऽम्बरे । तदद्य सदनं प्राप्तः कथयिष्याम्यहं पितुः ॥ १२१ ॥
सोऽचिन्तयदिदं यावत्तावदुत्पाट्य वात्यया । नीतो दूरतरारण्ये चम्पापुर्याः समीपगे ॥ १२२ ॥
भयभ्रान्तस्तृषाक्रान्तः श्रान्तस्तत्र स बालकः । सन्मानसभ्रमकरं ददर्शाग्रे सरोवरम् ॥ १२३ ॥
तत्र वस्त्राञ्चलापूतं पयः पीत्वाऽतिशीतलम् । तत्सेतुस्कन्धमंरूढमाशिश्राय वटद्रुमम् ॥ १२४ ॥
तदा चास्तमितो भानुरवस्थापतितस्य हि । श्रेष्ठिपुत्रस्य तस्योपकारं कर्त्तुमिवाक्षमः ॥ १२५ ॥
कृत्वा दर्भतृणै रज्जुं तयाऽऽरुह्य च तं द्रुमम् । स ददर्शोत्तराशायामदूरे ज्वलितानलम् ॥ १२६ ॥
ततो वटात्समुत्तीर्य स भीतः शीतविह्वलः । हुताशनानुमार्गेण चम्पापुर्या ययौ बहिः ॥ १२७ ॥
तत्रोपान्तेऽश्वपालानां कुर्वाणो वह्निसेवनम् । यावदास्तीदसौ हस्यमानस्तैर्दुष्टचेष्टितैः ॥ १२८ ॥
तावत्तेन नरेणैत्य पूर्वादिष्टेन मन्त्रिणा । आत्मनः पार्श्वमानीतः कृतश्च निरुपद्रवः ॥ १२९ ॥

गोपयित्वाऽतियत्नेन प्रभातसमयेऽमुना । अर्पितोऽमात्यवर्यस्य गृहे नीत्वा सगौरवम् ॥ १३० ॥
भोजनाच्छादनप्रायममात्योऽप्यस्य गौरवम् । चकार मदनस्यान्तर्गोपनं च दिवानिशम् ॥ १३१ ॥
ततोऽसौ चिन्तयामास किमयं मम सत्क्रियाम् । कुरुते निर्गमं[1] चैव यत्नाद्रक्षति मन्दिरात् ॥ १३२ ॥
पप्रच्छ चान्यदाऽमात्यं तात ! वैदेशिकस्य मे । किमिदं माननं हन्त भवद्भिः क्रियतेऽधिकम् ॥ १३३ ॥
का नामैषा पुरी को वा देशः को वाऽत्र भूपतिः । इति सत्यं ममाख्याहि विस्मयोऽत्र प्रवर्तते ॥ १३४ ॥
अमात्योऽप्यब्रवीच्चम्पानाम्नीयं नगरी वरा । अङ्गाभिधानो देशश्च राजात्र सुरसुन्दरः ॥ १३५ ॥
सुबुद्धिर्नाम तस्याहं माननीयो महत्तमः । मयाऽऽनीतोऽसि वत्स ! त्वं कारणेन गरीयसा ॥ १३६ ॥
त्रैलोक्यसुन्दरी नाम राज्ञा पुत्री विवाहितुम् । प्रदत्ता मम पुत्राय स तु कुष्ठेन पीडितः ॥ १३७ ॥
परिणीय त्वया भद्र ! विधिना सा नृपाङ्गजा । दातव्या मम पुत्राय तदर्थं त्वामिहानयम् ॥ १३८ ॥
तच्छ्रुत्वा मङ्गलोऽवोचदकृत्यं किं करोप्यदः । क्व सा रूपवती बाला निन्द्याङ्गो क्व ते सुतः ॥ १३९ ॥
कर्मेदं न करिष्यामि कथञ्चिदतिनिष्ठुरम् । कूपे क्षिप्त्वा जनं मुग्धं वरत्राकर्त्तनोपमम् ॥ १४० ॥
मन्त्र्यूचे चेन्न कर्मेदं करिष्यसि सुदुर्मते ! । तदा त्वां निजहस्तेन मारयिष्यामि निश्चितम् ॥ १४१ ॥
इति निस्त्रिंश[2]माकृष्य भणितोऽपि सुबुद्धिना । अकृत्यं नानुमेने तत् स कुलीनशिरोमणिः ॥ १४२ ॥

---

१ बहिर्गमनं. २ खड्गम्.

प्रधानपुरुषैर्मन्त्री निषिद्धस्तस्य मारणात् । अभाणि सोऽपि मन्यस्व भद्र ! त्वं मन्त्रिणो वचः ॥ १४३ ॥
ततोऽसौ चिन्तयामास भवितव्यमिदं खलु । अन्यथौज्जयिनी क्वाऽसौ ममेहागमनं क्व च ॥ १४४ ॥
इदमाकाशवाचाऽपि दैवत्या कथितं तदा । तत्करोम्यहमप्येवं यद्भाव्यं तद्भवत्यहो ॥ १४५ ॥
विचिन्त्येदं पुनः स्माह मङ्गलो मन्त्रिणं प्रति । यद्यवश्यमिदं कार्यं मयका कर्म्म निर्घृणम् ॥ १४६ ॥
तदाऽहमपि वः पार्श्वे नाथ ! नाथामि[1] सर्वथा । मह्यं ददाति यद्राजा–वस्तुजातं ममैव तत ॥ १४७ ॥
स्थापनीयं तु तत्सर्वमुज्जयिन्याः पुरोऽध्वनि । एवमस्त्विति तद्वाक्यं मेने मन्त्र्यपि बुद्धिमान् ॥ १४८ ॥
इति मङ्गलकुम्भोक्तं सचिवः प्रत्यपद्यत । सर्वं च सज्जयामास क्रमाद्वैवाहिकं विधिम् ॥ १४९ ॥
अथ व्योम्नः प्रतिच्छन्दमिव मण्डपमुत्तमम् । आदेशकारकैर्भूपः स्वानुरूपमकारयत् ॥ १५० ॥
कुमारकः कृतस्नानः कृतचन्दनलेपनः । सदशश्वेतवसनो हस्तविन्यस्तकङ्कणः ॥ १५१ ॥
दत्तकुङ्कुमहस्तोऽथ हस्त्यारूढो विभूषणैः । उत्तममेरुशृङ्गाग्ररूढकल्पद्रुमोपमः ॥ १५२ ॥
द्राघीयोभिर्वरस्त्रीणां उल्लुलुध्वनिभिर्भृशम् । पञ्चस्वनैश्च विदधत दिवं नादमयीमिव ॥ १५३ ॥
कृतशक्रधनुर्दण्डैर्मायूरातपवारणैः । वार्यमाणातपः प्राप मण्डपद्वारसन्निधिम् ॥ १५४ ॥
उत्तीर्य कुञ्जरात् तुङ्गात् कुलस्त्रीभिः कृतं तदा । अर्घ्यमेष प्रतीयेष प्रद्योतन[2] इव प्रगे ॥ १५५ ॥

१ याचे. २ सूर्यः

समासन्ने ततो लग्ने हस्तिस्कन्धाधिरोपितः । स निन्ये भूपतेः पार्श्वे वस्त्राभरणभूषितः ॥ १५६ ॥
त्रैलोक्यसुन्दरी साऽथ दृष्ट्वा तं मन्मथोपमम् । अमंस्त तद्वरप्राप्त्या कृतार्थं स्वं मनस्विनी ॥ १५७ ॥
ततश्च विप्रे पुण्याहं पुण्याहमिति जल्पति । चत्वारि परितो वह्निं भ्रेमतुर्मङ्गलानि तौ ॥ १५८ ॥
प्रथमे मङ्गले राजा चारुवस्त्राण्यनेकशः । वरायादाद् द्वितीये च स्थालाभरणसञ्चयम् ॥ १५९ ॥
तृतीये मणिहेमादि चतुर्थे च रथादिकम् । जायापत्योस्तयोरित्थं जज्ञे पाणिग्रहोत्सवः ॥ १६० ॥
कृतोद्वाहे वरे चास्मिन् वधूहस्तममुञ्चति । उवाच नृपतिर्भूयो वत्स ! यच्छामि किं नु ते ? ॥ १६१ ॥
ततश्च याचितस्तेन जात्यघोटकपञ्चकम् । तत्तस्मै शीघ्रमेवासौ प्रददौ प्रीतमानसः ॥ १६२ ॥
वाद्यमाने ततस्तूर्येऽभवद्धवलमङ्गलः । मन्त्रिणा स्वगृहे निन्ये समं वध्वा स मङ्गलः ॥ १६३ ॥
तत्रामात्यगृहजनश्छन्नं छन्नमभाषत । कथं निर्वास्यतेऽद्यापि नायं वैदेशिको नरः ॥ १६४ ॥
त्रैलोक्यसुन्दरी साऽथ चलचित्तं निजं पतिम् । ज्ञात्वेङ्गितैस्ततस्तस्योपान्तं नैवामुचत् क्षणम् ॥ १६५ ॥
ततः क्षणान्तरेणाऽसौ देहचिन्तार्थमुत्थितः । जलपात्रं गृहीत्वाऽऽशु तदनु प्राचलच्च सा ॥ १६६ ॥
कृतायामपि तस्यां तं शून्यचित्तं रहःस्थितम् । उवाच प्रेयसी कान्त ! बाधते त्वां क्षुधा नु किम् ? ॥ १६७ ॥
ओमिति भणिते तेन दासीहस्तेन मोदकान् । आनाय्य स्वगृहात्तस्मै ददौ त्रैलोक्यसुन्दरी ॥ १६८ ॥
भुक्तेषु तेषु पानीयं पिबता तेन भाषितम् । अहो रम्यतरा एते मोदकाः सिंहकेसराः ॥ १६९ ॥

उज्जयिन्या नगर्यांश्चेनीरमास्वाद्यतेऽमलम् । तदा तृप्तिर्भवेन्नूनं मोदकैर्भक्षितैरपि ॥ १७० ॥
तच्छ्रुत्वा राजपुत्री सा दध्यावाकुलचेतसा । अहो अघटमानं किं वाक्यमेष प्रजल्पति ? ॥ १७१ ॥
मातृगेहमथावन्त्यामार्यपुत्रस्य भावि वा । तदसौ दृष्टपूर्वत्वाज्ज्ञानात्यस्याः स्वरूपताम् ॥ १७२ ॥
ततश्च निजहस्तेन मुखपाटवकारणम् । पञ्चसौगन्धिकं तस्मै ताम्बूलं दत्तवत्यसौ ॥ १७३ ॥
सन्ध्याकाले पुनर्मन्त्रिमानुषैः प्रेरितोऽथ सः । त्रैलोक्यसुन्दरीमेवमूचे मतिमतां वरः ॥ १७४ ॥
गमिष्यामि पुनर्देहचिन्तायामुदरार्त्तिभाक् । त्वया क्षणान्तरेणाऽऽनन्तव्यमादाय पुष्करम् ॥ १७५ ॥
निरगाच्च ततो मन्त्रिमन्दिरात्पुरुषांश्च तान् । पप्रच्छ राजदत्तं भोः ! क्वास्ति तद्वस्तु मामकम् ॥ १७६ ॥
तैश्च तद्दर्शितं सर्वमुज्जयिन्याः पथि स्थितम् । ततः सारतरं वस्तु निक्षिप्यैकरथे वरे ॥ १७७ ॥
तस्मिंश्च योजयित्वाऽश्वांश्चतुरः पृष्ठतस्तथा । बद्ध्वैकं शेषकं (च वध्वा) वस्तु मुक्त्वा तत्रैव सोऽचलत् ॥ १७८ ॥ ( युग्मम् )
पृष्टाश्चानेन ते ग्रामानुज्जयिन्यध्वगाकराः । प्रत्येकं कथयन्ति स्म नामग्राहं मुहुर्मुहुः ॥ १७९ ॥
ततो रथाधिरूढोऽसौ तेन मार्गेण बुद्धिमान् । स्तोकैरेव दिनैः प्राप्तस्तामेव नगरीं निजाम् ॥ १८० ॥
इतश्च पितरौ तस्य तमन्विष्य विलप्य च । बहुधा बहुभिर्घस्रैर्गतशोकौ बभूवतुः ॥ १८१ ॥
गृहाभिमुखमायान्तं रथारूढं विलोक्य तम् । बभाषेऽथापरिज्ञाय जनन्यस्य ससम्भ्रमम् ॥ १८२ ॥

१ जलम्.

प्रेर्यते गृहमध्येन राजपुत्र ! कथं रथः । कर्त्तास्यभिनवं मार्गं किं त्वं त्यक्त्वा पुरातनम् ? ॥ १८३ ॥
इत्थं निषिध्यमानोऽपि न यावद्विरराम सः । आचख्यौ श्रेष्ठिनस्तावत् श्रेष्ठिन्याकुलिताशया ॥ १८४ ॥
श्रेष्ठ्यप्यस्य निषेधार्थं गृहाद्यावन्निरीयिवान् । तावद्रथात्समुत्तीर्य पितुः पादौ ननाम सः ॥ १८५ ॥
उपलक्ष्य ततस्ताभ्यामाश्लिष्टस्तनयो निजः । सद्यः प्रादुर्भवद्धर्षाऽश्रुपूरप्लावितेक्षणम् ॥ १८६ ॥
पप्रच्छ चोपविष्टः सन् वत्सर्द्धिः कुत ईदृशी । क्व वा कालमियन्तं त्वं स्थितोऽसि वद नन्दन ! ॥ १८७ ॥
ततश्चात्मकथा तेन पितुरग्रे निवेदिता । वाक्श्रुत्यपहारादि स्वस्थानागमनावधि ॥ १८८ ॥
अहो पुत्रस्य सौभाग्यमहो पुत्रस्य दक्षता । अहो धैर्य्यमहो भाग्यमिति प्राशंसतामिमौ ॥ १८९ ॥
ततः प्राकारसंगुप्तं स स्वगेहमकारयत् । अश्वानां रक्षणार्थं च मन्दुरादिनियन्त्रणम् ॥ १९० ॥
सोऽन्येद्युर्जनकं स्माह मम तात ! कलागमः । स्वल्पोऽस्त्यद्यापि तं पूर्णं करिष्यामि त्वदाज्ञया ॥ १९१ ॥
ततश्चानुमतः पित्रा कलाचार्य्यस्य सन्निधौ । कलाऽभ्यासं चकारासौ स्वकीयसदनान्तिके ॥ १९२ ॥
इतश्च मन्त्रिणा तेन रात्रौ मङ्गलवेषभृत् । प्रेषितो वासभवने वधूपान्ते सुतो निजः ॥ १९३ ॥
शय्यारूढं च तं दृष्ट्वा दध्यौ त्रैलोक्यसुन्दरी । कोऽयं कुष्ठाभिभृताङ्गः समायातो ममान्तिकम् ॥ १९४ ॥
करस्पर्शमथो कर्तुमुद्यतेऽस्मिन् झटित्यपि । सा शय्यायाः समुत्थाय निर्ययौ भवनाद्बहिः ॥ १९५ ॥
दासीभिर्भणिता किं नु स्वामिन्यसि ससम्भ्रमा। साऽवददेवतारूपी गतः क्वापि स मे पतिः ॥ १९६ ॥

प्रत्यूचुस्ता इदानीं स प्रविष्टोऽत्र पतिस्तव । साऽब्रवीन्नास्त्यसावत्र कुष्ठिकः कोऽपि विद्यते ॥ १९७ ॥
दासीमध्ये ततः सुप्ता तामतीत्य विभावरीम् । त्रैलोक्यसुन्दरी प्रातर्ययौ पितृगृहं निजम् ॥ १९८ ॥
सुबुद्धिरपि दुर्बुद्धिः सोऽथ मन्त्री महीपतेः । ययौ सकाशमन्येद्युश्चिन्ताश्याममुखः किल ॥ १९९ ॥
कृतप्रणतिमासीनमथैनं पृथिवीपतिः । हर्षस्थाने विषादः किं तवेत्यूचे कृताग्रहः ॥ २०० ॥
स जगाद महाराज! विचित्रा कर्म्मणां गतिः। अस्माकं मन्दभाग्यानां वशात्परिणता कथम् ॥ २०१ ॥
चिन्तयत्यन्यथा जीवो हर्षपूरितमानसः । विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा ॥ २०२ ॥
राजा प्रोवाच हे मन्त्रिन्! उक्त्वा स्वं दुःखकारणम्। मामप्यमुष्य दुःखस्य संविभागयुतं कुरु ॥ २०३ ॥
निःश्वस्य सचिवोऽप्यूचे देव! दैवं करोति तत् । यद्वक्तुमपि नो शक्यमश्रद्धेयं च शृण्वताम् ॥ २०४ ॥
स्वामिपादैः सप्रसादैर्दत्ता सूनोर्ममात्मजा । तस्यां तु परिणीतायां यद्वृत्तं तन्निशम्यताम् ॥ २०५ ॥
यादृग् राज्ञा स्वयं दृष्टस्तादृगेव सुतो मम । अधुना कुष्ठरोगाप्तो दृश्यते क्रियते नु किम् ॥ २०६ ॥
तच्छ्रुत्वा भूपतिर्दध्यौ सा नूनं मम नन्दिनी । अलक्षणा तत्प्रभावात् कुष्ठी जातोऽस्य पुत्रकः ॥ २०७ ॥
स्वकर्मफलभोक्तारः सर्वे जगति जन्तवः। अयं हि निश्चयनयो यद्यप्यस्ति जिनोदितः ॥ २०८ ॥
तथापि व्यवहारोऽयं यो हेतुः सुखदुःखयोः । स एव क्रियते लोके(कैः) भाजनं गुणदोषयोः ॥ २०९ ॥ ( युग्मम् )
स्वकर्म्मपरिणामेन जज्ञे पुत्रोऽस्य कुष्ठिकः । जाता च तन्निमित्तत्वात्पुत्री मे दोषभाजनम् ॥ २१० ॥

ऊचे च सचिवोऽनर्थमकार्षमहमीदृशम् । नादास्यं चेत्सुतां कुष्ठी नाभविष्यत्सुतोऽपि ते ॥ २११ ॥
अमात्योऽप्यब्रवीत् स्वामिन् ! हितकार्यं प्रकुर्वताम् । को दोषो भवतामत्र दोषो मत्कर्मणां पुनः ॥ २१२ ॥
अथोत्थाय ययौ मन्त्री सा तु त्रैलोक्यसुन्दरी । इष्टाऽप्यनिष्टा संजाता राज्ञः परिजनस्य च ॥ २१३ ॥
न कोऽप्येनामाललाप नाभ्यनन्दत् दृशाऽपि हि । एकत्र गुप्तगेहेऽस्थात् सा मातृगृहपृष्ठतः ॥ २१४ ॥
अचिन्तयच्च दुष्कर्म किं मया विहितं पुरा । येन क्वापि ययौ नंष्ट्वा परिणीतः स मे पतिः ॥ २१५ ॥
अन्यच्च लोकमध्येऽदः कलङ्कं समुपस्थितम् । किं करोमि क्व गच्छामि व्यसने पतिताऽस्मि हा ॥ २१६ ॥
एवं चिन्तां प्रकुर्वन्त्यास्तस्याश्चित्ते स्थितं तदा । भवितोज्जयिनीपुर्यां प्राप्तो नूनं स मे पतिः ॥ २१७ ॥
तदा च मोदकांस्तेन भुक्त्वा संजल्पितं किल । एते हि मोदका रम्याः किंत्ववन्त्या जलोचिताः ॥ २१८ ॥
ततः केनाप्युपायेन तत्र गच्छाम्यहं यदि । तदान्विष्य मिलित्वाऽस्य भवामि सुखभागिनी ॥ २१९ ॥
अथान्येद्युरुवाचाम्बां हे मातर्जनको मम । एकवारं यथा वाक्यं श्रृणोति त्वं तथा कुरु ॥ २२० ॥
तां दृष्ट्वाऽनादरपरामन्येद्युः सिंहनामकम् । सामन्तं ज्ञापयामास सा तमर्थं कृताञ्जलिः ॥ २२१ ॥
सोऽथ राजकुले गत्वा नृपं नत्वोपविश्य च । इति विज्ञापयामास प्रस्तावे वदतां वरः ॥ २२२ ॥
नृनाथ ! भवता मान्यचरी सम्प्रत्यसम्मता । वराकी वर्त्तते कष्टे मैषा त्रैलोक्यसुन्दरी ॥ २२३ ॥
अस्याः संमानदानादि दूरेऽस्त्वालपनं तथा । वाक्यश्रवणमात्रेण प्रसादोऽद्य विधीयताम् ॥ २२४ ॥

पार्थिवोऽप्यश्रुपूर्णाक्षः प्रोचे सिंह! पुराभवे । अनया विहितं किञ्चिदभ्याख्यानादि दुष्कृतम् ॥ २२५ ॥
तदियं तत्प्रभावेण कलङ्कितनूरभूत् । इष्टाऽप्यनिष्टतां प्राप्ता गाढमस्माकमप्यहो ॥ २२६ ॥
वाक्यं तदद्य यत्किञ्चिदनयाऽस्ति विवक्षितम् । तद् ब्रवीतु न रुष्टैरप्यात्मीयः परिभूयते ॥ २२७ ॥
ततस्तदनुमत्यैत्य तत्र त्रैलोक्यसुन्दरी । उवाच तात ! मे वेषं कुमारोचितमर्पय ॥ २२८ ॥
भूयो राजाऽब्रवीत् सिंहं किमिदं वक्त्यसौ वचः । सोऽवदद्देव! युक्तं हि क्रमोऽस्ति यदयं किल ॥ २२९ ॥
राज्ञां गृहेषु चेत्पुत्री गुरुकार्येण केनचित् । पुंवेषं याचते तस्यै दातव्यः स न संशयः ॥ २३० ॥
ततस्तदनुमत्याऽस्यै पुंवेषं पार्थिवो ददौ । आदिदेश च तं सिंहं तद्रक्षार्थं बलान्वितम् ॥ २३१ ॥
अभ्यधात्सुन्दरी भूयस्ताताज्ञा चेद्भवेत्तव । उज्जयिन्यां ततो यामि कारणेन गरीयसा ॥ २३२ ॥
कारणं कथयिष्यामि तज्जाते च समीहिते । अधुना कथिते तस्मिन् परिणामो न शोभनः ॥ २३३ ॥
हे पुत्रि! मम वंशस्य यथा नाभ्येति दूषणम्। तथा कार्य्यं त्वयेत्युक्त्वा विसृष्टा सा महीभुजा ॥ २३४ ॥
ततश्च सिंहसामन्तभूरिसैन्यसमन्विता । अखण्डितप्रयाणैः सा ययावुज्जयिनीं पुरीम् ॥ २३५ ॥
वैरिसिंहो नृपोऽथैवं शुश्राव जनतामुखात् । यच्चम्पायाः समागच्छत्यत्र नृपनन्दनः ॥ २३६ ॥
अभियानादिसन्मानस्वागतप्रश्नपूर्वकम् । पुरे प्रवेश्य तेनासावानीतो निजमन्दिरे ॥ २३७ ॥
पृष्टा चागमनार्थं सा प्रोवाच नगरीमिमाम् । द्रष्टुमाश्चर्यसंपूर्णामागतोऽस्मि कुतूहलात् ॥ २३८ ॥

ततः प्रोक्तो नरेन्द्रेण त्वया स्थेयं ममौकसि । सुरसुन्दरराजस्य मम गेहस्य नान्तरम् ॥ २३९ ॥
राजढौकितगेहे सा तस्थौ सबलवाहना । पत्तींश्चेत्यादिशत् स्वादुनीरस्थानं निरीक्ष्यताम् ॥ २४० ॥
पूर्वस्यां दिशि ते तत्तु ज्ञात्वा तस्यै न्यवेदयन् । तन्मार्गे कारितावासेऽवात्सीत् साऽथ नृपाज्ञया ॥ २४१ ॥
गच्छतो नीरपानार्थमन्यदाऽश्वानिरीक्ष्य तान् । सा दध्यौ मम तातस्य सत्का एते तुरङ्गमाः ॥ २४२ ॥
तेषामनुपदं प्रेष्य पुनर्भृत्यान् विवेद सा । भर्तुर्गृहाभिधानादिसर्वशुद्धिं मनस्विनी ॥ २४३ ॥
कलाभ्यासपरं तं च ज्ञात्वा त्रैलोक्यसुन्दरी । उवाच सिंहमेते हि कथं ग्राह्यास्तुरङ्गमाः ॥ २४४ ॥
सिंहोऽवादीत्त्वयाऽऽदिष्टोपायेनैव ततश्च सा । सच्छात्रं तं कलाचार्यं भोजनाय न्यमन्त्रयत् ॥ २४५ ॥
भोजनार्थमुपाध्याये तत्राऽऽयाते ददर्श सा । छात्रमध्ये स्वभर्त्तारं हृदयानन्ददायिनम् ॥ २४६ ॥
तस्मा आसनमात्मीयं स्थालं चादापयत्तदा । अकारयद्विशेषेण गौरवं भोजनादिषु ॥ २४७ ॥
ततो वस्त्राणि सर्वेभ्यो यथायुक्तमदत्त सा । तस्मै निजाङ्गलग्नं च वासोयुग्मं मनोहरम् ॥ २४८ ॥
उवाच च कलाचार्यमेतन्मध्यात् त्वदाज्ञया । यो जानाति स आख्यातु छात्रो मम कथानकम् ॥ २४९ ॥
सर्वैरपीर्ष्यया छात्रैर्निर्दिष्टः सोऽथ मङ्गलः । उपाध्यायगिरा धीमान् वक्तुमेवं प्रचक्रमे ॥ २५० ॥
चरितं कल्पितं किं वा कथयामि कथानकम् । साऽवदच्चरितं ब्रूहि, पर्याप्तं कल्पितेन भोः ॥ २५१ ॥
मङ्गलश्चिन्तयामास सैषा त्रैलोक्यसुन्दरी । चम्पापुर्यां भाटकेन परिणीता हि या मया ॥ २५२ ॥

केनाऽपि हेतुनेहागात् भूत्वा पुंवेषधारिणी । भवत्वेवं कथां तावत् कथयामि निजामहम् ॥ २५३ ॥
जगाद च कथा लोकप्रिया चित्रकरी भवेत् । सा च वृत्ता मदीयेऽङ्के तामाख्यामि निशम्यताम् ॥ २५४ ॥
ततश्चात्मकथा तेनादितस्तत्र प्रकाशिता । तावद्यावदमात्येन गृहान्निर्वासितोऽस्म्यहम् ॥ २५५ ॥
अत्रान्तरे कृतालीककोपा राजसुताऽवदत् । अमुं गृह्णीत गृह्णीत रे रे मिथ्याभिभाषिणम् ॥ २५६ ॥
इत्युक्ते पत्तयस्तस्यास्तद्ग्रहार्थं समुद्यताः । तयैव वारिताः शीघ्रं स चानीतो गृहान्तरे ॥ २५७ ॥
अथैनमासनेऽध्यास्य सिंहमूचे नृपात्मजा । अयि येनाहमूढाऽस्मि स एवायं प्रियो मम ॥ २५८ ॥
किमत्र युज्यते कर्तुमित्युक्तः सोऽपि चाब्रवीत् । अयं तव भवेद्भर्त्ता तदा सेव्योऽपशङ्कितम् ॥ २५९ ॥
सोचे सिंहं तवाद्यापि चित्ते यद्यस्ति संशयः । ततोऽस्य मन्दिरे गत्वा स्थालादीनि विलोकय ॥ २६० ॥
तद्विधातुमथो सिंहो धनदत्तगृहं ययौ । सोऽग्रे छात्रमुखात् पुत्रापायं श्रुत्वाऽऽकुलोऽभवत् ॥ २६१ ॥
पुत्रस्य गौरवोदन्तमाख्यायैतेन बोधितः । दर्शयामास च स्थालादीनि तद्भणितोऽस्य सः ॥ २६२ ॥
वध्वाः स्वरूपकथनेनाह्लाद्य श्रेष्ठिनं ततः । सिंहः पुना राजपुत्र्याः समीपं समुपाययौ ॥ २६३ ॥
सिंहेनानुमता साऽथ कृत्वा स्त्रीवेषमुद्भटम् । बभूव वल्लभा तस्य मङ्गलस्य महात्मनः ॥ २६४ ॥
ययौ च श्रेष्ठिनो वेश्म तत् युग्मं पार्थिवोऽपि तत् । आकार्य सर्ववृत्तान्तं पृष्ट्वा श्रुत्वा विसिष्मिये ॥ २६५ ॥
ततस्तत्रैव प्रासादे गत्वा राजाज्ञया पुनः । समं त्रैलोक्यसुन्दर्या विललास स मङ्गलः ॥ २६६ ॥

सुन्दर्या प्रेषितः सोऽथ सिंहः सबलवाहनः । लात्वा पुरुषवेषं तं ययौ चम्पापुरीं पुनः ॥ २६७ ॥
अमुना सर्ववृत्तान्ते कथिते जगतीपतिः । हृष्टोऽभाषिष्ट वत्साया अहो मे मतिकौशलम् ॥ २६८ ॥
अहो कुधीरमात्यस्य पापकर्मविधायिनः । येनादोषाऽपि मत्पुत्री सदोषा विहिता कथम् ! ॥ २६९ ॥
सिंहं पुनरपि प्रेष्योज्जयिन्यां निजनन्दिनीम् । सकान्तां स समानाय्य सच्चक्रे च यथाविधि ॥ २७० ॥
अमात्यं धारयित्वा तं मार्यमाणं महीभुजा । मङ्गलो मोचयामास गाढाभ्यर्थनया नृपात् ॥ २७१ ॥
जामातुरुपरोधेन मया मुक्तोऽसि पाप रे । इति विज्ञुत्ता राज्ञा सोऽथ निर्वासितः पुरात् ॥ २७२ ॥
अपुत्रः सोऽथ भूपालो मेने जामातरं सुतम् । तत्रैवानाययामास तन्मातापितरावपि ॥ २७३ ॥
अन्येद्युर्मन्त्रिसामन्तसंमत्योत्सवपूर्वकम् । मङ्गलकलशं राज्ये सुधीः स्थापयति स्म सः ॥ २७४ ॥
यशोभद्राभिधानानां सूरीणां चरणान्तिके । सुरसुन्दरभूपालः परिव्रज्यामुपाददे ॥ २७५ ॥
राज्ये संस्थापितः कोऽपि वणिग्जातिरितीर्ष्यया । प्रत्यन्तपार्थिवा राज्यं हर्तुं तस्योपतस्थिरे ॥ २७६ ॥
सेनया चतुरङ्गिण्या सहितेन महौजसा । दृढपुण्यप्रभावेण जिताः सर्वेऽपि तेन ते ॥ २७७ ॥
शान्तामित्रस्य तस्याथ राज्यं पालयतः सतः । पत्न्यां त्रैलोक्यसुन्दर्यां सुतोऽभूज्जयशेखरः ॥ २७८ ॥
स च राजा निजे देशे जिनचैत्यान्यनेकशः । जिनार्चारथयात्राश्चेत्यादिधर्ममकारयत् ॥ २७९ ॥
अन्यदोद्यानमायातं जयसिंहाभिधं गुरुम् । गत्वा ववन्दे भावेन सकलत्रः स भूपतिः ॥ २८० ॥

पप्रच्छ च यथा केन कर्मणा भगवन्मया । प्राप्ता विडम्बनोद्वाहे देव्या प्राप्तं च दूषणम् ॥ २८१ ॥
स्वरिरूचेऽथ भरते क्षेत्रेऽत्रैवास्ति पत्तनम् । क्षितिप्रतिष्ठितं नाम धनधान्यसमृद्धिमत् ॥ २८२ ॥
आसीत्तत्र सोमचन्द्राभिधानः कुलपुत्रकः । श्रीदेवी च तद्भार्याऽभूत् तौ मिथः प्रीतिशालिनौ ॥ २८३ ॥
सोमचन्द्रः प्रकृत्यासावार्जवादिगुणान्वितः । मान्यः समस्तलोकानां तस्य भार्या च तादृशी ॥ २८४ ॥
इतस्तत्रैव नगरे जिनदेवाभिधः सुधीः । श्रावकोऽभूत्समं तेन तस्य मैत्री निरन्तरा ॥ २८५ ॥
जिनदेवो धनाकाङ्क्षी धने सत्यपि सोऽन्यदा । देशान्तरं गन्तुकामो निजं मित्रमभाषत ॥ २८६ ॥
धनायाहं गमिष्यामि मयि तत्र गते त्वया । मामकीनं धनं सप्तक्षेत्र्यां वाप्यं यथाविधि ॥ २८७ ॥
तत्रापि तस्य पुण्यस्य षष्ठांशो भवतादिति । दीनाराणां सहस्राणि दशैतस्यार्पयत्करे ॥ २८८ ॥
गते देशान्तरे तस्मिन् सोमचन्द्रोऽथ तत्सुहृत् । व्ययति स्म यथास्थानं तद्द्रव्यं शुद्धचेतसा ॥ २८९ ॥
आत्मीयमपि तस्यानुसारेणायं व्यधाद्वृषम्[1] । तज्ज्ञात्वा तस्य भार्याऽपि धर्मं भेजेऽनुमोदनात् ॥ २९० ॥
तस्मिन्नेव पुरे तस्याः सखी भद्राऽभिधाऽभवत् । नन्दनस्य श्रेष्ठिनः पुत्री देवदत्तस्य गेहिनी ॥ २९१ ॥
देवदत्तः स कालेन कर्मदोषेण केनचित् । कुष्ठी जज्ञे ततो भद्रा तत्प्रिया विषसाद सा ॥ २९२ ॥
पुरः सख्यास्तयाऽन्येद्युस्तत्स्वरूपं निवेदितम् । तया च हासपरया भणिता सा ससंभ्रमम् ॥ २९३ ॥

१ धर्मम्.

हले त्वत्सङ्गदोषेण कुष्ठी जज्ञे पतिस्तव । ममापि दृष्टिं मा गास्त्वमतोऽपसर दूरतः ॥ २९४ ॥
सा तेन वचसा दूना तस्थौ श्याममुखी क्षणम् । हास्यमेतदिति प्रोच्य तयैवाह्लादिता ततः ॥ २९५ ॥
स सोमचन्द्रः श्रीदेव्या तया सार्द्धं च भार्यया । साधुसंसर्गतः प्राप्तं श्राद्धधर्ममपालयत् ॥ २९६ ॥
अन्ते समाधिना मृत्वा सौधर्मे त्रिदशाविमौ । दम्पती समजायेतां पञ्चपल्योपमस्थिती ॥ २९७ ॥
सौधर्मात्सोमचन्द्रात्मा च्युत्वाऽभूत् भूपतिर्भवान् । जीवश्च्युत्वा च श्रीदेव्या जज्ञे त्रैलोक्यसुन्दरी ॥ २९८ ॥
परद्रव्येण यत्पुण्यं भवतोपार्जितं तदा । तदेषा भाटकेनैव परिणीता नृपात्मजा ॥ २९९ ॥
हास्येनापि वयस्यायै यद्दत्तमनया पुरा । तदेतस्यामिह भवे कलङ्कः समभूद् ध्रुवम् ॥ ३०० ॥
तदाकर्ण्य विरक्तौ तौ दत्त्वा राज्यं स्वसूनवे । राजा राज्ञी च प्रव्रज्यां पार्श्वे जगृहतुर्गुरोः ॥ ३०१ ॥
क्रमेण सोऽथ राजर्षिः सर्वसिद्धान्तपारगः । स्थापितो गुरुणा सूरिपदे परिकरावृतः ॥ ३०२ ॥
त्रैलोक्यसुन्दरी साध्वी स्थापिता च प्रवर्त्तिनी । विपद्योभौ च तावन्ते ब्रह्मलोकमुपेयतुः ॥ ३०३ ॥
ततश्च्युतौ मनुष्यत्वं प्राप्यानिमिषतां पुनः । एवं भवे तृतीये तौ प्रापतुः पदमव्ययम् ॥ ३०४ ॥

॥ इति मङ्गलकलशकथानकम् ॥

---

१ देवत्वम्.

श्रुत्वा धर्मकथामेतां प्रतिबुद्धो महीपतिः । गुरोः पार्श्वे स सम्यक्त्वं श्राद्धधर्ममुपाददे ॥ ३०५ ॥
विजहारान्यतः सूरिः श्रीषेणनृपतिः पुनः । राज्यं तज्जैनधर्मं च पालयामास यत्नतः ॥ ३०६ ॥
राज्ञ एवोपदेशेन तत्प्रिया साऽभिनन्दिता । भेजे धर्मं विशेषेण भद्रकत्वं तथाऽपरे ॥ ३०७ ॥
इतश्च बलभूपेन कौशाम्बीस्वामिनाऽन्यदा । श्रीमतीकुक्षिसम्भूता श्रीकान्ता तनया निजा ॥ ३०८ ॥
श्रीषेणतनयस्येन्दुषेणस्यार्थे स्वयंवरा । प्रेषिता नगरे तत्र परिवारसमन्विता ॥ ३०९ ॥ ( युग्मम् )
रूपातिशयसम्पन्नां तां दृष्ट्वा नवयौवनाम् । उभावपि परिणेतुकामौ तौ नृपनन्दनौ ॥ ३१० ॥
अयुध्येतां मिथो देवरमणोद्यानमध्यगौ । सन्नद्धगाढकवचौ वन्येभाविव दारुणौ ॥ ३११ ॥ ( युग्मम् )
स श्रीषेणनृपः स्वल्पकषायः स्वच्छमानसः । जिनोक्त्या भावितोऽत्यन्तं क्षमासारः प्रियंवदः ॥ ३१२ ॥
वैरायमाणौ तावित्थं निरीक्ष्य निजनन्दनौ । निवारयितुमनलम्भूष्णुरेवं व्यचिन्तयत् ॥ ३१३ ॥ ( युग्मम् )
अहो विषयलाम्पट्यं वैचित्र्यं कर्मणामहो । रागद्वेषावहो शत्रू अहो मोहविजृम्भितम् ॥ ३१४ ॥
महाप्राज्ञौ महात्मानौ भूत्वाऽपि मम नन्दनौ । यदेतावेककामिन्याः कृते विदधतुः कलिम् ॥ ३१५ ॥
अनयोर्दुश्चरित्रेण लज्जमानः सभान्तरे । मुखं नगरमुख्यानां दर्शयिष्याम्यहं कथम् ॥ ३१६ ॥
तदेतस्यामवस्थायां मरणं शरणं मम । इत्यभिप्रायमात्मीयं देव्योः कथयति स्म सः ॥ ३१७ ॥
ततस्ताभ्यां सममसौ स्मृतपञ्चनमस्कृतिः । विषमिश्रोत्पलाघ्राणप्रयोगेण व्यपद्यत ॥ ३१८ ॥

सत्यभामाऽपि तेनैव विधिना जीवितं जहौ । बिभ्यती कपिलस्यास्य दुष्टशीलस्य सङ्गमात् ॥ ३१९ ॥

जम्बूद्वीपविदेहस्यान्तर्वर्त्युत्तरसंज्ञिते । कुरुक्षेत्रेऽभवञ्जीवास्ते चत्वारोऽपि युग्मिनः ॥ ३२० ॥

श्रीषेणाद्यप्रियाजीवावाद्यं मिथुनकं तथा । द्वितीयं मिथुनं सिंहनन्दितासत्यभामयोः ॥ ३२१ ॥

इतस्तयोरिन्दुबिन्दुषेणयोर्युद्ध्यमानयोः । एकस्तत्र कुतोऽप्येत्य चारणर्षिरदोऽवदत् ॥ ३२२ ॥

उत्तमान्वयसंभूतौ स्वयं चरमविग्रहौ । कुर्वाणावीदृशं कर्म लज्जेथे किं न भो युवाम् ? ॥ ३२३ ॥

दृष्ट्वाऽसमञ्जसमिदं सभार्यो युवयोः पिता । विषाघ्राणप्रयोगेण मरणं समवाप सः ॥ ३२४ ॥

ययोरुपकृतस्येह नास्ति सीमा महीतले । तयोः पित्रोर्विनाशाय जातौ धिग्! दुःसुतौ युवाम् ॥ ३२५ ॥

तदियं मोहगोपीया दामिनी वृषदामिनी । त्यज्यतां कामिनी स्वैरगामिनी कलहावनी ॥ ३२६ ॥

इति तद्वचसा बुद्धौ त्यक्तयुद्धौ शुभाशयौ । तौ तं नत्वा मुनिमेवमुपाश्लोकयतां[1] मुदा ॥ ३२७ ॥

त्वं गुरुस्त्वं पिता माता त्वं बन्धुः स्निग्ध आवयोः । येनावां रक्षितौ रागद्वेषोपार्जितदुर्गतेः ॥ ३२८ ॥

विसृज्य महिलामेतां तौ गतौ निजमन्दिरम् । पित्रादीनां प्रेतकार्यं सर्वं विदधतुस्ततः ॥ ३२९ ॥

दत्त्वाऽथ गोत्रिणे राज्यं पार्श्वे धर्मरुचेर्मुनेः । नृणां चतुःसहस्रैस्तौ सार्द्धं जगृहतुर्व्रतम् ॥ ३३० ॥

पालयित्वा चिरं दीक्षां कृत्वा च विविधं तपः । उत्पाद्य केवलं ज्ञानं तौ कैवल्यमुपेयतुः ॥ ३३१ ॥

१ अस्तुवाताम्.

श्रीषेणमुख्या मिथुनद्वयी सा भुक्त्वोत्तरप्राग्यकुरौ सुखानि ।
पश्चात्तु सौधर्ममियाय कल्पं तत्रापि पल्यत्रितयायुरासीत् ॥ ३३२ ॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरित्रे
पूर्वभवत्रयवर्णनो नाम प्रथमः प्रस्तावः ।

## द्वितीयः प्रस्तावः

इतश्चात्रैव वैताढ्य उत्तरश्रेणिभूषणम् । रथनूपुरचक्रवालाख्यमस्ति पुरं वरम् ॥ १ ॥
विद्याधरेन्द्रो ज्वलनजटी तत्राभवद्बली । स्वाहा वायुमखस्येव वायुवेगा च तत्प्रिया ॥ २ ॥
तत्कुक्षिसंभवो वैरिवर्गोल्बणतमोरविः । तस्यार्ककीर्त्तिरित्यासीत्पुत्रोऽर्कस्वप्नसूचितः ॥ ३ ॥
समधीतकलः सोऽथ विनयादिगुणान्वितः । युवराजपदेऽस्थापि पित्रा संप्राप्तयौवनः ॥ ४ ॥
पुत्री तदनुजा चन्द्रलेखास्वप्नोपसूचिता । आसीत् स्वयंप्रभानाम्नी स्वातन्त्र्यरहिता परम् ॥ ५ ॥
तत्राभिनन्दनजगन्नन्दनौ मुनिपुङ्गवौ । अन्येद्युरागतौ व्योमचारिणौ पापहारिणौ ॥ ६ ॥
कन्या स्वयंप्रभा सा तु श्रुत्वा धर्मं तदन्तिके । बभूव श्राविका शुद्धसामाचारी शुभाशया ॥ ७ ॥
साधू विजह्रतुस्तौ क्ष्मां कन्या सा च स्वयंप्रभा । प्राप्ते पर्वदिनेऽन्येद्युः प्रपेदे पौषधव्रतम् ॥ ८ ॥
तस्य पारणके जैनबिम्बमभ्यर्च्य वेश्मगम् । तच्छेषामर्पयामास गत्वा तातस्य सन्निधौ ॥ ९ ॥
शीर्षे शेषां तथोत्सङ्गे पुत्रीमाधाय भूपतिः । तद्रूपवयसी वीक्ष्य चेतस्येवमचिन्तयत् ॥ १० ॥
वरप्रदानयोग्येयं संजाता मम कन्यका । तद्भर्ता कोऽनुरूपोऽस्या भविष्यति नभश्चरः ॥ ११ ॥

१ अग्नेः. २ रूपातिशयशालिनी इति वा पाठः.

कुरु पारणकं तावत् पुत्रीत्युक्त्वा विसृज्य ताम् । आकार्य मन्त्रिणश्चात्मचिन्तितं तदजिज्ञपत् ॥ १२ ॥
उवाच सुश्रुतस्तेषु देव ! रत्नपुरे वरे । मयूरग्रीवस्तत्पुत्रोऽश्वग्रीवोऽस्ति खगेश्वरः ॥ १३ ॥
भरतार्द्धमहीभर्त्ता युक्तः पुत्र्या वरो हि सः । बहुश्रुतोऽवदच्चैतन्न युक्तं प्रतिभाति मे ॥ १४ ॥
यतोऽयं वर्त्तते वृद्धस्तदन्यः कोऽपि रूपवान् । वयःशीलकुलैस्तुल्यो वरः पुत्र्याः करिष्यते ॥ १५ ॥
ततो लब्धावकाशेन प्रोचे सुमतिमन्त्रिणा । यथा देवोत्तरश्रेण्यां पुरी नाम प्रभङ्करा ॥ १६ ॥
तत्र मेघघनो राजा तद्भार्या मेघमालिनी । पुत्रो विद्युत्प्रभः पुत्री ज्योतिर्माला तयोर्वरा ॥ १७ ॥
योग्यो विद्युत्प्रभः सोऽस्या युष्मत्पुत्र्याः पतिस्तथा। ज्योतिर्माला कुमारस्य पत्नी भवितुमर्हति ॥ १८ ॥
भणितं च ततोऽन्येन श्रुतसागरमन्त्रिणा । देवास्या युज्यते कर्तुं कन्यकायाः स्वयंवरः ॥ १९ ॥
श्रुत्वेदं मन्त्रणं राजा मन्त्रिणो विससर्ज तान् । संभिन्नश्रोतःसंज्ञं चापृच्छन्नैमित्तिकोत्तमम् ॥ २० ॥
नैमित्तिकोऽवदद्राजन् ! यौ पोतनपुरेशितुः । पुत्रौ प्रजापते राज्ञस्त्रिपृष्ठाचलसंज्ञकौ ॥ २१ ॥
तावत्र भरते विष्णुबलभद्रौ भविष्यतः । प्रतिविष्णुममुं चाश्वग्रीवं व्यापादयिष्यतः ॥ २२ ॥
इति साधुमुखाद्वाक्यं मया श्रुतमतः परम् । स्वज्ञानेनापि विज्ञाय कथयामि महीपते ! ॥ २३ ॥
तुभ्यं विद्याधरेशत्वं स त्रिपृष्ठः प्रदास्यति । एषा स्वयंप्रभा चाग्रमहिषी तस्य भाविनी ॥ २४ ॥
ततश्च परितुष्टोऽसौ राजाऽभ्यर्च्य विसृज्य तम् । प्रेषयामास दूतं च मारीचिं पोतने पुरे ॥ २५ ॥

गत्वा नत्वाऽमुनेत्युक्तः प्रजापतिनरेश्वरः । यदस्माकं विभुर्विद्याधरेन्द्रो ज्वलनाभिधः ॥ २६ ॥
कन्यां स्वयंप्रभानाम्नीं त्रिपृष्ठाय सुताय ते। प्रभो! दित्सति तेनाहं प्रेषितोऽस्मि तवान्तिकम् ॥ २७ ॥
ऊचे प्रजापतिः कार्यमेतत् बहुमतं मम । वलित्वाऽऽगत्य दूतोऽपि तदाचख्यौ स्वभूभुजे ॥ २८ ॥
इतोऽश्वग्रीवभूपेनाश्वबिन्दुर्दृष्टप्रत्ययः । पृष्टो नैमित्तिको मृत्युर्मम भावी कुतो न्विति ॥ २९ ॥
सोऽवदच्चण्डवेगं ते यो दूतं धर्षयिष्यति । शालिक्षेत्रापकर्त्तारं हनिष्यति हरिं[1] च यः ॥ ३० ॥
स ते हन्तेति श्रुत्वा तं सत्कृत्य व्यसृजन्नृपः । पुत्रौ प्रजापतेः क्रूराविति लोकाद्विवेद च ॥ ३१ ॥
तेनाथ प्रेषितो राज्ञा ययौ दूतोऽस्खलद्गतिः । प्रजापतिनृपास्थाने भवत्प्रेक्षणनिर्भरे ॥ ३२ ॥
सद्यः प्रेक्षणरङ्गस्य भङ्गं दृष्ट्वा कुमारकौ । त्रिपृष्ठाचलनामानौ तस्मै चुकुपतुर्भृशम् ॥ ३३ ॥
दूतः सत्कृत्य राज्ञाऽसौ विसृष्टश्चलितश्च सः । त्रिपृष्ठाचलयोरग्रे कथितस्तत्पदातिभिः ॥ ३४ ॥
ताभ्यां गत्वा मुष्टिपार्ष्णिप्रहारेण निपीडितः । तद्रङ्गभङ्गाविनयं स्माग्यद्भ्यां मुहुर्मुहुः ॥ ३५ ॥
श्रुत्वा प्रजापती राजा सुतयोस्तद्विचेष्टितम् । तं दूतं क्षमयामास सच्चक्रे च विशेषतः ॥ ३६ ॥
तद्दूतधर्षणं चारमुखेनाश्वनृपोऽशृणोत् । पश्चात् स चण्डवेगोऽपि तत्समीपमुपागतः ॥ ३७ ॥
ज्ञातोदन्तं नृपं ज्ञात्वा सोऽथ तस्मै यथातथम् । आख्याय पुनरप्यूचे देवेदं बालचेष्टितम् ॥ ३८ ॥

---
१ सिहम्.

प्रजापतिर्नृपस्त्वाज्ञां न ते लङ्घयति क्वचित्। तदेतस्योपरि क्रोधो न कर्त्तव्यो मनागपि ॥ ३९ ॥
शालिक्षेत्राण्यथो तस्य वारंवारेण पार्थिवैः। रक्ष्यन्ते स्म मृगारातेः प्रतिवर्षमुपद्रवात् ॥ ४० ॥
तस्मिन् वर्षे च तद्रक्षामन्यद्वृतमुखेन सः। प्रजापतिमवारेऽप्यकारयत् क्रुद्धमानसः ॥ ४१ ॥
पितरं प्रतिषिध्याथ कुमारौ बलशालिनौ। जग्मतुस्तत्र यत्रास्ति शालिक्षेत्रप्रदेशभूः ॥ ४२ ॥
शशंसुर्विस्मितास्तेऽथ शालिगोपकपूरुषाः। रक्ष्यन्ते शालयो ह्येते नृपैः सबलवाहनैः ॥ ४३ ॥
युवां कावपि वर्त्तेथे नवीनौ शालिरक्षकौ। निःसन्नाहौ समायातौ यौ सैन्यपरिवर्जितौ ॥ ४४ ॥
ऊचे त्रिपृष्ठो भोस्तावत्स सिंहो दर्शयतां मम। यथा तद्रक्षणक्लेशं सर्वथा वारयाम्यहम् ॥ ४५ ॥
ततस्तैर्दर्शितस्तस्य सिंहो गिरिगुहाशयः। ययौ च तद्गुहाद्वारे त्रिपृष्ठोऽपि रथस्थितः ॥ ४६ ॥
रथचीत्कारनादेन जजागार स केशरी। प्रसारिताऽस्यकुहरो गुहाया निर्जगाम च ॥ ४७ ॥
पदातिं तं समालोक्य कुमारोऽपि तथाऽभवत्। मुमोच खड्गरत्नं च तं निरीक्ष्य निरायुधम् ॥ ४८ ॥
कुमारचेष्टितं दृष्ट्वा दध्यौ सिंहोऽपि विस्मितः। अहो आश्चर्यमेकं तत् यदेकोऽयमिहाऽऽगतः ॥ ४९ ॥
द्वितीयं पादचारित्वं तृतीयं खड्गमोचनम्। तदस्य दर्शयाम्यद्यावज्ञायाः फलमात्मनः ॥ ५० ॥
इत्युत्पत्याम्बरे रोषात् पतितो मस्तकोपरि। प्रचिक्षेप कुमारो द्राक् करौ केशरिणो मुखे ॥ ५१ ॥
एकेन पाणिनाऽऽदाय तस्यौष्ठमपरेण तु। अधरं दारयामास तं ततो जीर्णपोत(वस्त्र)वत् ॥ ५२ ॥

द्विधा कृत्वा विनिक्षिप्तं पृथिव्यां तत्कलेवरम् । स्फुरत्तदपि रोषेण प्रोचे सारथिनांजसा ॥ ५३ ॥
नरसिंहकुमारेऽयं पशुसिंहो भवान् पुनः । हतोऽस्मि सिंह ! सिंहेनाऽनुशयं भोः करोषि किम् ? ॥ ५४ ॥
प्रीतोऽपि वचसा तेन स मृत्वा नरकं गतः । प्राजापत्योऽपि तच्चर्माश्वग्रीवस्यार्पयत्तदा ॥ ५५ ॥
तत्रैवादिष्टस्तत्रस्थविद्याधरनरेश्वरः । इति चाकथयद्यत्त्वं भुङ्क्ष्वान्धो मत्प्रसादतः ॥ ५६ ॥ ( युग्मम् )
दृष्ट्वाऽऽकर्ण्य च तद्वाजिग्रीवोऽप्येवमचिन्तयत् । अलंभूष्णुर्ममाप्येष दोर्बलेनामुना खलु ॥ ५७ ॥
ज्ञात्वोदन्तं च कन्याया ज्वलनात्तामयाचत । सोऽपि कृत्वोत्तरं किञ्चित् तत्पुंसां तमबोधयत् ॥ ५८ ॥
नीत्वा प्रच्छन्नमेतां च पुरे पोतननामनि । सांवत्सरोपदिष्टेन त्रिपृष्ठेनोदवाहयत् ॥ ५९ ॥
हरिश्मश्रुरथामात्यः परिणीतां स्वयंप्रभाम् । श्रुत्वा कुतश्चित्कथयामासाश्वग्रीवभूभुजे ॥ ६० ॥
तेनायं कुपितेनैवमादिष्टो यदिहाऽऽनय । तौ त्रिपृष्ठाचलौ बद्ध्वा खेचरं तं च मायिनम् ॥ ६१ ॥
प्रेषितश्चामुना दूतः स गत्वा पोतने पुरे । ज्वलनं प्रत्यभाषिष्ट परिष्ठवचनोद्धतः ॥ ६२ ॥
ननु भोः कन्यकारत्नं ढौकय स्वामिनो मम । किं न जानासि रत्नानां प्रभुरेव गतिर्भवेत् ॥ ६३ ॥
ज्वलनोऽप्यब्रवीद् दूत ! प्रदत्ता कन्यका मया । त्रिपृष्ठाय तदेतस्या एष रक्षाकरोऽधुना ॥ ६४ ॥
ऊचे त्रिपृष्ठो रे दूत ! परिणीता मया ह्यसौ । इमामिच्छन् स ते स्वामी निर्विण्णो जीवितान्नु किम् ॥ ६५ ॥

१ ओदनम्.

तद्दूतवचनात् श्रुत्वाऽश्वग्रीवः क्रोधदुर्द्धरः । विद्याधरभटान् प्रैषीत हन्तुं तानात्मनो द्विषः ॥ ६६ ॥
ते पोतनपुरं प्राप्ताः प्रहरन्तोऽर्थनोदिताः[1] । लीलयैव जिताः सर्वे त्रिपृष्ठेन महौजसा ॥ ६७ ॥
प्रोक्ताश्चेदं यथाऽऽख्येयं खरग्रीवस्य तस्य भोः । चेच्छरोऽसि तदाश्चेहि रथावर्त्तेऽस्तु नौ समित् ॥ ६८ ॥
तैश्च गत्वा तथाऽऽख्याते स विद्याधरसैन्ययुक् । तत्राऽऽययौ त्रिपृष्ठश्च ससैन्य श्वशुरालये (चले) ॥ ६९ ॥
ततोऽग्रसैन्ययोर्युद्धे जाते विद्याधरैः कृताः । रक्षोव्याघ्रपिशाचाद्या हिंस्राः परविनाशकाः ॥ ७० ॥
त्रिपृष्ठसेना तद्भीता पलायिष्ट ततः स्वयम् । डुढौके खेचरैर्योद्धुं रथारूढोऽचलानुजः ॥ ७१ ॥
शङ्खं च पूरयामास तन्नादेन निजं बलम् । युद्धसज्जं पुनरभूत परानीकं च विद्रुतम् ॥ ७२ ॥
डुढौके स्वयमश्वोऽपि योद्धुं स्यन्दनसंस्थितः । त्रिपृष्ठेन समं सिंहः शरभेणेव मन्त्वरम् ॥ ७३ ॥
दिव्यास्त्रैर्युयुधे सोऽथ त्रिपृष्ठस्तानि लीलया । सर्वाण्युच्छेदयामास तमांसीव विकर्त्तनः[2] ॥ ७४ ॥
ततश्च सोऽमुचच्चक्रं त्रिपृष्ठाय भयावहम् । तच्च वक्षसि तुम्बेन प्राजापत्यमताडयत् ॥ ७५ ॥
स्थितं तत्रैव तदथोपादाय तमुवाच सः । कृत्वा मम नमस्कारं रे स्वमारं[3] निवारय ॥ ७६ ॥
अश्वग्रीवोऽवदन्मृत्युर्वरं वैरिप्रणामतः । तन्मुञ्च चक्रं को वक्रं दैवं नामानुकूलयेत् ॥ ७७ ॥
ततो मुक्तं त्रिपृष्ठेन छित्त्वा तस्य शिरोधराम् । पुनरगात त्रिपृष्ठस्य समीपेऽसौ(दः) सुदर्शनम् ॥ ७८ ॥

१ स्वामिप्रेरिताः. २ सूर्यः. ३ मारिम्.

प्रथमो वासुदेवोऽयमुत्पन्न इति वादिनः । उपरिष्टात् त्रिपृष्ठस्य पुष्पवृष्टिं व्यधुः सुराः ॥ ७९ ॥
ततोऽसौ साधयामास भरतार्द्धमहीपतीन् । बभ्रे कोटिशिलां वामभुजाग्रेण च छत्रवत् ॥ ८० ॥
वासुदेवाभिषेकोऽस्य चक्रे भूचरखेचरैः । तेन चाकारि ज्वलनजटी विद्याधराधिपः ॥ ८१ ॥
अर्ककीर्तेस्तथा ज्योतिर्माला विद्युत्प्रभस्वसा । बभूव गेहिनी रम्या त्रिपृष्ठस्यैव शासनात् ॥ ८२ ॥
ययौ निजपुरं सोऽथ तस्य चात्यन्तवल्लभा । षोडशस्त्रीसहस्राणां मुख्या साऽभूत् स्वयंप्रभा ॥ ८३ ॥
इतः श्रीषेणजीवोऽसौ च्युत्वा सौधर्मकल्पतः । ज्योतिर्मालाकुक्षिसरस्यवातारीन्मरालवत् ॥ ८४ ॥
दृष्टोऽमितप्रभाव्याप्तपूरस्वप्नोऽन्वया तदा । जज्ञे च समये पुत्रोऽमिततेजोऽभिधोदितः ॥ ८५ ॥
अर्ककीर्तिः पिता सोऽथ परिव्रज्यामुपाददे । अभिनन्दनाभिधानस्यानगारस्य सन्निधौ ॥ ८६ ॥
जीवोऽथ सत्यभामायाश्च्युत्वा प्रथमकल्पतः । ज्योतिर्मालोदरे जाताऽर्ककीर्तेस्तनयाऽभवत् ॥ ८७ ॥
सुताराराजनीस्वप्नदर्शनात् साऽभिधीयते । सुतारेति सुताराक्षी चारुतारुण्यशोभिता ॥ ८८ ॥
जीवोऽभिनन्दितायाश्च स्वर्गाच्च्युत्वाऽऽयुपः क्षये । देव्यां स्वयंप्रभानाम्न्यां त्रिपृष्ठस्य सुतोऽभवत् ॥ ८९ ॥
अभिषेको महालक्ष्म्या दृष्टः स्वप्ने यदम्बया । तेन श्रीविजयो नाम तस्य जज्ञे मनोरमम् ॥ ९० ॥
अपरोऽपि त्रिपृष्ठस्य विष्णोरजनि नन्दनः । स्वयंप्रभाप्रसूतो विजयभद्रोऽभिधानतः ॥ ९१ ॥
स सिंहनन्दिताजीवः सौधर्मत्रिदिवश्च्युतः । जज्ञे ज्योतिःप्रभानाम्नी त्रिपृष्ठस्यैव नन्दिनी ॥ ९२ ॥

अकार्यत्यन्तचार्वङ्ग्याः कृते तस्याः स्वयंवरः । विष्णुना दूतवदनैराहूताः सुमहीभुजः ॥ ९३ ॥
अथार्ककीर्त्तिनाऽमात्यः प्रेषितः केशवान्तिकम् । स एत्य विष्णुमानम्य व्याजहार कृताञ्जलिः ॥ ९४ ॥
देव ! मत्स्वामिनः पुत्री सुताराऽपि निजेच्छया । वृणुते वरमत्रैव ममागत्य त्वदाज्ञया ॥ ९५ ॥
हृष्टोऽभाषिष्ट गोविन्दो भवत्वेवं किमत्र भोः । वाच्यं यदर्ककीर्त्तेश्च ममावामस्य नान्तरम् ॥ ९६ ॥
ततः पुत्रीमुपादायामिततेजःसुतान्वितः । तत्रायययावर्ककीर्तिः पूजितो विष्णुनाऽथ सः ॥ ९७ ॥
अकारयत् त्रिपृष्ठोऽथ स्वयंवरणमण्डपम् । मञ्चाननेकशस्तत्र नामाङ्कान्यासनानि च ॥ ९८ ॥
ततस्ते पार्थिवास्तेष्वासनेषु न्यषदन् क्रमात् । तेषां च मध्ये तौ विष्णुबलभद्रौ निषेदतुः ॥ ९९ ॥
अत्रान्तरे कृतस्नाने श्वेतवासोऽतिशोभने । श्वेताङ्गरागपुष्पाढ्ये विशालशिबिकास्थिते ॥ १०० ॥
चामराभ्यां वीज्यमाने देव्याविव धरागते । ज्योतिःप्रभासुतारे ते कन्ये तत्रेयतुः शुभे ॥ १०१ ॥ (युग्मम्)
शिबिकायाः समुत्तीर्य स्वयंवरसदोगने । ते प्रेक्षांचक्रिरे भूपाः पुराऽदृष्टाङ्गना इव ॥ १०२ ॥
निरीक्ष्य निखिलान् राज्ञोऽमिततेजोगलेऽक्षिपत् । ज्योतिःप्रभा वरमालामन्या श्रीविजयस्य तु ॥ १०३ ॥
अहो साधु वृतं साधु वृतमित्युच्चकैर्जगुः । हृष्टचित्ता महीपाला भूचराः खेचरा अपि ॥ १०४ ॥
त्रिपृष्ठश्चार्ककीर्त्तिश्च तान्सत्कृत्य विसृज्य च । कारयामासतुः प्रीतौ विवाहं स्वस्वकन्ययोः ॥ १०५ ॥
अर्ककीर्तिरथो ज्योतिःप्रभामादाय स्वस्नुषाम् । मुक्त्वा सुतारां ससुतोऽप्याजगाम निजं पुरम् ॥ १०६ ॥

विरक्तचित्तः सोऽन्येद्युर्दत्त्वा राज्यं स्वसूनवे । पितुर्दीक्षाप्रदस्यैव मुनेः पार्श्वेऽग्रहीद्व्रतम् ॥ १०७ ॥
त्रिपृष्ठे वासुदेवेऽथ परलोकं गते सति । सूरिः सुवर्णकुम्भाख्यः पोतनेऽन्येद्युरायया ॥ १०८ ॥
श्रेयांसजिनशिष्यं तं परिवारसमन्वितम् । प्रययौ नन्तुमुद्याने बलभद्रोऽचलाभिधः ॥ १०९ ॥
तत्राचार्यं नमस्कृत्योपविश्य च यथास्थिति । शुश्राव देशनां तस्य मोहनिद्राविनाशिनीम् ॥ ११० ॥
पप्रच्छावसरे चैवं भगवन् ! विश्वविश्रुतः । मत्कनिष्ठो गुणैर्ज्येष्ठस्त्रिपृष्ठः कां गतिं गतः ? ॥ १११ ॥
सूरिरूचे स नृशंसः पञ्चेन्द्रियवधे रतः । महारम्भपरो मृत्वा सप्तमं नरकं ययौ ॥ ११२ ॥
तच्छ्रुत्वा विललापैवमचलः स्नेहमोहितः । हा विश्ववीर ! हा धीर ! किं तेऽभूद्गतिरीदृशी ? ॥ ११३ ॥
गुरुणोक्तं मा विषीद शृणु पूर्वजिनोदितम् । यदस्य चरमो जीवो भविताऽत्र जिनेश्वरः ॥ ११४ ॥
ततः श्रीविजयं राज्ये यौवराज्येऽपरं सुतम् । निवेश्य बलभद्रोऽस्य गुरोः पार्श्वेऽग्रहीद्व्रतम् ॥ ११५ ॥
राज्ञः श्रीविजयस्याथ राज्यं पालयतः सतः । सभास्थस्यान्यदाऽऽगत्य प्रतीहारो व्यजिज्ञपत् ॥ ११६ ॥
प्रभो ! त्वन्मन्दिरद्वारे त्वद्दर्शनसमुत्सुकः । अस्ति नैमित्तिको नाम स आयातु प्रयातु वा ॥ ११७ ॥
ततो राज्ञोऽनुमत्याऽसौ तेनानीतः सभान्तरे । दत्त्वाऽऽशीर्वचनं तस्मै यथासनमुपाविशत् ॥ ११८ ॥
राजा प्रोवाच ज्ञानेन यत्पश्यसि शुभाशुभम् । तत्त्वं ब्रूहि निमित्तज्ञ ! करे यत्तेऽस्ति पुस्तिका ॥ ११९ ॥
सोऽवदद्देव ! पश्यामि यदहं निजब्रह्मणा । तद्वक्तुमपि नो शक्यं कथ्यते तु त्वदाज्ञया ॥ १२० ॥

' यदितः सप्तमे घस्रे पोतनाधिपतेर्ननु । निपतिष्यत्यचिरांशुः शीर्षोपरि न संशयः ॥ १२१ ॥
तच्छ्रुत्वा परिषद्व्याहतेवाऽभूत्सुदुःखिता । भणितश्च कुमारेण गाढकोपपरेण सः ॥ १२२ ॥
पतिष्यति यदा विद्युत् रे पोतनपुरेशितुः । पतिष्यति तदा शीर्षे त्वदीये किं नु दुर्मते ! ॥ १२३ ॥
नैमित्तिकोऽवदन्मह्यं त्वं कुप्यसि कुमार ! किम् ? । यदत्र दृष्टं संज्ञाने भवेत्तज्जातु नान्यथा ॥ १२४ ॥
वस्त्राभरणरत्नानां वृष्टिर्मम भविष्यति । गङ्गा प्रोचे त्वया ह्येतन्निमित्तं शिक्षितं कुतः ॥ १२५ ॥
सोऽब्रवीद्बलदेवस्य दीक्षाकाले मयाऽपि हि । प्रव्रज्या प्रतिपन्नाऽऽसीत्कियत्कालं च पालिता ॥ १२६ ॥
अधीतं स तदा शास्त्रमेतद्येन भ(मु)णाम्यहम् । सर्वज्ञशासनमृते सम्यग् ज्ञानं न विद्यते ॥ १२७ ॥
पश्चाच्च विषयासक्तोऽभूवं राजन् ! पुनर्गृही । धनाशयेहाऽऽगतोऽस्मि कृतदारपरिग्रहः ॥ १२८ ॥
ज्ञात्वा सत्यं निमित्तं तत् राजलोकोऽखिलस्तदा । स्वस्वामिरक्षणोपायचिन्तया व्याकुलोऽभवत् ॥ १२९ ॥
तत्रैको न्यगदन्मन्त्री यत् स्वामी सप्त वासरान् । यानारूढः समुद्रान्तर्ध्रियतेऽतिप्रयत्नतः ॥ १३० ॥
द्वितीयः स्माह पानीये विद्युद्यद्यपि न स्फुरेत् । तथाऽपि यानपात्रे तां पतन्तीं को निवारयेत् ? ॥ १३१ ॥
तस्माद्वैताढ्यशैलस्यातिगूढे कन्दरागृहे । प्रक्षिप्य रक्ष्यते स्वामी विद्युत्पातभयात्किल ॥ १३२ ॥
तृतीयोऽप्यवदन्नायमुपायोऽपि शुभावहः । प्रत्युतापायहेतुः स्यात् दृष्टान्तोऽत्र निशम्यताम् ॥ १३३ ॥

१ विद्युत्.

बभूव विजयपुरे रुद्रसोमाभिधो द्विजः । तद्भार्या ज्वलनशिखा शिखी नाम्ना तयोः सुतः ॥ १३४ ॥
तस्मिंश्च नगरे कश्चित् राक्षसो मांसलोलुपः । भूरिमानुषरूपाणि मारयामास प्रत्यहम् ॥ १३५ ॥
एकैकं मानुषं तेऽहं दास्याम्येवं वधीः स्म मा । सह तेन व्यवस्थेति कृता तत्पुरभूभुजा ॥ १३६ ॥
निष्पादिताः सर्वपौरनामान्तर्गतगोलकाः । तन्मध्यान्नित्यमेकैकमाकृष्याख्यां निरीक्ष्यते ॥ १३७ ॥
यस्मिन् दिने च यन्नाम दृश्यते तत्र निर्गतम् । स तस्मिन् दीयते तस्य शेषरक्षाविधित्सया ॥ १३८ ॥
अन्येद्युर्द्विजपुत्रस्य तस्य नाम विनिर्ययौ । तच्छ्रुत्वा जननी तस्याक्रन्दं चक्रे सुदुःखिता ॥ १३९ ॥
तस्याः क्रन्दितमाकर्ण्य तत्रासन्नगृहस्थितैः । भूतैः साऽभाणि सदयैः खेदं हे अम्ब ! मा कृथाः ॥ १४० ॥
भविष्यति यदा दत्तो राक्षसाय सुतस्तव । आनेष्यामस्तदा हत्वा तमवश्यं तवान्तिकम् ॥ १४१ ॥
इत्युक्ता मुदिता साऽभूत् तत्पुत्रः सोऽथ भूभुजा । प्रदत्तो रक्षसे तस्माद्भूतैरपि हृतश्च तैः ॥ १४२ ॥
समर्पितश्च तन्मातुस्तया तन्मृत्युभीतया । स पर्वतगुहामध्ये क्षेपित्वा ( क्षिप्त्वा च ) पिदधे तथा ॥ १४३ ॥
तत्राप्यजगरेणायं तत्स्थेन गिलितो निशि । न शक्यमन्यथा कर्तुं कर्म केनापि देहिनाम् ॥ १४४ ॥
तस्मादवश्यंभावी हि योऽसौ भावो भविष्यति । किन्तु दुरितोपशान्त्यै करिष्यामस्तपो वयम् ॥ १४५ ॥
मन्त्र्यवादीच्चतुर्थोऽथ सत्यमेतेन भाषितम् । किन्तु यद्वर्त्तते चित्ते मम तत्कथयामि वः ॥ १४६ ॥
पोतनाधिपतेर्मूर्ध्नि विद्युत्पातोऽमुनोदितः । नैमित्तिकेन न पुना राज्ञः श्रीविजयस्य भोः ॥ १४७ ॥

ततः सप्त दिनान्यत्रापरः स्वामी विधीयते । नैमित्तिकोऽपि तद्वाक्यं प्राशंसत्साधु साध्विति ॥ १४८ ॥
उवाच चास्य कार्यस्य कथनार्थमिहागमम् । इदं च क्रियतां किन्तु किमन्यैर्दुर्विचिन्तितैः ॥ १४९ ॥
राजा जिनालयस्यान्तस्तपोनियमतत्परः । तिष्ठत्वेष यतो ह्यापल्लङ्घ्यते सुमहत्यपि ॥ १५० ॥
राज्ञोचे यस्य कस्यैव स्वामित्वं हि विधास्यते । सोऽपि यास्यति पञ्चत्वं तदेवं क्रियते कथम् ? ॥ १५१ ॥
ऊचुश्च मन्त्रिणः स्वामिन् ! यद्येतन्संमतं तव । तदाभिषेको यक्षस्य प्रतिमाया विधास्यते ॥ १५२ ॥
चेद्देवतानुभावेन न स्यादापत्ततो वरम् । नो चेत्काष्ठमयी यक्षप्रतिमैव विनंक्ष्यति ॥ १५३ ॥
राजाऽथ युक्तमित्युक्त्वा गत्वा च जिनमन्दिरे । सर्वान्तःपुरसंयुक्तः प्रपेदे पौषधव्रतम् ॥ १५४ ॥
संस्तारकनिषण्णश्च तपोनियमसंयमैः । पूतात्मा मुनिवत्तस्थौ नमस्कारपरायणः ॥ १५५ ॥
अन्ये च मन्त्रिसामन्तप्रमुखा भूपतेः पदे । निवेश्य यक्षप्रतिमां तस्थुस्तस्याः समीपगाः ॥ १५६ ॥
ततः सप्तमे घस्रेऽब्दैः[1] क्षणाद् व्याप्तं नभस्तलम् । ववर्ष च घनो गर्जारवव्याप्तदिगन्तरः ॥ १५७ ॥
मुहुर्विद्योतमानोऽथ विद्युद्दण्डस्तथाऽपतत् । तस्मिन्नेव यक्षबिम्बे निर्भाग्ये यमदण्डवत् ॥ १५८ ॥
तत्रोपसर्गे तेनैव विधिना प्रलयं गते । नैमित्तिकगिरा राजा पुनरागान्निजं गृहम् ॥ १५९ ॥
सर्वान्तःपुरनारीभिर्हृष्टचित्ताभिरर्चितः । वस्त्रालङ्कारस्त्नौघैः स नैमित्तिकपुङ्गवः ॥ १६० ॥

१ दिने. २ मेघै.

राज्ञाऽपि भूरिद्रव्येणार्चितो विससृजे च सः । यक्षस्य प्रतिमा रत्नमयी नव्या च कारिता ॥ १६१ ॥
पूजा च जिनबिम्बानां श्रेयःसन्ततिकारिणी । राज्ये पुनर्जन्मनीव स्वस्याकारि तथोत्सवः ॥ १६२ ॥
सोऽथ श्रीविजयो राजा समं देव्या सुतारया । ययौ क्रीडार्थमन्येद्युर्वनं ज्योतिर्वनाभिधम् ॥ १६३ ॥
तत्र भर्त्रा सहाद्रीणां[1] छायावत्सु तलेषु सा । विहरन्ती ददर्शैकं सुतारैणं[2] मनोहरम् ॥ १६४ ॥
कुरङ्गं स्वर्णवर्णाङ्गं तं विलोक्य सुलोचनम् । सोचे स्वपतिमानीय नाथैनं त्वं ममार्पय ॥ १६५ ॥
तद्ग्रहार्थं स्वयं राजा स्वप्रियास्नेहमोहितः । दधावे सोऽपि वेगोनोत्पत्येयाय[3] नभस्तलम् ॥ १६६ ॥
अत्रान्तरेऽस्य प्रियया दष्टया कुक्कुटाहिना । एह्येहि लघु हे नाथेति पूच्चक्रे गुरुस्वरम् ॥ १६७ ॥
तदाकर्ण्य झटित्येव विनिवृत्तो महीपतिः । ददर्शैनां विलपन्तीं विषवेदनयाऽर्दिताम् ॥ १६८ ॥
ततः प्रयुक्ता वेगेन मन्त्रतन्त्रादिका क्रिया । साऽप्यभून्निष्फला क्षेत्रे क्षिप्तं बीजमिवोषरे ॥ १६९ ॥
क्षणान्तरेण सा देवी म्लानास्या मीलितेक्षणा । पश्यतोऽपि महीभर्तुर्बभूव गतजीविता ॥ १७० ॥
ततो मुमूर्च्छ भूपालः पपात च महीतले । कथञ्चिल्लब्धसंज्ञः सन् स एवं विललाप च ॥ १७१ ॥
हा गीर्वाणप्रियाकारे[4] ! महोदारे ! विवेकिनि ! । हा सुतारे ! गुणाधारे ! प्रीतिसारे ! क्व तिष्ठसि ? ॥ १७२ ॥
एवं विलप्य बहुधा राजाऽभून्मरणोद्यतः । वृत्तान्तं ज्ञापितश्चामुं राजलोकः पदातिभिः ॥ १७३ ॥

१ महांह्रीणामिति वा पाठः. २ मृगम्. ३ जगाम. ४ देवाङ्गनाकारवति.

गज्ञः स्वयंप्रभा माता भ्राता च विजयाह्वयः । तच्छ्रुत्वा दुःखितौ गाढं यावदेतौ बभूवतुः ॥ १७४ ॥
नभोमार्गेण तत्रैत्य तावदेको नगेऽवदत् । अलं देवि ! विषादेन शृणु वार्त्ता स्वयंप्रभे ! ॥ १७५ ॥
ग्थनूपुरनाथेन पूजितोऽमिततेजसा । संभिन्नश्रोता मत्तातो नैमित्तिकवरोऽस्ति हि ॥ १७६ ॥
तत्पुत्रोऽहं दीपशिखोऽन्यदोर्वीं तु प्रचेलतुः । ज्योतिर्वनं प्रति क्रीडां कर्त्तुं तावदपश्यताम् ॥ १७७ ॥
पुरश्चमरचञ्चेशाशनिघोषेण भूभुजा । ह्रियमाणां गतत्राणां तां सुतारां नृपप्रियाम् ॥ १७८ ॥
इत्यूचतुश्च तं दुष्ट! धृष्ट! दुश्चेष्ट! पाप रे ! । अस्मत्स्वामिस्त्रमारं त्वमपहृत्य क्व यास्यसि ? ॥ १७९ ॥
तया च भणितावावां प्रयासेनालमत्र वाम् । गत्वा संबोध्यतां राजा वेतालिन्या विमोहितः ॥ १८० ॥
मर्त्तुकामस्तया सार्द्धं सुतारारूपया ततः । आवाभ्यां बोधितो राजा सा च दुष्टा प्रणाशिता ॥ १८१ ॥
देव्युदन्ते च विज्ञाते सोऽस्ति तत्प्रापणोद्यतः । तदाज्ञयाऽहमागां वस्तत्स्वरूपं च शंसितुम् ॥ १८२ ॥
ततः स्वयंप्रभादेव्या सत्कृतोऽसौ पुनर्ययौ । राज्ञः समीपं गजाऽपि ताभ्यां निन्ये स्वपत्तने ॥ १८३ ॥
प्रतिपत्तिं विधायाथ संपृष्टोऽमिततेजसा । राजा श्रीविजयः सर्वं स्ववृत्तान्तं न्यवेदयत् ॥ १८४ ॥
तच्छ्रुत्वा सोऽपि संक्रुद्धोऽशनिघोषाय सत्वरम् । मारीचिनामकं दूतं शिक्षां दत्त्वा विसृष्टवान् ॥ १८५ ॥
गत्वा चमरचञ्चायां स दूतस्तमभाषत । आनीताऽस्ति त्वयाऽज्ञानात् भगिनी स्वामिनो मम ॥ १८६ ॥
गज्ञी श्रीविजयस्याहो सुतारेति सती वरा । अर्प्यतां साधुना शीघ्रमनर्थं माऽऽत्मनः कृथाः ॥ १८७ ॥ ( युग्मम् )

उवाचाशनिघोषोऽपि सगर्वोध्धुरकन्धरः । रे दूतार्पयितुं नाम किमानीताऽस्त्यसौ मया ॥ १८८ ॥
मत्तो यः कश्चिदप्येनामनात्मज्ञो जिहीर्षति । दीप्ते मत्खड्गदीपेऽस्मिन् शलभत्वं स यास्यति ॥ १८९ ॥
इत्युक्त्वा ग्राहयित्वा च कण्ठे निर्वासितोऽमुना । स्वस्थानमगमद्दूतस्तदर्थोऽस्य शशंस च ॥ १९० ॥
ततः श्रीविजयायादात् विद्यां शस्त्रनिवारिणीम् । बन्धमोचनिकां चैवामिततेजोनरेश्वरः ॥ १९१ ॥
एकैकां साधयामास स सप्तदिवसैः पृथक् । सिद्धविद्यस्ततश्चारिविजयाय चचाल सः ॥ १९२ ॥
कुमारा रश्मिवेगाद्याः सुता अमिततेजसः । अनुश्रीविजयं चेलुः शतसंख्या महौजसः ॥ १९३ ॥
अन्यैश्च भूयःसुभटैर्विद्याभुजबलोर्जितैः । समं श्रीविजयः प्रापाशनिघोषपुरान्तिकम् ॥ १९४ ॥
महाज्वालाभिधां विद्यां परविद्याच्छिदाकरीम् । ययौ साधयितुं चार्किनृपो हिमवति स्वयम् ॥ १९५ ॥
सहस्ररश्मिना ज्येष्ठपुत्रेण परिवारितः । तत्र मासिकभक्तेन विद्यां साधयति स्म सः ॥ १९६ ॥
इतः ससैन्यमायान्तं श्रुत्वा श्रीविजयं नृपम् । प्रैषीदशनिघोषः स्वान् पुत्रान् सबलवाहनान् ॥ १९७ ॥
ततः प्रववृते घोरः समरः सैन्ययोस्तयोः । विद्याबलवतो स्वस्वस्वामिनोर्जयकाङ्क्षिणोः ॥ १९८ ॥
विद्याजनितमायाभिर्युद्ध्यमानं सकौतुकम् । नाहारयदेकमपि द्वयोर्मध्याद्बलं तयोः ॥ १९९ ॥
मासं यावत् युधं कृत्वाऽमिततेजःकुमारकैः । पुत्रा अशनिघोषस्य प्रौढा अपि पराजिताः ॥ २०० ॥

१ अर्कस्यार्ककीर्तेः पुत्रोऽमिततेजाः.

ततश्चाशनिघोषेऽस्मिन् युध्यमाने स्वयं रणे । द्रढीयांसोऽप्यभज्यन्त पुत्रास्तेऽमिततेजसः ॥ २०१ ॥
स्वयं श्रीविजयो राजाऽप्यढौकिष्ट रणे तदा । शक्यन्ते नेतरैर[1]त्तुमिक्षवः सह दन्तिभिः ॥ २०२ ॥
क्रुद्धः श्रीविजयः सोऽथ खड्गेनाहत्य तं द्विषम् । द्विधा चक्रे ततो जाताऽशनिघोषद्वयी पुनः ॥ २०३ ॥
साऽपि द्विधा कृता जज्ञेऽशनिघोषचतुष्टयी । एवं च खण्ड्यमानोऽसौ मायया शतधाऽभवत् ॥ २०४ ॥
यावच्छ्रीविजयो राजा निर्विण्णस्तद्वधेऽभवत् । तावत्तत्र सिद्धविद्योऽमिततेजाः स आययौ ॥ २०५ ॥
अपहाय ततो मायां नश्यन्तं तद्भयेन तम् । दृष्ट्वाऽऽदिदेशार्किनृपो विद्यां सिद्धिमुखामिति ॥ २०६ ॥
दूरादप्येष पापीयानानेतव्यस्त्वया स्फुटम् । साऽथ तत्पृष्ठतो लग्ना ययौ सीमनगे च सः ॥ २०७ ॥
तत्र श्रीवृषभस्वामिजिनमन्दिरसन्निधौ । उत्पन्नकेवलज्ञानं वन्द्यमानं सुरासुरैः ॥ २०८ ॥
निरीक्ष्य बलदेवर्षिं स तं शरणमाश्रयत् । देवताऽप्यमिनायाख्यद् वलित्वा तं तथास्थितम् ॥ २०९ ॥ ( युग्मम् )
देवीं सुतारामादाय त्वमागच्छेर्ममान्तिकम् । इति मारीचिमाज्ञाप्य सोऽथ श्रीविजयान्वितः ॥ २१० ॥
सर्वसैन्ययुतो भेरीभाङ्कारैः पूरयन् दिशः । बलभद्रमुनिं नन्तुं तत्र सीमनगे ययौ ॥ २११ ॥ ( युग्मम् )
गत्वा जिनालये नत्वा स्तुत्वा च प्रथमं जिनम् । अभ्यर्णे बलदेवर्षेर्जग्मतुस्तावुभावपि ॥ २१२ ॥
देवीमादाय मारीचिरथागात्तत्र सत्वरम् । अर्पिताऽक्षतचारित्रा राज्ञः श्रीविजयस्य सा ॥ २१३ ॥

१ भक्षयितुम्.

उत्थायाशनिघोषोऽथ क्षमयामास तौ नृपौ । संमानितश्च ताभ्यां संजातास्ते गतमत्सराः ॥ २१४ ॥
अत्रान्तरे केवलिना प्रारब्धा धर्मदेशना । कृतभव्यजनश्रोत्रसुधापूरप्रदेशना ॥ २१५ ॥

तद्यथा—

रागद्वेषवशीभूता दुराकूताास्तनूभृतः[1] । नयन्त्यनर्थकं जन्म कृत्वाऽनर्थपरम्परम् ॥ २१६ ॥
न मोक्षप्रापणे शक्ता याभ्यां विहितबन्धनाः । रागद्वेषावमू शत्रू यूयं त्यजत भो जनाः ! ॥ २१७ ॥
श्रुत्वा तां देशनां सम्यक् प्रतिबुद्धा नृणां गणाः । केचिदाददिरे दीक्षां श्रावकत्वं तथाऽपरे ॥ २१८ ॥
पप्रच्छाशनिघोषस्तं सुतारेयं मया प्रभो ! । रागोद्रेकं विना हृत्वा नीता निजगृहे कथम् ? ॥ २१९ ॥
केवल्यूचे पूर्वभवे पुरे रत्नपुराभिधे । श्रीषेणनामा भूपोऽभूत् जीवोऽस्यामिततेजसः ॥ २२० ॥
इत्यादि तद्भवान् सर्वान् कथयित्वाऽब्रवीत्पुनः । तदाऽभूः कपिलस्त्वं हि सत्यभामा च तत्प्रिया ॥ २२१ ॥
सत्यभामा सुतारेयं संजाता कपिलस्तु सः । भवं भ्रान्त्वा मनुष्यत्वं कुले लब्ध्वा तपस्विनाम् ॥ २२२ ॥
कृत्वा बालतपस्तत्र मृत्वाऽभूस्त्वं ततस्त्वया । जह्रे पूर्वस्वसम्बन्धाद्राजन् ! रागं विनाऽप्यसौ ॥ २२३ ॥ ( युग्मम् )
त्वय्यसौ विगतस्नेहा पुरातनभवेऽप्यभूत् । अतस्त्वमपि मन्दानुरागोऽस्यां हि प्रवर्त्तसे ॥ २२४ ॥
स्वस्वपूर्वभवान् श्रुत्वाऽमिततेजोनृपादयः । हृष्टा ऊचुरहो नास्त्यसाध्यं किमपि ब्रह्मणः ॥ २२५ ॥

---

१ दुष्टान्तःकरणाः.

पृष्टोऽथ केवली विद्याधरेशाऽमिततेजसा । भव्योऽहमथवाऽभव्यः प्रभो! मे कथ्यतामिति ॥ २२६ ॥
केवल्यूचे नवमे त्वं भवे राजन्भितो भवात् । भविष्यस्यत्र भरते पञ्चमः सार्वभौमराट् ॥ २२७ ॥
षोडशश्च जिनेन्द्रोऽयं राजा श्रीविजयः पुनः । पुत्रो भूत्वा गणधरस्तवैवाद्यो भविष्यति ॥ २२८ ॥
पृष्ट्वा श्रुत्वा ततस्तस्य पार्श्वे केवलिनो मुनेः । सम्यक्त्वमूलः सुश्राद्धधर्मस्ताभ्यामुपाददे ॥ २२९ ॥
संस्थाप्य स्वात्मजं राज्येऽशनिघोषो विरक्तधीः । तस्य केवलिनः पार्श्वे प्रव्रज्यां समुपाददे ॥ २३० ॥
राज्ञः श्रीविजयस्याम्बा देवी सा च स्वयंप्रभा । तत्पादान्ते प्रवव्राज भूरिनारीसमन्विता ॥ २३१ ॥
अथ केवलिनं नत्वा स्वपरीवारसंयुतौ । स्वं स्वं स्थानं जग्मतुः श्रीविजयामिततेजसौ ॥ २३२ ॥
देवपूजागुरूपास्तितपःप्रभृतिकर्मभिः । द्योतयन्तौ श्रावकत्वं तौ कालमतिनिन्यतुः ॥ २३३ ॥
पुण्यात्माऽमिततेजाः स प्रासादान्तरकारयत् । पञ्चवर्णवररत्ननिर्मितं जिनमन्दिरम् ॥ २३४ ॥
अन्यदा तत्समीपेऽसौ कारिते पौषधालये । आसीनो धर्ममाचष्टे विद्याधरसभान्तरे ॥ २३५ ॥
अत्रान्तरे चारणर्षिद्वितयं नभसा व्रजत् । सनातनजिनान्नन्तुं तं ददर्श जिनालयम् ॥ २३६ ॥
तच्चैत्यवन्दनाहेतोरवतीर्णौ ततश्च तौ । उपवेश्यासने राज्ञा वन्दितौ भक्तिपूर्वकम् ॥ २३७ ॥
तत्रैकः साधुराचख्यौ राजन्! जानासि चेत्स्वयम् । तथापि धर्ममाख्यातुमुचितं नस्ततः शृणु ॥ २३८ ॥
मानुष्यकादिसामग्रीं लब्ध्वा ज्ञात्वा भवस्थितिम् । धर्मो निरन्तरं कार्यो निरन्तरसुखार्थिभिः ॥ २३९ ॥

मनसाऽप्यन्तरे तस्य कृते स्यात्सुखमन्तरा । जातं मत्स्योदराख्यस्य धनदस्येव निश्चितम् ॥ २४० ॥
पृच्छति स्म ततो राजा भक्तिभाक् रचिताञ्जलिः । मुने ! मत्स्योदरः कोऽयं कथ्यतां तत्कथा मम ॥ २४१ ॥
मुनिरूचेऽत्र भरतक्षेत्रे त्रिदशपूःसमम् । विख्यातमस्ति कनकपुरं नाम पुरं भुवि ॥ २४२ ॥
द्विपत्कोपानलप्रौढीकृततेजाः सुवर्णवत् । बभूव तत्र कनकरथो नाम्ना महीपतिः ॥ २४३ ॥
तस्याग्रमहिषी रूपसम्पदा रतिजित्वरी । कनकश्रीर्विनयादिगुणैर्नारीवराऽभवत् ॥ २४४ ॥
औदार्य्यादिगुणाधारो रत्नसारोऽभिधानतः । अभूत्तत्र राजमान्यः श्रेष्ठी धर्मिष्ठधुर्यकः ॥ २४५ ॥
अनर्घ्यशीलरत्नाढ्या रत्नचूलेति तस्य तु । जज्ञे प्रिया प्रियालापा लज्जादिस्त्रीगुणाश्रिता ॥ २४६ ॥
अभिमानधनो धीमान् धर्मोपार्ज्जनतत्परः । तयोः पुत्रः कलापात्रं बभूव धनदाभिधः ॥ २४७ ॥
इतश्च तस्मिन्नगरे कितवः सिंहलाभिधः । रेमे कपर्दकैर्नित्यं पुरदेव्या निकेतने ॥ २४८ ॥
स द्यूतक्रीडया नित्यं तावद्देवार्जयद्धनम् । कदर्यभोजनं किञ्चित् यावन्मात्रेण जायते ॥ २४९ ॥
अन्यदा मन्दभाग्यत्वात् स जिगाय न किञ्चन । ततश्च दुष्टधी रुष्टो देवतामित्यभाषत ॥ २५० ॥
तव देवकुले नित्यं रममाणस्य मे न यत् । द्रव्यं सम्पद्यते तत्ते विक्रिया कटपूतने[1] ! ॥ २५१ ॥
तदद्य प्रकटीभूय द्रव्यं किञ्चित्प्रयच्छ मे । अन्यथाऽहं करिष्यामि तवानर्थं महत्तरम् ॥ २५२ ॥

१ हे राक्षसि !

देवतोवाच रे दुष्ट ! त्वत्पित्रा किं त्वयाऽथवा । द्रव्यमस्त्यर्पितं मे यत् याचसे सहसैव तत् ॥ २५३ ॥
ततः पाषाणमुत्पाट्य सोऽवोचद्देहि मे धनम् । कुतोऽप्यानीय नोचेत्त्वां व्यङ्गयिष्यामि निश्चितम् ॥ २५४ ॥
दध्यौ च देवता नास्याकृत्यं किञ्चिन्न विद्यते । दत्तेनैव धनेनायं तुष्येन्न ह्यन्यथा पुनः ॥ २५५ ॥
ततो गाथासनाथं मा पत्रं तस्यार्पयत्करे । सोऽवदत्पत्रखण्डेन रे रण्डे ! किं करोम्यहम् ? ॥ २५६ ॥
देवतोवाच गाथेयं विक्रेतव्या त्वया खलु । दीनारगणां महस्रं हि लप्स्यसे त्वं ममाज्ञया ॥ २५७ ॥
तत्पत्रं तद्गिराऽऽदाय वीथीमध्ये ययावसौ । इत्युवाच च गाथेयं लभ्यते गृह्यतामहो ॥ २५८ ॥
तद्वस्त्वसारमालोक्य वणिग्भिर्जातकौतुकैः । पृष्टो मूल्यमयाचिष्ट म दीनारसहस्रकम् ॥ २५९ ॥
तदसम्भाव्यमूल्यत्वादगृह्णति जनेऽखिले । श्रेष्ठिपुत्रस्य तस्याट्टे म ययौ क्रमयोगतः ॥ २६० ॥
तस्यार्पितेन तन्मूल्यमाख्यातं सोऽथ पत्रकम् । गृहीत्वा वाचयामास गाथां तल्लिखितामिति ॥ २६१ ॥
जं किर विहिणा लिहियं तं चिय परिणमइ सयललोयस्स । इय भाविऊण धीरा विहुरे वि न कायरा हुंति ॥२६२
दध्यौ धन्योऽथ गाथेयं लक्षेणापि न लभ्यते । दीनारगणां सहस्रेण समर्घा गृह्यते ततः ॥ २६३ ॥

१ यत् किल विधिना लिखितं तदेव परिणमति मकललोकस्य । इति भावयित्वा धीरा विधुरेऽपि न कातरा भवन्ति ॥ श्रीमुनिदेवसूरयः स्वकृतपद्यशान्तिनाथचरित्रे संस्कृतबद्धां इमां गाथां एवं लिलिखुः—विधिना लिखितं यत्तन्नृणां परिणमत्यलम् । धीरा भवन्ति ज्ञात्वैवं विधुरेऽपि न कातराः ॥ ( मर्ग २, श्लो० १९७ ).

तद्याचितमथो तस्मै दत्त्वा मूल्यं महामतिः । स्वीकृत्य पत्रकं तच्च मुहुर्मुहुरवाचयत् ॥ २६४ ॥
अत्रान्तरे पिता तस्य तत्रागात्तमभाषत । त्वया व्यवहृतं किञ्चित् अद्य नो वेति शंस मे ॥ २६५ ॥
प्रत्यासन्नवणिक्पुत्रैः सहासैरिति जल्पितम् । श्रेष्ठिस्तव सुतेनाद्य व्यवहारः कृतो महान् ॥ २६६ ॥
दीनाराणां सहस्रेण यदेकाऽग्राहि गाथिका । वर्द्धयिष्यत्यमौ लक्ष्मीं वाणिज्यकलयाऽनया ॥ २६७ ॥
रुष्टः श्रेष्ठ्यप्यभाषिष्ट त्वमितो याहि दुष्ट रे ! । शून्यैव हि वरं शाला पूरिता न तु तस्करैः ॥ २६८ ॥
एवं विमानतां प्राप्तो धनदोऽपि तदाऽऽपणात् । उत्थाय निर्ययौ चित्ते गाथार्थं तं विचिन्तयन् ॥ २६९ ॥
पुरान्निःसृत्य कौबेर्यां दिश्यासन्नवनान्तरे । दिनावसानसमये प्राप्तो मानधनो हि सः ॥ २७० ॥
गम्भीरं सरसं स्वच्छं सद्वृत्तं सत्त्वशोभितम् । दृष्टं सरोवरं तेन तत्रैकं साधुचित्तवत् ॥ २७१ ॥
तत्र स्नात्वाऽम्बु पीत्वा च न्यग्रोधस्य तरोस्तले । तस्यासन्ने स सुष्वाप रात्रौ तत्पत्रसंस्तरे ॥ २७२ ॥
अत्रान्तरे च तत्रागात् व्याध एको धनुर्द्धरः । हन्तुं वनचरान् जीवान् जलपानार्थमागतान् ॥ २७३ ॥
ईषन्निद्रायमाणेऽथ सचिन्ते श्रेष्ठिनन्दने । जज्ञे चलयति स्वाङ्गं शुष्कपत्रभवो ध्वनिः ॥ २७४ ॥
अयं वनचरो जीवः कोऽपि यातीति लुब्धकः । विव्याधैनं शरेणांहौ हृदीवासज्जनो गिरा ॥ २७५ ॥
वेध्यं विद्धमिति व्याधस्तत्समीपमुपागमत् । धनदोऽपि प्रहारार्त्तो गाथामुच्चरति स्म ताम् ॥ २७६ ॥
तच्छ्रुत्वा लुब्धको दध्यौ हा मया मूढचेतसा । निर्विण्णः पथिकः कोऽपि सुप्तो बाणेन ताडितः ॥ २७७ ॥

ऊचे च भद्र ! कुत्राङ्गे मया विद्धोऽस्यजानता । इत्युदित्वा तस्य पादादाचकर्ष स मायकम् ॥ २७८ ॥
पट्टबन्धं व्रणे तत्र कुर्वाणं तं न्यवारयत् । निजं स्थानं प्रयाहीति धनदो विससर्ज्ज तम् ॥ २७९ ॥
निर्गच्छति व्रणाद्रक्ते जाते च रजनीक्षये । भारण्डपक्षिणा निन्ये स मंस्थितधियाऽम्बरे ॥ २८० ॥
मुक्त्वाऽथ वारिधेर्मध्यद्वीपे खादितुमुद्यतः । जीवन्तं तं च विज्ञाय ययावुड्डीय पक्ष्यसौ ॥ २८१ ॥
उत्थाय धनदो यावत् ऐक्षताशाः समन्ततः । तावत्तत्राटवीं भीमामपश्यन्मानुषोज्झिताम् ॥ २८२ ॥
दध्यौ च क्व पुरं तन्मे क्व चेयं भीषणाऽटवी । अथवा चिन्तया मेऽलं दैवचिन्ता बलीयसी ॥ २८३ ॥
क्षुत्तृष्णापीडितः सोऽथ भ्रमंस्तत्र फलाशया । ददर्शैकं पुरं शून्यं पतितावाससञ्चयम् ॥ २८४ ॥
दृष्ट्वा च कूपकं किञ्चित्कृच्छ्रादाकृष्य तज्जलम् । पीत्वा च वारयामास तृष्णामथ शरीरगाम् ॥ २८५ ॥
विधाय प्राणयात्रां च फलैः कदलिसंभवैः । पुरादपि ततो दूरं भीतभीतो ययावसौ ॥ २८६ ॥
अत्रान्तरे च मार्त्तण्डो निस्तेजा अस्तमीयिवान् । प्राप्ता मयाऽप्यवस्थेति धनदं बोधयन्निव ॥ २८७ ॥
अस्तं गते दिवानाथे तमसा क्लेशितं जगत् । विशिष्टज्ञानविरहादज्ञानेनेव सर्पता ॥ २८८ ॥
गिरेः कस्यापि निकटे वह्निमुत्पाद्य दारुणा । तस्य तापेन निःशीतः स व्यतीयाय यामिनीम् ॥ २८९ ॥
प्रभातसमये वह्निप्रदेशोर्वीं ददर्श सः । जातां स्वर्णमयीं सद्यो दध्यौ चैवं सविस्मयः ॥ २९० ॥

१ मृतधिया. २ काष्ठेन.

नूनं सुवर्णद्वीपोऽयं यदियं ज्वलितानलात् । जातरूपमयी जाता सद्य एव वसुन्धरा ॥ २९१ ॥
पातयामि ततः स्वर्णमिति ध्यात्वाऽमुना कृताः । इष्टिकानां सुसङ्घाटाः स्वर्णीभूताश्च तेऽग्निना ॥ २९२ ॥
भ्रमन्नन्येद्युरद्राक्षीत् निकुञ्जे कुत्रचिद्गिरेः । रत्नजातमयं तच्चानिनाय स्वर्णसन्निधौ ॥ २९३ ॥
एवं सुवर्णरत्नानां राशिस्तेन कृतो बहुः । कदल्यादिफलैः प्राणयात्रां चक्रे च सोऽन्वहम् ॥ २९४ ॥
सार्थवाहः सुदत्ताख्योऽन्यदा तद्देशमाययौ । याने जलेन्धनं तस्य त्रुटितं पूर्वसञ्चितम् ॥ २९५ ॥
दृष्ट्वा तं द्वीपमेतेन प्रेषिता निजपूरुषाः । जलेन्धनकृते तत्र ददृशुर्धनदं च ते ॥ २९६ ॥
कस्त्वं भोरित्यपृच्छंश्चावोचद् वनचरोऽस्मि सः । तैरुक्तस्तर्हि पानीयस्थानं किमपि दर्शय ॥ २९७ ॥
तेनासौ दर्शितस्तेषां कूपस्तेऽपि तदन्तिके । ददृशुस्तत्सुवर्णादि पुरा यत्नेन सञ्चितम् ॥ २९८ ॥
कस्येदमित्यपृच्छंश्च धनदं सोऽप्युवाच तान् । मामकीनमिदं वित्तं स्थानं नयति यस्त्वदः ॥ २९९ ॥
यच्छामि तस्य तुर्यांशमित्युक्ते सार्थपोऽपि सः । तत्रागाद्धनदस्तस्य प्रणामार्घोचितिं व्यधात् ॥ ३०० ॥ ( युग्मम् )
सार्थवाहस्तमालिङ्ग्य पृष्ट्वा च कुशलादिकम् । तज्जातरूपरत्नानां नयनं प्रतिपन्नवान् ॥ ३०१ ॥
प्रापय्य भृत्यकैस्तान्यक्षेप्सीत्प्रवहणे निजे । गणयित्वा धनदोऽपि तानि तेषां समार्पयत् ॥ ३०२ ॥
दृष्ट्वा बहु धनं तच्च सार्थेशश्चलिताशयः । आदिदेश निजनरान् कूपेऽसौ क्षिप्यतामिति ॥ ३०३ ॥
तैस्ततो धनदोऽभाणि कर्ष भोः कूपकाज्जलम् । वयं सम्यग् न जानीमः त्वं च तत्कृतपूर्व्यसि ॥ ३०४ ॥

तत्कर्तुमुद्यतस्तैः स क्षिप्तः कूपे कृपोज्झितैः । हन्यते बन्धुरप्यर्थलुब्धैरन्यस्य का कथा ? ॥ ३०५ ॥
पर्णाञ्चितायां तन्मध्ये मेखलायां पपात सः । नेषदप्यङ्गजा पीडा ततोऽभूत्तस्य भाग्यतः ॥ ३०६ ॥
गाथां तां चिन्तयन् सोऽथ कूपपार्श्वान्यलोकयत् । दृष्टैकदेशे विवरं तत्राविक्षच्च कौतुकात् ॥ ३०७ ॥
चारुसोपानपङ्क्त्यासौ गत्वा किञ्चिदधस्ततः । ऋजुनैव पथा गच्छन् पश्यंश्चित्राण्यनेकशः ॥ ३०८ ॥
ददर्शैकं देवकुलं तस्य मध्ये प्रभावतीम् । तार्क्ष्यारूढां चक्रपाणिं देवीं चक्रेश्वरीं तथा ॥ ३०९ ॥ ( युग्मम् )
नत्वा तां परया भक्त्या शीर्षे विरचिताञ्जलिः । एवं विज्ञापयामास धनदो वदतां वरः ॥ ३१० ॥
जय श्रीवृषभस्वामिजिनशासनदेवते ! । दुष्टारिष्टहरे ! स्तोतुः सर्वसम्पत्करे ! जय ॥ ३११ ॥
दिष्ट्या कष्टार्दितेनाद्य हे देवि ! त्वं मयेक्षिता । भवतां तावकीनौ तच्चरणौ शरणं मम ॥ ३१२ ॥
तद्भक्तिमुदिता सोचे सर्वं भव्यं भविष्यति । अग्रे गतस्य ते वत्स ! मत्तोऽप्यर्थय किञ्चन ॥ ३१३ ॥
सोऽवदत् मयका देवि ! किं न प्राप्तं महीतले ? । दृष्टे त्वद्दर्शने पुण्यरहितानां सुदुर्लभे ॥ ३१४ ॥
ततो महाप्रभावानि पञ्च रत्नानि देवता । करे तस्यार्पयामास तत्प्रभावं शशंस च ॥ ३१५ ॥
एकं सौभाग्यकरणं द्वितीयं श्रीनिकेतनम् । तृतीयं रोगहृत्सद्यश्चतुर्थं विषनाशनम् ॥ ३१६ ॥
इदं च पञ्चमं रत्नमापत्पर्यन्तकारकम् । इत्युक्त्वाऽन्तर्दधे देवी धनदोऽप्यग्रतो ययौ ॥ ३१७ ॥

१ पर्यन्तो नाशः.

दृष्ट्वैकत्राददे संरोहिणीं चौषधिमुत्तमाम् । दीर्त्वा क्षुरिकया जङ्घां न्यधाद्रत्नानि तत्र च ॥ ३१८ ॥
संरोहिण्या महौषध्या रोहयित्वाऽथ तद्व्रणम् । पुरश्च गच्छन् पातालपुरमेकं ददर्श सः ॥ ३१९ ॥
तत्रावलोकयामास भक्ष्यभोज्यसमाकुलाः । मन्दिराट्टाऽऽवलीश्चित्रा मानुषैः परिवर्जिताः ॥ ३२० ॥
प्रदेशेऽन्यत्र सोऽद्राक्षीत् नरेन्द्रभवनं महत् । गवाक्षगोपुरप्रांशुप्राकारपरिशोभितम् ॥ ३२१ ॥
प्रविश्य कौतुकेनात्र गतः सप्तमभूमिकाम् । ददर्श बालिकामेकां रूपाञ्चितसुराङ्गनाम् ॥ ३२२ ॥
तां दृष्ट्वा विस्मयापन्नं ज्ञातुकामं च तत्कथाम् । बभाषे कन्यका तं भोः कुतः स्थानात्त्वमागतः ॥ ३२३ ॥
इहागतस्य ते प्राणसंशयो भद्र ! वर्त्तते । तद् गच्छ शीघ्रमन्यत्र यावत्ते कुशलं किल ॥ ३२४ ॥
धनदोऽथाब्रवीत् सुभ्रु ! मोद्वेगं कुरु शंस मे । किमिदं नगरं किं वा विजनं भवती च का ॥ ३२५ ॥
सा तस्य धैर्यरूपाभ्यां विस्मिता पुनरब्रवीत् । अस्ति चेत्कौतुकं तत्त्वं शृणु सुन्दर ! कारणम् ॥ ३२६ ॥
इहास्ति भरते रम्यं नाम्ना श्रीतिलकं पुरम् । महेन्द्रराजो नाम्नाऽभूत्तत्र राजा पिता मम ॥ ३२७ ॥
अन्यदा विगृहीतस्यान्यभूपैस्तस्य सन्निधौ । आगत्य व्यन्तरः कश्चित् सस्नेहं तमभाषत ॥ ३२८ ॥
त्वं पूर्वभवमित्रं मे तदाख्याहि करोमि किम् ? । सोऽवदत् कुरु साहाय्यं शत्रून् मम विनाशय ॥ ३२९ ॥
व्यन्तरोऽप्यब्रवीन्नैते शक्या हन्तुं मया सखे ! । यतो मदधिकैरेतेऽधिष्ठिता व्यन्तरैः खलु ॥ ३३० ॥
करोमि किन्तु साहाय्यमित्युक्त्वा तेन मत्पिता । सपौरः सपरीवार इहाऽऽनीतो झटित्यपि ॥ ३३१ ॥

पुरं चाकारि तेनेदं पातालपुरनामकम् । प्रवेशनिर्गमावेककूपेनैवास्य सुन्दर ! ॥ ३३२ ॥
रक्षार्थं कूपकस्यापि द्वितीयं विहितं पुरम् । ततः प्रवहणैरत्र नानावस्तुसमागमः ॥ ३३३ ॥
एवं गच्छति कालेऽत्र राक्षसः कश्चिदन्यदा । कूपप्रवेशसोपानपङ्क्तिं भङ्क्त्वा समाययौ ॥ ३३४ ॥
मांसलुब्धः स दुष्टात्मा प्रवृत्तः खादितुं जनान् । कियद्भिश्च दिनैश्चक्रे पुरमेतदमानुषम् ॥ ३३५ ॥
बहिः पुरस्य लोकोऽपि तेनारब्धो निपातितुम् । स चाधिरुह्य यानेषु ययावन्यत्र कुत्रचित् ॥ ३३६ ॥
एवं च विहिता तेन शून्येयं नगरद्वयी । एकैव रक्षिताऽहं तु परिणेतुं दुरात्मना ॥ ३३७ ॥
इतो दिनात्सप्तमेऽहन्यतीते तेन मे पुरः । इति प्रोचे यथा भद्रे ! प्रचण्डो राक्षसोऽस्म्यहम् ॥ ३३८ ॥
मानुषामिषलुब्धेन मयेहागत्य मारितः । नगरे निखिलो लोको रक्षिता त्वं तु कारणात् ॥ ३३९ ॥
सप्तमे दिवसे लग्नं शुभग्रहनिरीक्षितम् । तत्र त्वां परिणेष्यामि करिष्यामि स्वगेहिनीम् ॥ ३४० ॥
तदद्य सप्तमदिनं समयोऽयं तदागतेः । यावन्नायात्यसौ तावत् याहि त्वं सुन्दराकृते ! ॥ ३४१ ॥
धनदः स्माह मुग्धे ! त्वं मा भैषीः शृणु संप्रति । हतः [1]स्वपाप्मनैवासौ मरिष्यति करेण मे ॥ ३४२ ॥
सोचे तर्हि च तन्मृत्युममर्यं कथयामि ते । पूजाकाले स विद्याया मारणीयस्त्वया खलु ॥ ३४३ ॥
तस्मिंश्च समये नासावुत्तिष्ठति न जल्पति । अयं च खड्गो मत्तातसत्को ग्राह्यस्त्वया तदा ॥ ३४४ ॥

१ स्वापापेनैव.

आगान्निशाचरः सोऽथ गृहीत्वा नृशवं करे । विलोक्य धनदं चाग्रे सप्रहासमदोऽवदत् ॥ ३४५ ॥
अहो ! आश्चर्यमायातं भक्ष्यमद्य मम स्वयम् । इत्युदित्वाऽवज्ञयैव मुमोच मृतकं च तत् ॥ ३४६ ॥
विद्यां पूजयितुं यावत् प्रवृत्तोऽसौ तदाऽमुना । इत्युक्तः खड्गमाकृष्य त्वां हनिष्याम्यरेऽधुना ॥ ३४७ ॥
अवज्ञया हमन् सोऽथ कृतपूजो निपातितः । तेन खड्गेन सद्योऽपि पातयित्वा शिरो भुवि ॥ ३४८ ॥
तेनैव कृतयोद्वाहसामग्र्या परिणीतवान् । धनदो रूपयुक्तां तां नाम्ना तिलकसुन्दरीम् ॥ ३४९ ॥
भोगान् भुक्त्वा तया सार्द्धं दिनानि कतिचित्ततः । तां सारवस्तु चादायाययौ तत्रैव कूपके ॥ ३५० ॥
वलित्वा च समानीतं तेन वस्तु मनःप्रियम् । भूयश्चक्रेश्वरी मार्गे वन्दिता भक्तिपूर्वकम् ॥ ३५१ ॥
आगात्प्रवहणं किञ्चित् तदा तद्द्वीपसन्निधौ । तस्मिंश्च कूपके तस्मान्नरा नीरार्थमाययुः ॥ ३५२ ॥
रज्जुः क्षिप्ताऽथ तैस्तत्र तां धृत्वा धनदोऽवदत् । पतितोऽस्म्येष कूपे तत् मामुत्तारयतानघाः ! ॥ ३५३ ॥
तैश्च तद्देवदत्तस्य सार्थवाहस्य सत्वरम् । आख्यातं सोऽपि तत्रागात्कौतुकात्पूर्णमानसः ॥ ३५४ ॥
बद्ध्वा वरत्रया कूपे प्रक्षिप्ता मञ्चिका ततः । तस्यामारुह्य धनदो बहिः कूपाद्विनिर्ययौ ॥ ३५५ ॥
तं दृष्ट्वा सुन्दराकारं वस्त्राभरणभूषितम् । अतीव विस्मितः सार्थवाहः पप्रच्छ गौरवात् ॥ ३५६ ॥
कोऽसि त्वं भद्र ! कूपेऽत्र पतितोऽस्यथवा कथम् ? । सोऽवदन्मम भार्याऽपि पतिताऽस्त्यत्र सार्थप ! ॥ ३५७ ॥
अन्यच्च देवतादत्तं वस्तु रत्नादिकं च नः । कृष्ट्वा तत्कथयिष्यामि सर्वशुद्धिं तवात्मनः ॥ ३५८ ॥

एवं कुर्विति तेनोक्तो विदधे सोऽपि तत्तथा। विसिष्मिये तु सार्थेशो दृष्ट्वा तिलकसुन्दरीम् ॥ ३५९ ॥
भूयोऽपि चामुना पृष्टः शशंस धनदोऽप्यदः। सार्थवाह! वणिक् जात्या भरतक्षेत्रवास्यहम् ॥ ३६० ॥
चलितः कटाहद्वीपं प्रति यानेन सप्रियः। भग्नं च वारिधौ यानं ततोऽत्रागां प्रियान्वितः ॥ ३६१ ॥
पतिता मत्प्रिया ह्यस्मिन् कूपे नीरेक्षणाकुला। अहमप्यपतं चास्याः स्नेहबद्धो भवे यथा ॥ ३६२ ॥
जलान्तःपतितौ नावां तत्तीरे किन्तु भाग्यतः। तुष्टा ददौ च रत्नानि तत्र मे जलदेवता ॥ ३६३ ॥
कथितं च तयैवं यत् यानमत्र समेष्यति। तत्राधिरुह्य गच्छेस्त्वं निजस्थानं सुखेन भोः ॥ ३६४ ॥
कथितेयं निजा वार्त्ता सार्थवाह! मया तव। त्वमप्यात्मकथां ब्रूहि यतः सख्यं प्रवर्द्धते ॥ ३६५ ॥
सोऽवदद्देवदत्ताख्यो भरतादहमप्यहो। कटाहद्वीपमगमं चलितश्च गृहं प्रति ॥ ३६६ ॥
तदेहि भद्र! त्वमपि गच्छावः सममेव यत्। आरोपय निजं वस्तु मम याने प्रियां तथा ॥ ३६७ ॥
धनदोऽप्यब्रवीदेवं कुरु सार्थपते! यतः। षष्ठांशं ते प्रदास्यामि वस्तुनोऽस्य गृहं गतः ॥ ३६८ ॥
धनेन किमसारेण गौरव्योऽसि त्वमेव मे। तद्वस्त्वारोपितं याने सार्थेशेनेति जल्पता ॥ ३६९ ॥
मार्गेऽथागच्छतस्तस्य सार्थेशस्य दुरात्मनः। चचाल चित्तं ललनां तां विलोक्य धनं तथा ॥ ३७० ॥
रात्रौ पुरीषव्युत्सर्गनिमित्तं मञ्चिकागतः। प्रक्षिप्तः सार्थवाहेन धनदोऽथ महोदधौ ॥ ३७१ ॥
दूरं गतेन तेनोचे धनदोऽद्यापि नैति यत्। गतः शरीरचिन्तार्थं तन्नूनं पतितोऽर्णवे ॥ ३७२ ॥

नरेशान्वेषयामास तं चिरं कैतवादसौ । पश्चादाश्वासयामास तत्प्रियां प्रियभाषणैः ॥ ३७३ ॥
अन्यस्मिंश्च दिने तेन सोचे तिलकसुन्दरी । संस्थितस्त्वत्पतिर्भद्रे ! तत्पत्नी मे भवानघे ! ॥ ३७४ ॥
तच्छ्रुत्वा चिन्तयामास सा चैवं बुद्धिशालिनी । मत्पतिर्मेऽङ्गलुब्धेन नूनं व्यापादितोऽमुना ॥ ३७५ ॥
ममैष शीलविध्वंसं करिष्यति बलादपि । ततः कृत्वोत्तरं किञ्चित्कालक्षेपोऽत्र युज्यते ॥ ३७६ ॥
विचिन्त्यैवमुवाचैवं संप्राप्तस्य पुरं तव । अनुज्ञाता महीभर्त्रा भविष्यामि गृहिण्यहम् ॥ ३७७ ॥
हृष्टः सोऽप्यनुमेने तदिति ध्यायन् यथा नृपम् । तोषयित्वा स्वदानेन करिष्यामि समीहितम् ॥ ३७८ ॥
इतः स धनदस्तेन प्रक्षिप्तो जलधेर्जले । पूर्वभग्नस्य पोतस्य लेभे खण्डं विधेर्वशात् ॥ ३७९ ॥
गाढं तदुरमाऽऽश्लिष्य क्षुभ्यमाणस्तरङ्गकैः । पञ्चभिर्वासरैः प्राप्तः स्वपुरासन्नकूलकम् ॥ ३८० ॥
हृष्टाशयो निजपुरं पश्यन्नूर्ध्वमुखो दृशा । गिलितो गुरुमत्स्येन फलकेन सहैव सः ॥ ३८१ ॥
दध्यौ च पतितो मत्स्यजठरे नरकोपमे । रे जीव ! दैवदोषेण गाथां भावयतां ततः ॥ ३८२ ॥
यद्वा पूर्वभवाचीर्णकर्मदोषेण केनचित् । पतत्यसौख्यं मय्येव च्छिद्रं जीर्णवृताविव ॥ ३८३ ॥
इति ध्यात्वा स सस्मार मणिमापन्निवारकम् । तत्प्रभावेन मत्स्योऽसौ गृहीतस्तत्र धीवरैः ॥ ३८४ ॥
स्फाटिते जठरे तस्य दृष्टोऽसौ तैः सविस्मयैः । प्रक्षालितश्च नीरेण कथितश्च महीपतेः ॥ ३८५ ॥

१ मृतः. २ धनदानेन.

राजाऽपि विस्मितमनास्तमानाय्यात्मसन्निधौ । पप्रच्छ किमिदं भद्राघटमानं तवाऽभवत् ॥ ३८६ ॥
अयि कोऽसि कथं वा त्वं पतितोऽसि झषोदरे । इति सत्यं ममाख्याहि वर्त्तते कौतुकं महत् ॥ ३८७ ॥
धनदोऽप्यवदत्तावद्वणिग्ज्ञातिमवेहि माम् । भग्ने याने फलहकं संप्राप्यागामिह प्रभो ! ॥ ३८८ ॥
निरीक्ष्यमाणो नगरं मत्स्येन गिलितोऽस्म्यहम् । गृहीतः स तु कैवर्तैर्जठरं चास्य दारितम् ॥ ३८९ ॥
दृष्टश्च तस्य मध्येऽहं ततश्चैभिः सविस्मयैः । भवत्पार्श्वे ममानीतो राजन्निति कथा मम ॥ ३९० ॥
स्वर्णक्षालितनीरेण स्नपितः सोऽथ भूभुजा । मत्स्योदराभिधानश्च स्थापितो निजसन्निधौ ॥ ३९१ ॥
तत्प्रार्थितेन तेनासौ विदधे च स्थगीधरः । निनाय दिवमानेवं स्वस्वरूपमवेदयन् ॥ ३९२ ॥
सुदत्तः सार्थवाहोऽथ तस्य पूर्वापकारकृत् । वातप्रेरितपोतेन तत्रान्येद्युः समाययौ ॥ ३९३ ॥
गृहीत्वा प्राभृतं सोऽपि प्रतीहारनिवेदितः । आययौ नृपतेः पार्श्वे निषण्णश्च कृतानतिः ॥ ३९४ ॥
राजाऽपि वणिजस्तस्य प्रियालापं स्वयं व्यधात् । दापयामास ताम्बूलं स्थगीधरकरेण च ॥ ३९५ ॥
विज्ञाय सोऽथ तत्तस्मै ददौ भूत्वा मुखाग्रतः । स सुदत्तोऽपि धनदमुपलक्षयति स्म तम् ॥ ३९६ ॥
परं सोऽघटमानत्वात्किञ्चित्सन्देहतत्परः । भणितो भूभुजा यत्तेऽर्द्धदानं भवतादिति ॥ ३९७ ॥
महाप्रसाद इत्युक्त्वा निजस्थानं गतोऽन्यदा । पप्रच्छ पुरवास्तव्यं पुरुषं कञ्चिदित्यसौ ॥ ३९८ ॥

१ मत्स्योदरे.

अयं स्थगीधरो राज्ञः किमु भद्र ! क्रमागतः । तेनापि कथितं तस्य तत् स्वरूपं यथातथम् ॥ ३९९ ॥
अत्रान्तरे च मातङ्गो गौरव्यस्तस्य भूपतेः । आगाद् गीतरतिर्नाम्ना सार्थवाहस्य सन्निधौ ॥ ४०० ॥
ततो गातुं प्रवृत्तोऽसौ निजवृन्दसमन्वितः । रञ्जितः सार्थवाहोऽपि तद्गीतकलयाऽग्र्यया[1] ॥ ४०१ ॥
दानेन तोषयित्वैनमूचे भो यदि मामकम् । कार्यं साधयसि त्वं तत् द्रव्यं यच्छामि ते बहु ॥ ४०२ ॥
सोऽवदत्साधयिष्यामि सर्वं कथय मे स्फुटम् । वशे यस्य महीपालस्ततः किं मे सुदुष्करम् ? ॥ ४०३ ॥
सार्थवाहोऽब्रवीत्तर्हि त्वयैकान्ते महीपतिः । एवं वाच्यो यथा मत्स्योदरोऽयं मम बान्धवः ॥ ४०४ ॥
अङ्गीकृतेऽथ तत्कार्ये स तस्मै प्रीतमानसः । सङ्घाटांश्चतुरः स्वर्णेष्टिकानां प्रददौ सुधीः ॥ ४०५ ॥
ययौ च नृपतेः पार्श्वे समासीनस्य तस्य तु । मातङ्गोऽपि समभ्येत्य पुरो गातुं प्रचक्रमे ॥ ४०६ ॥
तद्गीतरञ्जितो राजा स्थगीधरमवोचत । देहि ताम्बूलमेतस्मै गान्धर्विकवराय भोः ॥ ४०७ ॥
ताम्बूलं ददतस्तस्य लगित्वा कण्ठकन्दले । चिराद् दृष्टोऽसि हे भ्रातरिति जल्पन् रुरोद सः ॥ ४०८ ॥
किमेतदिति भूपेन पृष्टो मत्स्योदरः सुधीः । हृद्युपायं विचिन्त्योचे देवायं सत्यमूचिवान् ॥ ४०९ ॥
अस्मिश्च नगरे पूर्वं मातङ्गोऽभूत्पिताऽऽवयोः । महागायन इत्युर्वीपतेः प्रणयभाजनम् ॥ ४१० ॥
तस्याभूतामुभे भार्ये तयोरावां सुतौ प्रभो ! । मनागनिष्टा मे माता तदनिष्टोऽप्यहं पितुः ॥ ४११ ॥

---

१ मुख्यया.

सुदीर्घदर्शिना तेन क्षिप्तानि जनकेन मे । जङ्घान्तः पञ्च रत्नानि तत्प्रहारश्च रोहितः ॥ ४१२ ॥
भणितं चेति यद्वत्स ! विपद्येतानि भक्षयेः । सर्वाङ्गेष्वपि तेनास्य संक्षिप्तानि घनानि तु ॥ ४१३ ॥
ततो विदार्य जङ्घां स्वां तानि रत्नान्यदर्शयत् । प्रत्ययार्थं महीभर्त्तुर्धनदो मतिमद्वरः ॥ ४१४ ॥
ततो गीतरती राजादेशाद्धद्ध्वा पदातिभिः । विदारयितुमारब्धौ जजल्पैवं सुदीनवाक् ॥ ४१५ ॥
स्वामिन्नेष न भ्राता किं त्विदं कर्म गर्हितम् । रैदानान्सार्थवाहेन पाप्मना कारितोऽस्म्यहम् ॥ ४१६ ॥
प्रतीतिर्यदि ते देव ! मद्गिरा नहि जायते । तदानाययत स्वर्णसङ्घाटांस्तान्ममौकसः ॥ ४१७ ॥
राजाऽप्यालोकयामास मत्स्योदरमुखं पुनः । प्रत्यूचे पार्थिवं सोऽपि सत्यमेतदपि प्रभो ! ॥ ४१८ ॥
पुनः प्रोवाच भूपालः परमार्थं निवेदय । मत्स्योदर ! महाश्चर्यकारि सर्वमिदं यतः ॥ ४१९ ॥
सोऽवदत्तर्हि विद्यन्ते यानेऽस्य वणिजो मम । सपादाष्टशती स्वर्णसङ्घाटानां महीपते ! ॥ ४२० ॥
पञ्चदश सहस्राणि रत्नानां च प्रभावताम् । इति विज्ञाय गोस्वामिन् ! यत्कर्त्तव्यं कुरुष्व तत् ॥ ४२१ ॥
अभिज्ञानमिदं चात्र यतः सर्वेऽपि सम्पुटाः । स्वनामाङ्काः कृताः सन्त्युपलक्षणकृते मया ॥ ४२२ ॥
भूपपृष्टेन तेनाथ तन्नामोदीरितं निजम् । राज्ञाऽप्यानायितास्तेऽथ सङ्घाटाः श्वपचौकसः ॥ ४२३ ॥
द्विधा कृतेषु तेष्वन्तर्दृष्ट्वा तां धनदाभिधाम् । सद्यश्चुकोप मातङ्गवणिग्भ्यामवनीपतिः ॥ ४२४ ॥
हन्यमानौ च तौ मत्स्योदरेणैव विमोचितौ । सोऽथ कल्याणनीरेण स्नात्वा शुचिरभूत्पुनः ॥ ४२५ ॥

वणिक्पार्श्वात् निजं वस्त्वादाय मातङ्गतोऽपि च । तयोः कृत्वोचितं चाभूद्धनदो धनदोपमः ॥ ४२६ ॥
पृष्टोऽथ भूभुजा भूयः स जगादात्मनः कथाम् । सत्यां यथाऽत्र वास्तव्यो देवाहं श्रेष्ठिनन्दनः ॥ ४२७ ॥
गाथा मयैका दीनारसहस्रेणात्ममात्कृता । ततो निष्कासितः पित्रा ततो देशान्तरं गतः ॥ ४२८ ॥
इत्यादि सकलां वार्तां कथयित्वाऽब्रवीन्नृपम् । देवाद्यापि प्रकाश्योऽहं नावश्यं कस्यचिद्यतः ॥ ४२९ ॥
मम वित्तकलत्रापहारकार्यपरोऽपि चेत् । सार्थवाह इहायाति ततो भव्यं भवेत्प्रभो ! ॥ ४३० ॥
सार्थेशो देवदत्तोऽपि तत्रान्येद्युः समाययौ । सार्द्धं तिलकसुन्दर्या स आगाच्च नृपान्तिकम् ॥ ४३१ ॥
ढौकयित्वा रत्नजातमुपविष्टो महीभुजा । अयं मत्स्योदरप्रोक्तो वणिगित्युपलक्षितः ॥ ४३२ ॥
मत्स्योदरोऽपि तं दृष्ट्वा तथा तिलकसुन्दरीम् । जिज्ञासुस्तदभिप्रायं गोपिताङ्गोऽभवत् तदा ॥ ४३३ ॥
आललापाथ भूपालः सार्थवाहं ससंभ्रमः । भद्र ! त्वं कुत आयासीः का चेयं बालिका वरा ॥ ४३४ ॥
सोऽवोचत कटाहाख्यद्वीपादत्रागतोऽस्म्यहम् । इयं च जलधेरन्तर्द्वीपे लब्धा मयैकका ॥ ४३५ ॥
सुवस्त्राहारताम्बूलालङ्कारैः सत्कृताऽपि हि । राजंस्तवानुमत्यैव भवेन्मम गृहिण्यसौ ॥ ४३६ ॥
राजा प्रोवाच हे सुभ्रु ! किं तेऽयं रोचते वरः । अथवा त्वामयं कामी बलादेव रिरंसते ॥ ४३७ ॥
साऽवादीत्कोऽस्य पापस्य गृह्णीयादभिधामपि । गुणरत्ननिधिः सिन्धौ प्रक्षिप्तो येन मे पतिः ॥ ४३८ ॥
अनेन प्रार्थिता स्वामिन्नकार्षमिदमुत्तरम् । यतो राजप्रदत्ताऽहं भविष्यामि प्रिया तव ॥ ४३९ ॥

निस्त्राणया मयैतस्मात् शीलमेवं हि रक्षितम् । अधुना तु करिष्यामि प्रवेशं ज्वलितानले ॥ ४४० ॥
स्त्रीणामवश्यं साक्षी स्याद्भर्त्तुः सङ्गे हुताशनः । स एव शरणं तासां विरहे तस्य युज्यते ॥ ४४१ ॥
भणिता भूभुजा सैवं मा कार्षीर्मृत्युसाहसम् । इतोऽहं दर्शयिष्यामि परिणीतपतिस्तव ॥ ४४२ ॥
सोचे नरेन्द्र! नो कर्त्तुं परिहासस्तवोचितः । क्वास्ति मे स धवो यो हि प्रक्षिप्तोऽगाधवारिधौ ॥ ४४३ ॥
ततस्ताम्बूलदानार्थमुत्थाप्य धनदं नृपः । प्रोचे भद्रे! स्वभर्त्तारममुं दृष्ट्या विलोकय ॥ ४४४ ॥
तमालोक्योपलक्ष्यापि साऽसंभाव्यसमागमम् । यावद्द्यापि नो हर्षप्रकर्षं तादृशं दधौ ॥ ४४५ ॥
अवदद्धनदस्तावद्देवास्याः स पतिः स्फुटम् । यः शून्यागारसंस्थायाः कुतोऽप्यागादतर्कितः ॥ ४४६ ॥
अनयैवार्पितो यस्य खड्गो राक्षसघातकृत् । राक्षसश्च हतो येनोढेयं चानुरागिणी ॥ ४४७ ॥
इत्यादि सर्ववृत्तान्ते कथिते सति मूलतः । सूर्यालोकेऽब्जिनीवाभूत्सा सद्यो विकसन्मुखी ॥ ४४८ ॥
जाता मत्स्योदरस्यैषा पुनर्जाया नृपाज्ञया । मार्यमाणश्च सार्थेशो नृपात्तेनैव मोचितः ॥ ४४९ ॥
अनन्यसदृशं सर्वमलङ्कारादि वस्तु तत् । धनदो वणिजाऽऽनीतं दर्शयामास भूपतेः ॥ ४५० ॥
कृतान्यकृत्यः सोऽन्येद्युरनुज्ञाप्य धराधिपम् । भूयसा परिवारेण प्रययौ पितृमन्दिरम् ॥ ४५१ ॥
राजमान्योऽप्यमित्यस्यासनादिस्वागतक्रियाम् । विधाय व्याजहारैवं रत्नसारोऽप्युदारधीः ॥ ४५२ ॥
धन्योऽहं यस्य गेहे त्वामायासीर्नृपवल्लभः । तद्ब्रूहि वस्तु येनार्थः सर्वस्वमपि ते मम ॥ ४५३ ॥

धनदोऽप्यवदत्तात ! सत्यमेतद्ब्रवीषि यत् । परं पृच्छाम्यहं किञ्चित्कारणेन गरीयसा ॥ ४५४ ॥
यस्तेऽभूद्धनदो नाम तनयः क्व नु सोऽधुना । शुद्धिं जानासि तस्य त्वं क्वाप्यसौ विद्यते न वा ॥ ४५५ ॥
वचः श्रुत्वास्य साकूतं[1] सुताकारं च वीक्ष्य तम् । सुतोदन्तमथ श्रेष्ठी सवितर्को न्यवेदयत् ॥ ४५६ ॥
गाथा सुतेन दीनारसहस्रेणाददे मम । तदर्थे परुषं किञ्चिद्वचनं भणितो मया ॥ ४५७ ॥
अभिमानवशात्क्वापि गृहान्निःसृत्य सोऽगमत् । गतस्याभूद्बहुः कालः शुद्धिं जानामि नास्य तत् ॥ ४५८ ॥
आकृत्या वचसा चैवं मन्येऽहं त्वं स एव हि । त्वयि गोपयति स्वं च कुर्वे सन्देहमप्यहो ! ॥ ४५९ ॥
सदृशा बहवो लोका दृश्यन्तेऽत्र महीतले । ततस्त्वमपि मत्पुत्रसदृक्षोऽपि भविष्यसि ॥ ४६० ॥
धनदः स्माह हे तात ! स एवास्मि सुतस्तव । तस्यांह्रौ दक्षिणे चिह्नं दृष्ट्वा ज्ञातोऽमुनाऽप्यसौ ॥ ४६१ ॥
पितुः पादौ ननामायं गाढं सोऽप्यालिलिङ्ग तम् । हर्षाश्रुपूरपूर्णाक्षो जगाद च सगद्गदम् ॥ ४६२ ॥
हा पुत्रात्राऽऽगतेनापि किं त्वयाऽऽत्मा निगूहितः ? नोत्कण्ठा किमु ते पित्रोश्चिरान्मिलितयोरपि ॥ ४६३ ॥
क्वास्थाः कालमियन्तं त्वमनुभूतं त्वया किमु । दुःखं सुखं वा हे वत्स ! देशान्तरगतेन हि ॥ ४६४ ॥
धनदोऽप्यश्रुपूर्णाक्षः सङ्क्षेपादात्मनः कथाम् । पित्रोर्निवेदयामास क्षमयामास तौ तथा ॥ ४६५ ॥
इदं चोवाच हे तात ! पार्थिवान्मां विमोचय । यथाऽहं तत्र वधूश्चाऽऽगच्छावो निजमन्दिरम् ॥ ४६६ ॥

१ साभिप्रायम्.

गत्वा राजकुले सोऽथ तमर्थं निरमापयत् । सह पुत्रेण भूपालमप्याकारयति स्म च ॥ ॥ ४६७ ॥
ततो गजेन्द्रमारूढो धनदः प्रेयमीयुतः । अनुगम्यमानो भूपेनाऽऽगान्निजनिकेतनम् ॥ ४६८ ॥
पुत्रे देशान्तरायाने गृहप्राप्ते च भूपतौ । हृष्टः प्रावर्त्तयन् श्रेष्ठी स महोत्सवमुत्तमम् ॥ ४६९ ॥
अत्रान्तरे नृपसुतो नृपस्योत्सङ्गसंस्थितः । यावदासीन्मनस्तोषं जनयन्निजलीलया ॥ ४७० ॥
तावदारामिकः कश्चिद् उद्धृत्य स्वकरण्डकात् । कुसुमान्यार्पयद्राज्ञस्तनयस्तानि चाग्रहीत ॥ ४७१ ॥
तेषामन्तर्गतेनायं दष्टो राजाहिनाऽणुना । नाशाग्रे घ्राणमानोऽपि पूत्करोति ततश्च सः ॥ ४७२ ॥
राजाऽपि पुष्पमध्यस्थं तं दृष्ट्वाऽहिं सुदुःखितः । प्रोचे गारुडिकं भद्र! कुर्व्वेनं गतवेदनम् ॥ ४७३ ॥
सोऽवादीद्राजसर्पोऽयं सर्वसर्पशिरोमणिः । तत्कर्त्तुं युज्यतेऽस्माकमत्र मन्त्रक्रिया नहि ॥ ४७४ ॥
ततश्चक्रेश्वरीदत्तमणिनीरेण निर्विषम् । तं चक्रे धनदः सद्यो मुमुदे च महीपतिः ॥ ४७५ ॥
ततः संमान्य धनदं समागत्य निजं गृहम् । नृपोऽप्यकारयद् वर्द्धापनं पुत्रस्य जन्मवत् ॥ ४७६ ॥
अथासौ नृपतेः पुत्रः क्रमात्संप्राप्तयौवनः । निर्ययौ गजमारूढो राजपाटिकयाऽन्यदा ॥ ४७७ ॥
पुरस्य पश्यता शोभां दृष्टा तेन मनोहरा । तनया शूरराजस्य श्रीषेणा नाम कन्यका ॥ ४७८ ॥
निरीक्ष्योद्भटरूपां तां कुमारो मारपीडितः । बभूव सा च तं दृष्ट्वा नेषदप्यनुरागिणी ॥ ४७९ ॥

१ राजपुत्रः. २ पूत्करोति स्म दष्टोऽस्मीति ततश्च सः—इति पाठान्तरं माधीयः.

कुमारो विरहं तस्या गृहे प्राप्तोऽरतिं गतः । मित्रैश्च तदभिप्रायो महीभर्तुर्निवेदितः ॥ ४८० ॥
मन्त्र्येकः पार्थिवादिष्टो गत्वा शूरनृपान्तिके । कुमारार्थे ययाचे तां श्रीषेणां वरकन्यकाम् ॥ ४८१ ॥
परमानुग्रहं सोऽथ मन्यमानोऽतिगौरवम् । चक्रे यावदमात्यस्य तावत्सा बालिकाऽवदत् ॥ ४८२ ॥
यदि दास्यथ मां तस्मै यूयं तात ! तदा ध्रुवम् । आत्महत्यां करिष्यामि तच्छ्रुत्वा विषसाद सः ॥ ४८३ ॥
ऊचे च सचिवं तावत् यात यूयं नृपान्तिकम् । कन्यकामनुनीयेमां कथयिष्याम्यहं पुनः ॥ ४८४ ॥
मन्त्री गत्वा तदाचख्यौ राज्ञः शूरोऽपि कन्यकाम् । बभाण सा तु श्रीषेणा नेच्छति स्मैव तं पतिम् ॥ ४८५ ॥
तेनाथ पार्थिवस्येदं कथितं पार्थिवोऽपि तत् । सुतस्याख्यत्सोऽपि गाढं बभूव मदनातुरः ॥ ४८६ ॥
अत्रान्तरे च संप्राप्तो धनदो राजसन्निधौ । पप्रच्छैवं महाराज ! यूयं चिन्तातुरा नु किम् ? ॥ ४८७ ॥
राजाऽपि तनयावस्थास्वरूपं पर्यकीर्त्तयत् । तच्छ्रुत्वा श्रेष्ठिभूः स्माहालं विषादेन भूपते ! ॥ ४८८ ॥
देवीचक्रेश्वरीदत्तमणेर्माहात्म्यतः क्षणात् । साधयिष्याम्यदः कार्यमित्युक्त्वा मणिमानयत् ॥ ४८९ ॥
आर्पयच्च कुमारस्याराधयामास सोऽपि तम् । धनदाख्यातविधिना तस्य तुष्टो मणिस्ततः ॥ ४९० ॥
सा शूरनन्दनी तस्मिन्ननुरागं नृपात्मजे । दधौ तं च समीपस्थां सखीं स्निग्धामजिज्ञपत् ॥ ४९१ ॥
साऽऽचख्यौ तत्पितुः सोऽपि गत्वाऽशंसन्महीभुजः । राजाऽपि तनयस्याख्यत् ततः स्वस्थो बभूव सः ॥४९२॥

सांवत्सरमथाऽऽकार्य्य विवाहदिनमुत्तमम् । राजाऽपृच्छन्म चाचख्यौ तद्द्वितीयदिने शुभम् ॥ ४९३ ॥
लग्ने दोषोज्झिते तस्मिन् शुभग्रहनिरीक्षिते । शकुनैर्विहितोत्माहो विवाहः ममभूत्तयोः ॥ ४९४ ॥
स कुमारस्तया मार्द्ध भेजे वैषयिकं सुखम् । अथान्येद्युर्नृपस्योग्रा शिरःशूलव्यथाऽभवत् ॥ ४९५ ॥
रोगापहारिसुमणेः प्रभावाद् धनदोऽपि ताम् । तत्पीडां शमयामास दुःसाध्यां भिषजामपि ॥ ४९६ ॥
ततश्च पार्थिवो दध्यावस्याहो मदृशः पुमान् । नास्ति कोऽपि महीपीठे गुणरत्नमहोदधिः ॥ ४९७ ॥
भाग्योदयेन केनापि सम्पन्नोऽयं सखा मम । इति ध्यात्वाऽधिकं मेने स्वसुतादपि तं मदा ॥ ४९८ ॥
चतुर्ज्ञानधरः पद्भ्यां पवित्रितवसुन्धरः । आगात्तत्र पुरेऽन्येद्युः मूरिः शीलंधराभिधः ॥ ४९९ ॥
जग्मुस्तद्वन्दनाहेतोः पौराः सर्वेऽपि भक्तितः । दृष्ट्वा तान् ज्ञातवृत्तान्तो रथस्थो धनदोऽप्यगात ॥ ५०० ॥
कृत्वा नतिं यथास्थानमासीनेषु जनेषु च । सूरिः शीलंधरः मोऽथ विदधे धर्मदेशनाम् ॥ ५०१ ॥
जीवानामिह संसारे विना धर्मेण नो सुखम् । त्यक्त्वा प्रमादं भो भव्यास्तद्धर्मे कुरुतादरम् ॥ ५०२ ॥
कुर्वन् कलङ्कयेत् धर्मं मनसाऽप्यन्तरा हि यः । महणाक इवाप्नोति म सौख्यं दुःखमिश्रितम् ॥ ५०३ ॥
पप्रच्छ धनदः कोऽसौ भगवन्महणाभिधः । कुर्वताऽपि कथं तेन धर्मो नाम कलङ्कितः ॥ ५०४ ॥
सूरिः प्रोचेऽत्र भरते पुरे रत्नपुराभिधे । शुभदत्ताभिधः श्रेष्ठी वमति स्म महाधनः ॥ ५०५ ॥

1 ज्योतिर्विदम.

भार्या वसुन्धरा तस्य महणाकश्च तत्सुतः । सोमश्रीर्नाम तस्यापि बभूव सहचारिणी ॥ ५०६ ॥
अन्यदा रथमारुह्योद्यानिकायां ययावमौ । उद्याने मण्डपस्तत्र विस्तीर्णश्च विनिर्मितः ॥ ५०७ ॥
खाद्य–भोज्य–लेह्य–पेय–भेदैस्तत्र चतुर्विधम् । बुभुजे स वराहारं मित्रैः सह यदृच्छया ॥ ५०८ ॥
ततस्ताम्बूलमादाय पञ्चसौगन्धिकं वरम् । क्षणं दृष्टिकृतानन्दं प्रेक्ष्य प्रेक्षणकं तथा ॥ ५०९ ॥
बहु पादपसङ्कीर्णं फलपुष्पर्द्धिबन्धुरम् । उद्यानमीक्षमाणोऽसौ ददर्शैकं महामुनिम् ॥ ५१० ॥ ( युग्मम् )
स मित्रप्रेरितो गत्वा ववन्दे तं तपोधनम् । सोऽपि ध्यानं विमुच्यास्मै धर्मलाभाशिषं ददौ ॥ ५११ ॥
तद्धर्मदेशनां श्रुत्वा प्रतिबुद्धय स शुद्धधीः । सम्यक्त्वमूलं तत्पार्श्वे गृहिधर्ममुपाददे ॥ ५१२ ॥
पुनः साधुं नमस्कृत्य स गतो निजमन्दिरम् । द्रव्येण कारयामास जिनमन्दिरमुत्तमम् ॥ ५१३ ॥
पश्चाच्च चिन्तयामास बहुद्रव्यव्ययो मया । कृतो धर्मरसाधिक्यपराधीनतया कथम् ? ॥ ५१४ ॥
स एवं विगतोत्साहो भूत्वा कत्यपि वासरान् । ततो लोकानुरोधेनाकारयत्प्रतिमामपि ॥ ५१५ ॥
प्रतिष्ठां कारयामास तस्याश्च श्वेतभिक्षुभिः । न्यवारयज्जीवमारिं ददौ दानं यथोचितम् ॥ ५१६ ॥
पुनर्दध्यावहो धर्मे बहुद्रव्यव्ययं व्यधाम् । उपार्जितधनात्तुर्यभाग एवात्र युज्यते ॥ ५१७ ॥
फलं भावि न वाऽस्येति सन्देहो मे प्रवर्त्तते । शास्त्रे च श्रूयते स्तोकव्ययस्यापि फलं महत् ॥ ५१८ ॥
स एवं संशयानोऽपि चक्रे पूजादिसत्क्रियाम् । अन्येद्युर्गृहमायातावपश्यच्च तपोधनौ ॥ ५१९ ॥

स्वयमेतौ शुभाहारैरुत्थाय प्रत्यलाभयत् । गतयोश्च तयोश्चिन्तां चक्रे धन्योऽहमित्यसौ ॥ ५२० ॥
निद्राक्षये च यामिन्यामन्यदाऽचिन्तयत्पुनः । अप्रत्यक्षफलेनेह कृतेन श्रेयसा हि किम् ? ॥ ५२१ ॥
अपरेद्युर्मुनिद्वन्द्वं दृष्ट्वा मलमलीमसम् । स एवं चिन्तयामास धिगहो ! मलिनाविमौ ॥ ५२२ ॥
यद्येते निर्मलं वेषमकरिष्यन्महर्षयः । ततोऽभविष्यत् किं नाम जैनधर्मस्य दूषणम् ॥ ५२३ ॥
अथवा हा मया दुष्टं चिन्तितं मुनिपुङ्गवाः । भवन्त्येवंविधा यस्मात्संयमेनैव निर्मलाः ॥ ५२४ ॥
एवं च शुभभावेन शुभं कर्म ममार्जयत । सोऽशुभेनाशुभं कर्मार्जयति स्मान्तराऽन्तरा ॥ ५२५ ॥
आयुःक्षये विपद्याभूत्स देवो भुवनाधिपः । ततश्च्युत्वा समुत्पन्नः स त्वं धनदनामकः ॥ ५२६ ॥
कृत्वा कृत्वाऽन्तरा धर्मो यत्त्वया दूषितस्तदा । सुखानि दुःखमिश्राणि लब्धानीह ततः स्फुटम् ॥ ५२७ ॥
तच्छ्रुत्वा मूर्च्छितः पृथ्व्यां पपात धनदः क्षणम् । जातिस्मृत्या निजं पूर्वभवभावं ददर्श च ॥ ५२८ ॥
उवाच च प्रभो ! सत्यं यद् युष्माभिः प्ररूपितम् । ततो बन्धूननुज्ञाप्य ग्रहीष्याम्यनगारताम् ॥ ५२९ ॥
इत्युदित्वा गृहे गत्वा पितरावेवमूचिवान् । हे अंब ! तात ! मां दीक्षाकृते विसृजतं युवाम् ॥ ५३० ॥
ताभ्यां निवार्यमाणोऽपि न यावद्विरराम सः । तावत्तावूचतुर्दीक्षामादास्यावस्त्वया सह ॥ ५३१ ॥

१ धर्मेण.

राज्ञः पार्श्वे ययौ सोऽथ स्वाभिप्रायं शशंस च। सोऽप्यचेऽहमपि समं ग्रहीष्यामि व्रतं त्वया ॥ ५३२ ॥
धनदः स्माह गार्हस्थ्ये मम स्वामी भवानभूत्। भविष्यति यतित्वेऽपि संयोगोऽयं मनःप्रियः ॥ ५३३ ॥
ततो राज्ञा सुतो राज्ये स्थापितः कनकप्रभः । धनदस्य सुतः श्रेष्ठिपदे चैव धनावहः ॥ ५३४ ॥
ततः सार्द्धं महीभर्त्रा पितृभ्यां भार्यया तथा । उपाददे परिव्रज्यां धनदो गुरुसन्निधौ ॥ ५३५ ॥
गृहीत्वा द्विविधां शिक्षां कृत्वा च विविधं तपः । मृत्वा सर्वेऽपि ते जग्मुः पुण्यात्मानः सुरालयम् ॥ ५३६ ॥
ततश्च्युत्वा मनुष्यत्वं प्राप्य श्रमणतां तथा । क्षेत्रे महाविदेहे ते संप्राप्ताः परमं पदम् ॥ ५३७ ॥

॥ इति मत्स्योदर (धनद) कथा ॥

धनदस्य कथामेतां श्रुत्वा विद्याधराधिप ! । धर्मो निरन्तरं कार्यस्त्वयेत्यूचे मुनिः स तु ॥ ५३८ ॥
तच्छ्रुत्वाऽमिततेजाः स गुर्वाज्ञां शिरसा दधत्। उत्थाय नमति स्मांह्री भूयोऽपि मुनिवर्ययोः॥ ५३९ ॥
चारणश्रमणौ तौ च समुत्पत्य विहायसा । तपोमाहात्म्यसम्पन्नौ जग्मतुः स्थानमीप्सितम् ॥ ५४० ॥
नरखेचरराजौ श्रीविजयामिततेजसौ । गमयामासतुः कालं तावथो धर्मतत्परौ ॥ ५४१ ॥
तौ यात्रात्रितयं धन्यौ चक्रतुः प्रतिवत्सरम् । तत्र स्यात् शाश्वतं यात्राद्वयमेका त्वशाश्वती ॥ ५४२ ॥
चैत्रस्य विमले पक्षे यात्रैका शाश्वती भवेत्। द्वितीया चाश्विनीमासे प्रसिद्धाऽष्टाह्निकाऽभिधा॥ ५४३ ॥

देवा विद्याधराश्चैवे द्वीपे नन्दीश्वराभिधे । यात्रे कुर्युर्नगाः स्वस्वस्थानचैत्येषु संमदात् ॥ ५४४ ॥
तृतीयामपि तौ यात्रां चक्रतुः सीमपर्वते । बलर्षिकेवलोत्पत्तिस्थाने नाभेयमन्दिरे ॥ ५४५ ॥
बहून्यब्दसहस्राणि कृत्वा तौ राज्यमन्यदा । गत्वा मेरौ ववन्दाते सनातनजिनक्रमान् ॥ ५४६ ॥
नन्दनाख्ये वने तत्र चारणश्रमणावुभौ । विपुलमहामतिसंज्ञौ चोपविष्टावपश्यताम् ॥ ५४७ ॥
नत्वा श्रुत्वा च तद्व्याख्यां पृष्टौ ताभ्यामिमौ मुनी । भगवन्तौ कियदायुरावयोरिति कथ्यताम् ॥ ५४८ ॥
षड्विंशतिर्दिनान्यायुः शेषमस्तीति जल्पितौ । ताभ्यां तावाकुलीभूतौ पुनरेवं जजल्पतुः ॥ ५४९ ॥
विषयामिषगृध्राभ्यां नेयत्कालं कृतं व्रतम् । संप्रत्यल्पायुषावावां करिष्यावो हहा किमु ? ॥ ५५० ॥
मुनिभ्यां भणितावेतौ विनष्टं युवयोर्नु किम् ? । व्रतं गृह्णीतमद्यापि युवां स्वर्गापवर्गदम् ॥ ५५१ ॥
ततः स्वस्वपुरं प्राप्तौ सुतौ राज्ये निधाय तौ । पार्श्वे जगृहतुर्दीक्षामभिनन्दनमन्मुनेः ॥ ५५२ ॥
स्थितावनशनेनैतौ पादपोपगमेन च । मस्मार जनकस्यौजस्तदा श्रीविजयो मुनिः ॥ ५५३ ॥
ततश्च तपसाऽनेन भूयासमहमप्यहो । पित्रा सम इति व्यक्तं निदानमकरोदसौ ॥ ५५४ ॥
एवं कृतनिदानोऽमावन्योऽकृतनिदानकः । मृत्वा तौ प्राणते कल्पे समुत्पन्नौ महर्द्धिकौ ॥ ५५५ ॥
विमाने नन्दिकावर्त्ते स्वस्तिकावर्त्तके तथा । दिव्यचूलमणिचूलाभिधानौ सुरसत्तमौ ॥ ५५६ ॥ ( युग्मम् )

तत्रादौ सुरकृत्यजातमखिलं कृत्वा स्थितेर्वेदिनौ,
दिव्यं वैषयिकं ततः खलु सिषेवाते सुखं तौ मुदा ।।
कुर्वाणौ जिनचैत्यवन्दनविधिं यात्रां च नन्दीश्वरे,
गाढं चक्रतुरुज्ज्वलं शुभमती सम्यक्त्वरत्नं निजम् ।। ५५७ ।।

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरित्रे
चतुर्थपञ्चमभववर्णनो नाम द्वितीयः प्रस्तावः ।

# तृतीयः प्रस्तावः

इतोऽस्य जम्बूद्वीपस्य पूर्वविदेहमध्यगे । विजये रमणीयाख्ये सुभगायां महापुरि ॥ १ ॥
वृत्तगाम्भीर्यमर्यादाश्रीगुणैर्जितसागरः । प्रौढप्रतापयुक्तोऽभून् राजा स्तिमितसागरः ॥ २ ॥ ( युग्मम् )
भार्या वसुन्धरी तस्यानर्घ्यशीलवसुन्धरा । द्वितीयाऽनुद्धरी नाम बभूव स्त्रीगुणाश्रिता ॥ ३ ॥
दिव्यचूलः सुरः सोऽथ च्युत्वा प्राणतकल्पतः । राज्ञः पत्न्या वसुन्धर्या उदरे समवातरत् ॥ ४ ॥
गजपद्मसरश्चन्द्रवृषस्वप्नास्तया तदा । चत्वारो हलभृज्जन्मसूचका वीक्षिताः शुभाः ॥ ५ ॥
समये सुषुवे साऽथ तनयं कनकप्रभम् । अपराजित इत्याख्यां चक्रे तस्य पिता शुभाम् ॥ ६ ॥
अन्यदाऽनुद्धरीकुक्षौ सरसीव सितच्छदः । समुत्पन्नः सुतत्वेन मणिचूलो दिवश्च्युतः ॥ ७ ॥
सिंहार्ककुम्भसिन्धुश्रीरत्नोच्चयहुताशनान् । प्रविशतो मुखेऽद्राक्षीत सप्त स्वप्नानसौ तदा ॥ ८ ॥
कथयामास तान् भर्त्तुः सोऽपि पप्रच्छ तद्विदम् । सोऽवदत्ते सुतो विष्णुर्भावी स्वप्नैरिमैर्नृप ! ॥ ९ ॥
अग्रेतनसुतश्चायं बलभद्रो भविष्यति । इत्युक्त्वाऽगात् गृहे राज्ञा विसृष्टः स्वप्नपाठकः ॥ १० ॥
समये सुषुवे साऽपि देवी कृष्णप्रभं सुतम् । अनन्तवीर्य इत्याख्या पित्रा तस्य विनिर्ममे ॥ ११ ॥
काले कृतकलाभ्यासौ रूपलावण्यशालिनौ । उद्यौवनौ कुमारौ तौ पित्रा कन्ये विवाहितौ ॥ १२ ॥

अन्येद्युस्तत्पुरोद्याने विशिष्टज्ञानसंयुतः । स्वयंप्रभो नाम मुनिरागत्य समवासरत् ॥ १३ ॥
इतोऽश्ववाहनां कृत्वा परिश्रान्तः स भूपतिः । विश्रामार्थं तमुद्यानमाययौ नन्दनोपमम् ॥ १४ ॥
क्षणमेकं स विश्रान्तस्तत्राशोकतरोस्तले । ददर्श मुनिवर्यं तं ध्यानाचलकलेवरम् ॥ १५ ॥
तं त्रिःप्रदक्षिणीकृत्य नमस्कृत्य च भक्तितः । निषद्य च यथास्थानं स शुश्रावेति देशनाम् ॥ १६ ॥
कषायाः कटवो वृक्षा दुर्ध्यानं तत्प्रसूनकम्[1] । फलं च पापकर्मेह परलोके च दुर्गतिः ॥ १७ ॥
संसाराद्विग्नचित्तेन निर्वाणसुखमिच्छुना । कषायाः परिहर्तव्यास्तदेतेऽनर्थकारणम् ॥ १८ ॥
अथोचे पार्थिवः सत्यं महात्मन्निदमेव हि । परमेवं समाख्याहि कति भेदा भवन्ति ते ॥ १९ ॥
मुनिर्जगौ कोप-मान-माया-लोभाभिधा इमे । चत्वारः स्युस्तथाऽमीषां भेदाः प्रत्येकशोऽप्यमी ॥ २० ॥
आद्योऽनन्तानुबन्ध्यत्राप्रत्याख्यानो द्वितीयकः । प्रत्याख्यानस्तृतीयस्तु तुर्यः संज्वलनाभिधः ॥ २१ ॥
निश्चलोऽचलरेखेव दारुणो दुःखदायकः । भवेत्तत्रादिमो राजन् ! कोपोऽनन्ताऽनुबन्धकः ॥ २२ ॥
पृथ्वीरेखासमोऽप्रत्याख्यानो नाम्ना द्वितीयकः । प्रत्याख्यानस्तृतीयस्तु रेणुरेखासमो मतः ॥ २३ ॥
तुर्यः संज्वलनो नीररेखातुल्यः प्रकीर्तितः । एवं मानोऽप्यस्थिकाष्ठतिनिश[2]स्तम्भसन्निभः ॥ २४ ॥
माया वंशीमेषशृङ्गगवांमूत्रावलेहवत् । लोभः कृमिरागपङ्काञ्जनहारिद्ररागवत् ॥ २५ ॥

१ तत्पुष्पम्. २ तिनिशो वृक्षविशेषः.

जन्मवर्षचतुर्मासीस्थितयः स्युः क्रमात्त्रयः । तुर्यः पक्षस्थितिस्ते च श्वभ्रादिगतिहेतवः ॥ २६ ॥
एवं कषायास्ते राजन् ! षोडशापि प्रकीर्त्तिताः । गाढसंरम्भविहिताः स्युर्यके गाढदुःखदाः ॥ २७ ॥
संरम्भेण विना स्तोकमवान् दुःखं ददत्यलम् । ततश्चाल्पेऽपि नो कार्याः कषाया नृपते ! त्वया ॥ २८ ॥
राजन्नल्पीयसोऽपिः स्यात् दुष्कृतस्य फलं महत् । मित्रानन्दादिमत्त्वानां यथा दृष्टं मनीषिभिः ॥ २९ ॥
मित्रानन्दादयः केऽमी इत्युक्तो भूभुजा पुनः । स्वयंप्रभमुनिः स्माह तत्कथा श्रूयतामिति ॥ ३० ॥
सुरसद्मसमानर्द्धि नानाऽद्भुतमनोहरम् । अस्तीहामरतिलकं नगरं भुवि विश्रुतम् ॥ ३१ ॥
रूपलक्ष्म्याऽतिशायिन्याऽभिभूतमकरध्वजः । मकरध्वजनामाऽभृत् भूपतिस्तत्र विक्रमी ॥ ३२ ॥
पत्न्यां मदनसेनायां पद्मकेसरनामकः । तस्य पद्मसरःस्वप्नसूचितस्तनयोऽभवत् ॥ ३३ ॥
राज्ञः पत्न्या तयाऽन्येद्युर्विवृण्वत्या शिरोरुहान् । विलोक्य पलितं दूत ! आगाद्देवेति जल्पितम् ॥ ३४ ॥
ततः संभ्रान्तचित्तस्य कुर्वाणस्य दिगीक्षणम् । भूयः पत्युस्तयाऽऽख्यातं पाण्डुकेशं प्रदर्श्य तम् ॥ ३५ ॥
दूतोऽयं धर्मराजेन प्रेषितः पलितच्छलात् । आगच्छति जरा कृत्यं कुरुष्वेति वदन्निव ॥ ३६ ॥
ततश्च पार्थिवो दध्यौ मम पूर्वैर्महात्मभिः । अदृष्टपलितैरेव धर्मसेवा व्यधीयत ॥ ३७ ॥
धिग् ! मां राज्यलुब्धं तु स्थितिविच्छेदकारिणम् । यस्य मे विषयासक्तस्यैव जातो जरागमः ॥ ३८ ॥

इति चिन्ताविषण्णास्यं पतिं दृष्ट्वा मनर्मवाक् । उवाचैवं पुना राज्ञी तद्भावाविदुरा[1] सका ॥ ३९ ॥
नाथ ! त्वं वृद्धभावेन लज्जसे यदि सर्वथा । ततोऽहं कारयिष्यामि पटहोद्घोषणामिमाम् ॥ ४० ॥
यः कश्चिदवनीनाथं जातयामं[2] वदिष्यति । भविष्यति मकोऽवश्यमकालेऽपि यमातिथिः ॥ ४१ ॥
गजा प्रोवाच हे देवि ! किं ब्रवीष्यविवेकिवत् । जरैव मण्डनं यस्माद्भवेद्स्मादृशां किल ॥ ४२ ॥
तर्हि श्याममुखा ग्रयं किमित्युक्ते तथा पुनः । स तस्याः कथयामाम स्वस्य वैराग्यकारणम् ॥ ४३ ॥
ततश्च तनयं राज्ये संस्थाप्य प्रियया मह । तापसीभूय गजाऽसौ वनवासमशिश्रियत् ॥ ४४ ॥
गूढगर्भा तु सा राज्ञी प्रपन्ना तापमव्रतम् । वर्द्धमाने तु गर्भेऽस्या अवर्द्धिष्टोदरं क्रमात् ॥ ४५ ॥
किमेतदिति दृष्ट्वा च साऽऽचख्यौ तद्यथातथम् । पत्युः कुलपतेः मोऽपि व्रतदूषणभीरुकः ॥ ४६ ॥
तापसीभिः पाल्यमाना ममये मुषुवेऽथ सा । सुतं देवकुमाराभं शुभलक्षणशोभितम् ॥ ४७ ॥
तस्याश्चानुचिताहाराद्रोगोऽभूद्दारुणस्तनौ । अचिन्तयंश्च दुःखार्त्तास्ते तपोवनतापसाः ॥ ४८ ॥
गृहिणामपि दुष्पालो बालः स्याज्जननीमृते । तन्मातरि विपन्नायां कथं पाल्योऽयमर्भकः ? ॥ ४९ ॥
वणिगुज्जयिनीपुर्यां वाणिज्येन परिभ्रमन् । तदा तत्राऽऽययौ देवधराख्यो दैवयोगतः ॥ ५० ॥
मोऽथ तापसभक्तत्वात् तान् प्रणम्य तपस्विनः । दृष्ट्वा चिन्तातुरांश्चैतान् पप्रच्छोद्वेगकारणम् ॥ ५१ ॥

१ अविदुराऽज्ञा. २ वृद्धम्.

ऊचे कुलपतिः सोऽयमस्मद् दुःखेन दूयसे । तदाऽमुं बालकं श्रेष्ठिन्नस्मद्दत्तं गृहाण भोः ॥ ५२ ॥
ततस्तेन गृहीत्वाऽयं स्वभार्यायाः समर्पितः । देवसेनाभिधानायाः प्रसूतायाः सुतां पुरा ॥ ५३ ॥
देवी मदनसेना सा स्थानप्राप्तं विलोक्य तम् । जातचित्तसमाधाना गेगार्च्या संस्थिता तया ॥ ५४ ॥
गृहं गतेन तेनाथ श्रेष्ठिनोत्सवपूर्वकम् । तनयस्यामरदत्त इति नाम विनिर्ममे ॥ ५५ ॥
सुरसुन्दरीति पुत्र्याश्चेत्यभूच्च जनश्रुतिः । प्रसूताऽपत्ययुगलं पत्नी देवधरस्य यत् ॥ ५६ ॥
सागरश्रेष्ठिनः पुत्रो मित्रश्रीकुक्षिसम्भवः । संजज्ञेऽमरदत्तस्य मित्रानन्दाभिधः सुहृत् ॥ ५७ ॥
समहर्षशुचोर्नित्यं समजागरनिद्रयोः । तयोः प्रववृते मैत्री नेत्रयोरिव धन्ययोः ॥ ५८ ॥
जीमूतेभघटाशाली हरिरावविराजितः । क्षणिकासिलताधारी गर्जाभम्भारवोद्धुरः ॥ ५९ ॥
केकिचक्रप्रियालापग्राम्यस्त्रीगीतमङ्गलः । प्रावर्त्तत धराप्रेयानृतुराट् प्रावृडन्यदा ॥ ६० ॥ ( युग्मम् )
तस्मिन् काले च तौ सिप्रासैकते वटसन्निधौ । क्रीडयोन्नतिकानाम्न्या रेमाते सुहृदौ मुदा ॥ ६१ ॥
एकदाऽमरदत्तेन प्रणुन्नोन्नतिकाऽथ सा । वटोद्बद्धस्य चौरस्य प्रविवेश मुखान्तरे ॥ ६२ ॥
मित्रानन्दो हसन्नूचे पश्याहो महदद्भुतम् । विवेशाडोलिकाऽकस्माच्छवस्य वदने कथम् ? ॥ ६३ ॥
भणितः कुपितेनैष मित्रानन्द ! तवाप्यरे । अत्रैवोल्लम्बितस्याऽऽस्येऽवश्यं वेक्ष्यत्यडोलिका ॥ ६४ ॥

१ ऋतुपक्षे हरिर्मयूरो भेको वा राजपक्षे चाश्वः. २ क्षणिका विद्युत्.

तच्छ्रुत्वा मृत्युभीतोऽसौ निरानन्दाशयोऽवदत् । पतिताऽडोलिका यस्मान्मृतकस्य मुखे सखे ! ॥ ६५ ॥
जातेयमशुचिस्पृष्टा तदलं क्रीडयाऽनया । प्रत्यूचेऽमरदत्तस्तं ममास्त्यन्याप्यडोलिका ॥ ६६ ॥ ( युग्मम् )
इति प्रोक्तेऽपि तं क्रीडाविमुखं प्रेक्ष्य भाववित् । आगादमरदत्तोऽसौ मित्रानन्दश्च(स्य) मन्दिरम् ॥ ६७ ॥
द्वितीये दिवसेऽप्येनं दृष्ट्वा श्याममुखाम्बुजम् । पप्रच्छेत्यमरो मित्रं किं ते दुःखस्य कारणम् ? ॥ ६८ ॥
अतिनिर्बन्धपृष्टेन तेनाप्यस्य निवेदितम् । तच्छवस्य वचो येन गोप्यं स्यान्न सुहृज्जने ॥ ६९ ॥
तन्निशम्यामरः स्माह शवा जल्पन्ति न क्वचित् । तदियं व्यन्तरक्रीडा सम्यक् विज्ञायते न तु ॥ ७० ॥
इदं सत्यमसत्यं वा परिहासवचोऽथवा । कार्यः पुरुषकारो हि तथापि पुरुषेण भोः ॥ ७१ ॥
मित्रानन्दोऽवदद्दैवायत्ते किं नाम पौरुषम् ? । प्रत्यूचे चामरस्तं नाश्रौषीत्किन्तु भवानदः ॥ ७२ ॥
आपत् निमित्तदृष्टाऽपि जीवितान्तविधायिनी । शान्ता पुरुषकारेण ज्ञानगर्भस्य मन्त्रिणः ॥ ७३ ॥
ज्ञानगर्भः स को मन्त्रीति मित्रेणोदितः पुनः । अमरः कथयामास तदग्रे तत्कथामिति ॥ ७४ ॥
अस्त्यत्र भरते धान्यधनर्ध्या बन्धुरा पुरी । चम्पेति पृथिवीख्यातालकायाः सदृशा गुणैः ॥ ७५ ॥
जितशत्रुर्नृपस्तत्राभवत्कीर्तियशोनिधिः । दृप्तार्य्यनेककुम्भीन्द्रकुम्भपाटनकेसरी ॥ ७६ ॥
राज्ये सर्वेश्वरस्तस्याभवन्मन्त्री पुरोदितः । बुद्ध्याऽवगणितो येन गुरुः स्वर्गौकसामपि ॥ ७७ ॥
भार्या गुणावली तस्य पुत्रस्तत्कुक्षिसम्भवः । सुबुद्धिनामा तस्याभूत् रूपश्रीविजितस्मरः ॥ ७८ ॥

उपविष्टोऽन्यदाऽऽस्थाने नृपमण्डलसेवितः । सहितो मन्त्रिवर्गेण यावदासीन्महीपतिः ॥ ७९ ॥
आययौ तावदष्टाङ्गनिमित्तज्ञानपण्डितः । नृपपर्षदि ना कश्चित् प्रतीहारनिवेदितः ॥ ८० ॥
दत्ताशीर्वचनः सोऽथोपविष्टो विष्टरवरे । कियज्ज्ञानं तवास्तीति पृष्टो राज्ञेत्यभाषत ॥ ८१ ॥
राजन् ! लाभमलाभं च जीवितं मरणं तथा । सुखं दुःखं च जानामि गमनागमनं नृणाम् ॥ ८२ ॥
राजोचे मत्परीवारमध्ये त्वं यस्य कस्यचित् । पश्यस्यत्यद्भुतं किञ्चित् पश्चान्तस्तन्निवेदय ॥ ८३ ॥
नैमित्तिकोऽवदत्तर्हि ज्ञानगर्भस्य मन्त्रिणः । पश्यामि सकुटुम्बस्योपसर्गं मारणात्मकम् ॥ ८४ ॥
तच्छ्रुत्वा पीडितो राजा राजलोकस्तथाऽखिलः । अन्तर्दूनोऽपि मन्त्री तु सावहित्थो ययौ गृहम् ॥ ८५ ॥
नैमित्तिकं महानीय तमपृच्छद्रहस्यदः । अयि भद्र ! कुतो हेतोरापदं मम पश्यसि ? ॥ ८६ ॥
तेनाऽपि तस्य साऽऽख्याता भाविनी ज्येष्ठनन्दनात् । विसृष्टो ज्ञानगर्भेण सत्कृत्य ज्ञान्यसौ ततः ॥ ८७ ॥
अभाणि तनयश्चैवं ममाऽऽदेशं करोषि चेत् । आपन्निस्तीर्यते वत्स ! तदियं जीवितान्तकृत् ॥ ८८ ॥
यदादिशसि मे तात ! कृत्यं श्वेतमथासितम्[1] । तदवश्यं मया कार्यमित्यूचे विनयी स तु ॥ ८९ ॥
ततः पुरुषमानायां मञ्जूषायां महामतिः । सचिवस्तं निचिक्षेप नीराहारादिसंयुतम् ॥ ९० ॥
दत्ताष्टतालकां तां च महीभर्तुः समार्पयत् । देवेदं मम सर्वस्वं रक्ष्यं चेति व्यजिज्ञपत ॥ ९१ ॥

१ शुभमथवाऽशुभम्.

राजा प्रोवाच हे मन्त्रिन्निदं धर्मे नियोज्यताम् । विना भवन्नमेतेन धनेनाहं करोमि किम् ? ॥ ९२ ॥
भूयोऽपि सचिवः स्माऽऽह धर्मोऽयं हि नियोगिनाम् । यदार्यो वञ्च्यते नैव विपद्यपि धनादिना ॥ ९३ ॥
ततो राज्ञा प्रपन्नं तत् मन्त्री च जिनमन्दिरे । अष्टाहिकोत्सवं चक्रे सङ्घं पूजयति स्म च । ९४ ॥
दीनानाथादिसत्त्वेभ्यो ददौ दानं यथोचितम् । शान्तिमुद्घोषयामासाभयदानं च देहिनाम् ॥ ९५ ॥
सन्नद्धकवचैः पुम्भिर्विविधायुधधारिभिः । गृहं च रक्षयामास तथा हयगजादिभिः ॥ ९६ ॥
एवं क्रमेण संप्राप्तेऽकस्मात्पञ्चदशे दिने । राजान्तःपुरमध्ये वागुदस्थादीदृशी स्फुटा ॥ ९७ ॥
यथा हि मन्त्रिणः पुत्रः सुबुद्धिर्नाम दुर्मतिः । राजपुत्र्याः केशपाशं छित्त्वा क्वापि ययावहो ! ॥ ९८ ॥
तच्छ्रुत्वा कुपितो राजा दध्यौ कर्मेदृशं व्यधात् । अतिसम्मानितो मूर्खो मुमूर्षुः सचिवात्मजः ॥ ९९ ॥
अस्यापराधे वद्ध्यो मे सकुटुम्बोऽपि मन्त्र्यसौ । इति च ज्ञापयामास पार्श्वस्थानखिलांस्ततः ॥ १०० ॥
सर्वोऽपि मारणीयोऽस्य मोच्या नो कर्मकर्यपि । इत्यादिश्य बलं मन्त्रिगृहे प्रैषीन्नराधिपः ॥ १०१ ॥
तदमात्यभटै रुद्धं गृहं चैत्यपुरः स तु । सुधीर्ध्याननिविष्टः सन् वृत्तान्तमशृणोदमुम् ॥ १०२ ॥
विनिवार्य निजान् पत्तीन् सेनामुख्यानदोऽवदत् । यथा नयत मां पार्श्वमेकवारं महीपतेः ॥ १०३ ॥
तथा चक्रे च तैस्तस्याभवद्राजा पराङ्मुखः । तत्राप्यभिमुखीभूय स नत्वैवं व्यजिज्ञपत् ॥ १०४ ॥
मया मुक्ताऽस्ति या राजन्! मञ्जूषा सा निरूप्यताम्। गृहीत्वा तद्गतं वस्तु पश्चात् कुर्याद्यथोचितम् ॥ १०५ ॥

राजा प्रोवाच द्रव्येण मां विलोभ्य समीहसे । अरे त्वमात्मनो मोक्षमपराधे महत्यपि ॥ १०६ ॥
मन्त्र्यूचे नाथ ! मे प्राणास्तवाऽऽयत्ताः सदैव हि । परं प्रसादो मञ्जूषाऽवलोके क्रियतां मम ॥ १०७ ॥
ततस्तस्योपरोधेन लोकाभ्यर्थनया तथा । उद्घाटयामास सर्वान् मञ्जूषातालकान् नृपः ॥ १०८ ॥
सवेणीकसव्यपार्णि सासिधेन्वितरं पुनः । मञ्जूषान्तः सुबुद्धिं तं बद्धक्रममुदैक्षत ॥ १०९ ॥
तं दृष्ट्वा विस्मयापन्नः पप्रच्छ सचिवं नृपः । किमेतदिति स प्रोचे नाहं जानामि किञ्चन ॥ ११० ॥
जानात्येव भवान् राजन् ! यो हि भक्तोऽपि सर्वथा । व्यलीकं चिन्तयन् मूलच्छेदायोपस्थितो मयि ॥ १११ ॥
परमार्थं ममाऽऽख्याहीत्युक्तो राज्ञाऽब्रवीत्पुनः । स्वामिन् ! केनापि रुष्टेन प्रचण्डव्यन्तरादिना ॥ ११२ ॥
निर्दोषस्यापि पुत्रस्य दोष उत्पादितो मम । अन्यथैवं गोपितस्यावस्थाऽस्य कथमीदृशी ? ॥ ११३ ॥
आपदेतन्निमित्तेनोपस्थिता मे सुदुःसहा । इति ज्ञात्वा यथायुक्तं विचारय कुरुष्व च ॥ ११४ ॥
अभ्यधाच्च नृपो मन्त्रिन् ! तुष्टोऽस्मि तव सर्वथा । परं कथय विज्ञातं कथमेतत्त्वया स्फुटम् ॥ ११५ ॥
ततो नैमित्तिकपृच्छाप्रभृत्याख्याय सोऽवदत् । सुलभा देव ! संसारे विपदो विषयाशिनाम् ॥ ११६ ॥
देवमानुषतिर्यक्स्वकृता एताश्चतुर्विधाः । धर्मस्यैव प्रभावेण नश्यन्ति जगतीपते ! ॥ ११७ ॥
राज्ये मन्त्रिपदे चैव निवेश्य स्वस्वनन्दनौ । तौ तेपाते तपोऽत्युग्रं प्रतिपद्यानगारताम् ॥ ११८ ॥
तन्मित्र ! मन्त्रिणा तेन यथाऽऽपल्लङ्घितौजसा । आवामपि करिष्यावस्तथैव त्वं विषीद मा ॥ ११९ ॥

मित्रानन्दोऽवदत् ब्रूहि कर्तव्यं हे वयस्य! किम् ?। स ऊचेऽन्यत्र यास्यावो मुक्त्वा स्थानमदो निजम् ॥१२०॥
तस्य चित्तपरीक्षार्थं पुनर्मित्रोऽब्रवीत् सखे ! । देशान्तरगतस्याङ्ग ! खेदस्तव भविष्यति ॥ १२१ ॥
कालेन कियता तेन यच्छ्वेन निवेदितम् । तद्भावि सुकुमारत्वात् पञ्चत्वमधुनैव ते ॥ १२२ ॥
अमरः स्माह गन्तव्यं दूरदेशान्तरेऽपि भोः । मया सौख्यमसौख्यं वा भोक्तव्यं च त्वया सह ॥ १२३ ॥
ततश्च कृतसङ्केतौ गृहान्निःसृत्य तावुभौ । जग्मतुः क्रमयोगेन पाटलीपुरपत्तनम् ॥ १२४ ॥
अशोकशोकपुन्नागनागपूगप्रियङ्गुभिः । नारङ्गादिकदल्याम्रचारुवृक्षैश्च शोभितम् ॥ १२५ ॥
प्रासादमेकमुत्तुङ्गप्राकारपरिवेष्टितम् । तद्बहिः पश्यतः स्मैतौ ध्वजराजिविराजितम् ॥ १२६ ॥ (युग्मम्)
मुखाऽङ्घ्रिकरशौचं तौ कृत्वा पुंष्करिणीजले[1] । अन्तः प्रविश्य प्रासादरूपलक्ष्मीमपश्यताम् ॥ १२७ ॥
वर्णिकाऽप्सरसां विश्वकर्मणेव विनिर्मिता । ददृशेऽमरदत्तेन तत्र पाञ्चालिकैकका ॥ १२८ ॥
पश्यन्नेतामथोत्पश्योऽमरः स्मरशरातुरः । विदाञ्चकार नो तृष्णां न क्षुधां न श्रमं च सः ॥ १२९ ॥
मध्याह्नसमये जाते मित्रेणेति प्रजल्पितः । आर्यैहि नगरं यावो येनोच्छूरं प्रवर्त्तते ॥ १३० ॥
स स्माह ननु भो भद्र ! क्षणं तावद्विलम्बय । यावत्पाञ्चालिकामेतामहं पश्याम्यशेषतः ॥ १३१ ॥
कौतूहलेन याऽऽरूढा तस्यास्तुङ्गे कुचस्थले । परिश्रान्तेव तद्दृष्टिः[2] स्थिता तत्रैव सा चिरम् ॥ १३२ ॥

१ वापीजले. २ प्रतिकृतिः

पुनस्तथैव मित्रेण क्षणेनोक्तो जजल्प सः । चलामि चेदितः स्थानात् ततो मृत्युर्भवेन्मम ॥ १३३ ॥
मित्रानन्दो जगादैवं कृत्याकृत्यविदः सदा । काऽस्यां पाषाणमय्यां ते हन्त रागातिरेकता ? ॥ १३४ ॥
यदि नारीरिरंसा ते ततः प्राप्तः पुरान्तरे । विधाय भोजनं स्वेच्छां पूरयेस्तामपि क्षणे ॥ १३५ ॥
एवमुक्तेऽपि तेनास्मिस्तस्याः पार्श्वममुञ्चति । भूरिमन्युभराक्रान्तो मित्रानन्दोऽरुदद् भृशम् ॥ १३६ ॥
रुरोदामरदत्तोऽपि स्थानं तत् तु मुमोच न । तावत्तत्राऽऽययौ श्रेष्ठी प्रासादस्यास्य कारकः ॥ १३७ ॥
रत्नसाराभिधानेन तेनेदं भणिताविमौ । भद्रौ ! युवां युवतिवत् किं नाम रुदिथो वृथा ? ॥ १३८ ॥
ताततुल्यस्य तस्याग्रे कथयित्वाऽऽदितः कथाम् । मित्रानन्देन मित्रस्य चेष्टितं तन्निवेदितम् ॥ १३९ ॥
तेनाथ बोधितोऽप्येष रागं पाञ्चालिकागतम् । न यावद्विजहौ तावत् स सखेदमचिन्तयत् ॥ १४० ॥
अप्यश्मनिर्मितं पुंसां यासां रूपं मनो हरेत् । वनिता विश्वमोहाय मन्ये ता वेधसा कृताः ॥ १४१ ॥
तावन्मौनी यतिर्ज्ञानी सुतपस्वी जितेन्द्रियः । यावन्न योषितां दृष्टिगोचरं याति पूरुषः ॥ १४२ ॥
एवं चिन्तापरः सोऽथ मित्रेण भणितः पुनः । तातास्मिन् सङ्कटे कार्ये क उपायो भविष्यति ? ॥ १४३ ॥
तस्मिंश्च कञ्चनोपायमपश्यति वणिग्वरे । मित्रानन्देन तमभिप्रोचे बुद्धिमता पुनः ॥ १४४ ॥
तं चेत् सूत्रकृतं वेत्सि(त्थ) येनैषाऽकारि पुत्रिका । तदिच्छापूरणोपायमस्य तात ! करोम्यहम् ॥ १४५ ॥
रत्नसारोऽब्रवीत्तर्हि सूरदेवोऽत्र सूत्रकृत् । स तु कुङ्कुणदेशान्तःसोपारकपुरेऽस्ति भोः ॥ १४६ ॥

अहं निकेतनस्यास्य कारकस्तेन वेद्म्यदः । शंस त्वमपि मे तावदुपायं स्ववितर्कितम् ॥ १४७ ॥
सोऽवोचत्तात ! मन्मित्रमिदं प्रतिकरोषि चेत् । गत्वा सोपारके सूत्रधारं पृच्छाम्यहं ततः ॥ १४८ ॥
यद्यमौ पुत्रिका तेन स्यात्प्रतिकृतिना कृता। ततस्तस्मिन् ममानीते सेत्स्यत्यस्य समीहितम् ॥ १४९ ॥
श्रेष्ठिना तत्प्रतीकारेऽङ्गीकृतेऽथामरोऽवदत् । श्रोष्यामि यद्यपायं ते तदा यास्यन्ति मेऽसवः ॥ १५० ॥
इतरः स्माह नायामि द्विमास्यन्तरहं यदि । तदा त्वयाऽवगन्तव्यं नास्ति मन्मित्रमित्यहो ॥ १५१ ॥
कष्टेन बोधयित्वैनं श्रेष्ठिनाऽनुमतोऽथ सः । अखण्डितप्रयाणोऽगात् सोपारकपुरे क्रमात् ॥ १५२ ॥
तत्राङ्गुलीयं विक्रीय गृहीत्वा वमनादि च । ताम्बूलव्यापृतकरः प्रययौ स्थपतेर्गृहे ॥ १५३ ॥
सश्रीक इति तेनास्य प्रतिपत्तिः कृता मुदा । शुभासनोपविष्टः स पृष्टश्चागमकारणम् ॥ १५४ ॥
भद्र ! देवकुलं रम्यं कारयिष्याम्यहं त्वया । परं प्रतिकृतिः काचिद्दर्श्यतामिति सोऽब्रवीत् ॥ १५५ ॥
उवाच सूत्रकृच्चक्रे प्रासादो मयका किल । पुरे पाटलिपुत्राख्ये स दृष्टो भवता न किम् ? ॥ १५६ ॥
अवादीदपरो दृष्टः किं तु पञ्चालिकाऽमुका । प्रतिच्छन्दकृता तत्र स्वबुध्द्या रचिताऽथवा ॥ १५७ ॥
स जगादावन्तिपुर्यां महासेनस्य भूपतेः । सुताया रत्नमञ्जर्याः प्रतिच्छन्देन सा कृता ॥ १५८ ॥
पृष्ट्वा सुदिनमेष्यामीत्युक्त्वा गत्वाऽऽपणेऽथ सः। विक्रीय चारुवस्त्राणि व्यधात्पाथेयसूत्रणाम् ॥ १५९ ॥

१ प्रासादस्य. २ कष्टम्.

ततोऽखण्डप्रयाणैः स गच्छन्नुज्जयिनीं ययौ । तत्र गोपुरमध्यस्थे देव्या देवकुलेऽवसत् ॥ १६० ॥
अत्रान्तरे स शुश्राव पटहोद्घोषणामिमाम् । यामिन्याश्चतुरो यामान् यो रक्षेन्मृतकं ह्यदः ॥ १६१ ॥
तस्मै ददाति दीनारसहस्रं वणिगीश्वरः । मित्रानन्देन श्रुत्वैवं पृष्टो दौवारिकस्तदा ॥ १६२ ॥ (युग्मम्)
दीयतेऽतिप्रभूतं स्वं भोः कार्ये किमियत्यपि । स आचख्याविियं मारीविद्रुताऽस्त्यधुना पुरी ॥ १६३ ॥
अयं मारीकृतो यावच्छवः श्रेष्ठिगृहेऽभवत् । तावदस्तमितः सूर्यः प्रतोली पिहिता ह्यमौ ॥ १६४ ॥
समर्थो रक्षितुं कोऽपि न मारीहतमित्यमुम् । ततोऽस्य रक्षणे भद्र ! लभ्यते प्रचुरं धनम् ॥ १६५ ॥
कार्याणि धनहीनानां न सिध्यन्ति महीतले । इति मित्रः स्वलाभार्थं शवरक्षां प्रपन्नवान् ॥ १६६ ॥
तस्येप्सितं धनस्यार्द्धमर्पयित्वा शवं च तम् । शेषं प्रभाते दास्यामीत्युक्त्वाऽगादीश्वरो गृहे ॥ १६७ ॥
शाकिनीभूतवेतालोपसर्गेषु भवत्स्वपि । रक्षितं तेन तद्रात्रौ मृतकं धीरताजुषा ॥ १६८ ॥
प्रभाते स्वजनैस्तच्च मृतकं भस्मसात्कृतम् । धनं मार्गयतो मित्रानन्दस्य ददिरे न ते ॥ १६९ ॥
सोऽवदद्यदि राजाऽत्र महासेनो भविष्यति । ततो लप्स्ये धनमहमित्युक्त्वाऽगमदापणे ॥ १७० ॥
गृहीत्वा चारुवस्त्राणि दीनारैकशतेन सः । विधाय चोद्भटं वेषं वेश्यायाः मदनं ययौ ॥ १७१ ॥
वसन्ततिलकानाम्न्या रूपयौवनयुक्तया । अभ्युत्थानादिसत्कारो विदधे तस्य वेश्यया ॥ १७२ ॥
दत्तानि तेन चत्वारि दीनाराणां शतान्यथ । कुट्टिन्या हर्षिता सा चादिदेशेति सुतां निजाम् ॥ १७३ ॥

द्रष्टव्यो गौरवेणैष पुत्र्युदारो नरस्त्वया । आदावेव धनं येन ममादायि प्रभूतशः ॥ १७४ ॥
ततः सा स्वयमेवास्य चक्रे स्नानादिसत्क्रियाम् । प्रदोषसमये वासगृहे तस्या ययावसौ ॥ १७५ ॥
धरायाताऽमरीकल्पा कल्पिताऽनल्पभूषणा । तत्र शय्यागते तस्मिन् गणिका सा समाययौ ॥ १७६ ॥
सोऽथ दध्यौ न विषयासक्तानामिह देहिनाम् । नूनं कार्याणि सिध्यन्तीति विचिन्त्याब्रवीच्च ताम् ॥ १७७ ॥
करोमि स्मरणां काञ्चिद् भद्रे ! पट्टं समानय । इत्युक्ते महमाऽऽनीतः पट्टो हेममयस्तया ॥ १७८ ॥
तत्रोपविश्य निविडं कृत्वा पद्मासनं तथा । वस्त्रेणाच्छादयित्वाऽङ्गं सोऽस्थाद् बुद्धिमतां वरः ॥ १७९ ॥
गतेऽथ प्रथमे यामे रन्तुमभ्यर्थितस्तया । स तु मौनपरस्तस्थौ वृथा ध्यानेन शान्तवत् ॥ १८० ॥
एवं ध्यानपरस्यास्य सकलाऽपि गता निशा । प्रभाते स समुत्थाय देहचिन्ताकृते ययौ ॥ १८१ ॥
सद्भावेऽथ तयाऽऽख्याते पुनः सा भणिताऽक्कया । सर्वथा सेवनीयोऽयं हे पुत्रि ! त्वयका नरः ॥ १८२ ॥
अस्मिंश्च कामिते चित्तं स्थिरमेतद्भविष्यति । अन्यथा मुण्डिते[1] शीर्षे तत्प्रसूनमिवास्थिरम् ॥ १८३ ॥
द्वितीयाऽपि निशा तस्यातिक्रान्तैवं तथाऽपरा । ततस्तं कुट्टिनी रुष्टा सोपालम्भमदोऽवदत् ॥ १८४ ॥
भद्रेमां मम पुत्रीं त्वं भूपानामतिदुर्लभाम् । विडम्बयसि किं नामानुरक्तामप्यकामयन् ॥ १८५ ॥
सोऽवदत्समये सर्वं करिष्याम्यक्क ! साध्वहम् । किं तु पृच्छामि राज्ञस्ते प्रवेशोऽस्ति गृहे न वा ॥ १८६ ॥

---

१ मुण्डिते.

सोवाच वत्स ! मे पुत्री राज्ञश्चमरधर्यसौ । तेन तस्य गृहे रात्रौ दिवा चाहमवारिता ॥ १८७ ॥
यद्येवं तस्य तनयामक ! त्वं रत्नमञ्जरीम् । जानामीत्युदिता तेन सोचे सा मत्सुतासखी ॥ १८८ ॥
मित्रानन्दोऽवदत्तर्हि तदग्रे कथय त्वकम् । भद्रे ! गुणोत्करः पठ्यमानो यस्य श्रुतस्त्वया ॥ १८९ ॥
जातानुरागया लेखो यस्य च प्रेषितो मुदा । तस्येहागमदत्तस्याऽऽगतोऽस्ति सुहृदित्यलम् ॥ १९० ॥ ( युग्मम् )
प्रतिश्रुत्याथ तत्कार्यं सा तस्या अन्तिकं ययौ । तया च हृष्टवदना दृष्टा पृष्टैवमब्रवीत् ॥ १९१ ॥
अहं हि त्वत्प्रियोदन्तमद्य तुभ्यं निवेदितुम् । आगताऽस्मि ततः स्मेरवदना नृपनन्दिनि ! ॥ १९२ ॥
कोऽसौ मम प्रिय इति तयोक्ते सा न्यवेदयत । वृत्तान्तमखिलं तस्य मित्रानन्दमुखाच्छ्रुतम् ॥ १९३ ॥
तच्छ्रुत्वा राजपुत्र्येवं दध्यौ धूर्त्तविजृम्भितम् । सर्वमेतद् यतः कोऽपि वल्लभोऽद्यापि नास्ति मे ॥ १९४ ॥
परं येनेदृशी कूटरचना विहिता विशा । पश्यामि तमहं दृष्ट्येत्यालोच्याक्का तयोदिता ॥ १९५ ॥
गवाक्षेणामुना सोऽद्याऽऽनेतव्यः पुरुषस्त्वया । मम प्रियस्य सन्देशवाचको लेखसंयुतः ॥ १९६ ॥
आगत्य निजगेहे सा कुट्टिनी हर्षपूरिता । तदुक्तं कथयामास मित्रानन्दस्य धीमतः ॥ १९७ ॥
निनाय च निशायां तं द्वारे राजगृहस्य सा । प्राकारमस्तदुर्लङ्घ्यमिद तस्मै शशंस च ॥ १९८ ॥
कन्यावासगृहं दृष्ट्वा मित्रोऽथ विससर्ज ताम् । विद्युदुत्क्षिप्तकरणेनाविशच्च नृपालये ॥ १९९ ॥
प्राकारोल्लङ्घनं तं च कुर्वन्तं वीक्ष्य कुट्टिनी । महावीरोऽयमित्यन्तर्निवृत्ता स्वगृहं ययौ ॥ २०० ॥

मित्रानन्दोऽप्यथाऽऽरूढो राजपुत्र्या निकेतनम् । सुष्वाप साऽपि तद्वीरचर्यामालोक्य कैतवात् ॥ २०१ ॥
कटकं राजनामाङ्कं स तद्धस्तादुपाददे । चक्रे क्षुरिकया वीरो दक्षिणोरौ च लक्षणम् ॥ २०२ ॥
तेनैव विधिना सोऽथ निर्गत्य नृपमन्दिरात् । सुप्तो देवकुले क्वापि दध्यौ चैवं नृपात्मजा ॥ २०३ ॥
न सामान्यः पुमानेष चरित्रेणामुना ध्रुवम् । तन्मया न कृतं साधु नायं सम्भाषितो यतः ॥ २०४ ॥
अनया चिन्तया रात्रिं गमयित्वा निशात्यये । निद्रामवाप सा बाला स तु वीरनरस्तदा ॥ २०५ ॥
उत्थाय द्वारदेशे च गत्वा भूपतिवेश्मनः । अहो अन्याय इत्युच्चैः पूत्करोति स्म बुद्धिमान् ॥ २०६ ॥
राजादिष्टप्रतीहाराकारितो नृपसन्निधौ । गत्वा नत्वा नृपं मित्रानन्दोऽथैवं व्यजिज्ञपत् ॥ २०७ ॥
प्रचण्डशासने देव ! त्वयि सत्यपि भूपतौ । वणिजा परिभूतोऽहमीश्वरेण विदेशगः ॥ २०८ ॥
राज्ञा च कथमित्युक्तः कथयामास तस्य सः । द्रव्यलाभावसानां तां शवरक्षणजां कथाम् ॥ २०९ ॥
ततश्चाज्ञापितो राज्ञा रक्षकस्त्वयकाऽऽशु रे । सोऽत्र बद्ध्वा दुराचारो वणिगानीयतामिति ॥ २१० ॥
ज्ञातव्यतिकरः सोऽथ स्वयमेत्य नृपान्तिकम् । दीनारानार्पयत्तस्य नृपस्यैवं शशंस च ॥ २११ ॥
तस्मिन् काले मया देव ! शोकाकुलितचेतसा । शवकृत्यविहस्तेन दत्तमस्य धनं न हि ॥ २१२ ॥
लोकाचारेण दिवसत्रितयं विगतं यतः । द्रव्यदानविलम्बे न दोषः को नाम मे प्रभो ! ॥ २१३ ॥
निर्दोष इति भूपालो वणिजं विससर्ज तम् । मित्रानन्दं च पप्रच्छ शवरक्षणजां कथाम् ॥ २१४ ॥

सोऽवदद्देव ! यद्यस्ति भवतोऽत्र कुतूहलम् । तदैकमानसो भूत्वा श्रृणु त्वं कथयाम्यहम् ॥ २१५ ॥
नन्वहं धनलोभेनाङ्गीकृत्य शवरक्षणम् । यावदस्थामप्रमत्तो गृहीत्वा क्षुरिकां करे ॥ २१६ ॥
गतेऽथ प्रथमे यामे रात्रेराविरभूत्तदा । स्फोटयन्निव ब्रह्माण्डं प्रचण्डः फेरवीरवः ॥ २१७ ॥
ज्वलद्दावानलज्वालाजालपिङ्गलरोमकाः । क्षणाच्च परितः स्वस्य श्रृगालीर्दृष्टवानहम् ॥ २१८ ॥
क्लीबजीवितनाशाभिस्ताभिरक्षुभिते मयि । द्वितीये प्रहरे रात्रेः प्रादुरासन्निशाचराः ॥ २१९ ॥
अतीव भीषणाः कृष्णवर्णाः किलकिलोर्जिताः । मम सत्त्वसमीरेण ते प्रणष्टा घना इव ॥ २२० ॥
क्व गमिष्यसि रे दासेति वदन्त्यः सकर्त्रिकाः । एत्य नष्टाश्च शाकिन्यस्तृतीयप्रहरे निशः ॥ २२१ ॥
चतुर्थप्रहरे राजन् ! अप्सरस्सदृशाऽऽकृतिः । दिव्यांशुकाच्छादिताङ्गी नानाभरणभूषिता ॥ २२२ ॥
मुक्तकेशा करालास्या ज्वालाभिः कर्त्रिकाकरा । मम पार्श्वेऽबला काचिदाययौ भयकारिणी ॥ २२३ ॥ (युग्मम्)
क्षयं नेष्यामि दुष्टाऽद्य भवन्तमिति वादिनीम् । तां विलोक्य मया राजन् ! सेयं मारीति चिन्तितम् ॥ २२४ ॥
ततोऽतिसविधीभूता धृता वामकरे क्षणात् । मया वामकरेणैषोत्पाटिताऽन्येन शस्त्रिका ॥ २२५ ॥
मोटयित्वा मम करं बलाद्देव ! चचाल सा । मया क्षुरिकया यान्ती दक्षिणोरौ च लक्षिता ॥ २२६ ॥
तस्थौ च कटकं तस्या ममैव हि करे प्रभो ! । अत्रान्तरेऽब्जिनीबन्धुरुदियाय दिवाकरः ॥ २२७ ॥

१ श्रृगालीरवः । २ अशूरजनजीवितस्य नाशकारिणीभिः ।

तच्छ्रुत्वा विस्मितो राजा प्रोचे दर्शय तत्कटम् । मारीहस्ताद् गृहीतं यत् त्वया वीरशिरोमणे ! ॥ २२८ ॥
परिधानांशुकग्रन्थिमध्यादाकृष्य तद् द्रुतम् । मित्रानन्दोऽर्पयामास कटकं भूपतेः करे ॥ २२९ ॥
स्वनामाङ्कं च तद्दृष्ट्वा स दध्यौ किमहो मम । कन्यकैवाभवन्मारी यत्तस्या भूषणं ह्यदः ॥ २३० ॥
देहचिन्ताऽपदेशेन ततश्चोत्थाय भूपतिः । गत्वा च कन्यकापार्श्वे प्रसुप्तां तामलोकयत् ॥ २३१ ॥
दृष्ट्वा वामकरं तस्या गतालङ्करणं तथा । पट्टबन्धं व्रणस्थाने वज्राहत इवाभवत् ॥ २३२ ॥
अचिन्तयच्च वंशो मे चन्द्रमण्डलनिर्मलः । कलङ्कितोऽनया दुष्टकन्यया सर्वथा यतः ॥ २३३ ॥
नृशंसोऽप्यनृताभाषी कुशीलश्चञ्चलाशयः । स्त्रीजनो जायते यत्र तत्कुलं न हि निर्मलम् ॥ २३४ ॥
न यावन्नगरीलोकं निखिलं मारयत्यसौ । तावत् केनाप्युपायेन कार्योऽस्या एव निग्रहः ॥ २३५ ॥
विचिन्त्यैवं वलित्वा चापृच्छन्मित्रं महीपतिः । भद्र ! किं साहसेनैव मृतकं रक्षितं त्वया ॥ २३६ ॥
अथवा मन्त्रशक्तिस्ते काचिदस्तीति सोऽवदत् । कुलक्रमागतो नाम मम मन्त्रोऽपि विद्यते ॥ २३७ ॥
कृत्वैकान्तमथाऽऽचख्यौ राजा यद् भद्र ! मे सुता । मारी, नास्त्यत्र सन्देहस्ततोऽस्या निग्रहं कुरु ॥ २३८ ॥
मित्रानन्दोऽवदद्वाक्यं घटते देव ! नेदृशम् । यत्कुमारी भवेन्मारी समुत्पन्ना कुले तव ॥ २३९ ॥
उवाच भूपतिर्नामाघटमानं किमत्र भोः ! । मेघवृन्दोद्भवा विद्युद् भवेत् प्राणहरी न किम् ? ॥ २४० ॥
इतरः स्माह यद्येवं तदियं दर्श्यतां मम । यतः साध्यामसाध्यां वा वेद्मि दृष्ट्या विलोक्य ताम् ॥ २४१ ॥

गत्वा विलोकयेत्युक्तो राज्ञा तत्र जगाम सः । सुप्तोत्थिता कुमारी सा तमायान्तमलोकयत् ॥ २४२ ॥
दध्यौ चैवं नरः सोयं येन मे कटकं हृतम् । मन्ये त्वाऽऽज्ञापितो राज्ञा यन्निःशङ्कः समेत्यलम् ॥ २४३ ॥
तया दत्तासने सोऽथोपविश्यैवमवोचत । मया ह्यारोपितं सुभ्रु ! कलङ्कं सुमहत् तव ॥ २४४ ॥
अर्पयिष्यति भूपालो मम त्वामद्य सुन्दरि !। ततः स्थानं नयामि स्वं तव चेत् सम्मतं भवेत् ॥ २४५ ॥
नो चेदियत्यपि गतेऽकलङ्कां त्वां करोम्यहम् । त्वया जलाञ्जलिर्भद्रे ! मम देयस्तदा पुनः ॥ २४६ ॥
तच्छ्रुत्वाऽचिन्तयदसौ कन्या तद्गुणरञ्जिता । अहो अकृत्रिमप्रेमा कोऽप्यसौ पुरुषो मयि ? ॥ २४७ ॥
दुःखमप्युररीकृत्य श्रयणीयस्ततो मया । सुलभो राज्यलाभोऽपि न तु स्नेहपरो जनः ॥ २४८ ॥
ऊचे च सुभग ! प्राणास्तवाऽऽयत्ता इमे मम । त्वया सहाऽऽगमिष्यामि वेत्ति किं न भवानिदम् ? ॥ २४९ ॥
अन्धो नरपतेश्चित्तं व्याख्यानं महिला जलम् । तत्रैतानि हि गच्छन्ति नीयन्ते यत्र शिक्षितैः ॥ २५० ॥
ज्ञात्वा मनोरथान् सिद्धानिति मित्रो जगाद ताम् । फेत्काराः सर्षपक्षेपे त्वया मोच्या नृपान्तिके ॥ २५१ ॥
उपेत्य च नृपं प्रोचे सा मारी मम सग्रहे । प्राप्ता ढौकय किं त्वेकं भूपते ! शीघ्रवाहनम् ॥ २५२ ॥
तत्राऽधिरोप्य यामिन्यां त्वद्देशान्तं नयाम्यहम् । उदेष्यत्यन्तरा सूर्यश्चेन्मारी सा तथा स्थिता ॥ २५३ ॥
ततो भीतेन राज्ञाऽस्य ढौकिता वडवा निजा । वायुवेगवती प्राणप्रिया लोकहितैषिणा ॥ २५४ ॥
सन्ध्याकाले च केशेषु गृहीत्वा सा समर्पिता । तस्य तेनापि फेत्कारान् मुञ्चती ह्यकिताऽसकृत् ॥ २५५ ॥

ततस्तां वडवारूढां पुरस्कृत्य चचाल सः । राजाऽपि गोपुरं यावत् तावन्वित्य गृहं ययौ ॥ २५६ ॥
मित्रानन्दमवादीत्माऽन्वेत्यां त्वमपि सुन्दर ! । अस्यामारुह किं पादचारेण सति वाहने ? ॥ २५७ ॥
क्षणमेकमहं पद्भ्यां यास्यामीति वदन्नसौ । तदर्थमर्थितो भूयः सीमां प्राप्तस्तया भृशम् ॥ २५८ ॥
मित्रः प्रोवाच हे सुभ्रु ! नात्मार्थं मयका त्वकम् । आनीता किं तु मित्रस्यामरदत्तस्य हेतवे ॥ २५९ ॥
मित्रव्यतिकरं चास्याः कथयित्वा न्यवेदयत् । न मे युक्तं त्वया सार्द्धमेकत्र शयनासनम् ॥ २६० ॥
तच्छ्रुत्वा राजपुत्री सा दध्यौ विस्मितमानसा । अहो अस्य महापुंसश्चरित्रं भुवनोत्तरम् ॥ २६१ ॥
पिता माता सखा भ्राता यदर्थं वञ्च्यते नरैः । प्राप्ताऽपि कामिनी साऽहं येन नो कामिता सता ॥ २६२ ॥
सर्वोऽपि सहते क्लेशं स्वार्थसिद्धिपरायणः । परार्थसाधने कोऽपि विरलोऽङ्गीकरोति तम् ॥ २६३ ॥
चेतसा चिन्तयन्त्येवं स्त्रीरत्नं रत्नमञ्जरी । पार्श्वे पाटलीपुत्रस्य निन्ये मित्रेण सा शनैः ॥ २६४ ॥
इतश्चामरदत्तोऽसौ पूर्णे मासद्वयावधौ । अनागच्छति मित्रे च रत्नसारमदोऽवदत ॥ २६५ ॥
तात ! मे नाययौ मित्रं काष्ठैः कारय तच्चिताम् । येन तद्दुःखदग्धोऽहं प्रवेक्ष्यामि हुताशने ॥ २६६ ॥
तच्छ्रुत्वाऽधिकदुःखार्त्तः स श्रेष्ठी पौरसंयुतः । क्रन्दन्नत्याग्रहेणास्य रचयामास तां चिताम् ॥ २६७ ॥

---

१ अनुगम्य. २ वडवायाम्.

वह्निपार्श्वस्थितैः सर्वैर्नागरैर्भणितोऽथ सः । भद्राद्यापि प्रतीक्षस्व येनेदमवधेर्दिनम् ॥ २६८ ॥
एवमश्रुमुखे तस्मिन्निषिद्धमरणे जनैः । अपराह्णे तया सार्द्धं मित्रस्तत्र समाययौ ॥ २६९ ॥
आगच्छन्तं तमुद्वीक्ष्यामरदत्तः ससम्भ्रमः । उत्थायाऽऽलिङ्गति स्माश्रुजलधौतमुखाम्बुजः ॥ २७० ॥
यत्तयोर्मित्रयोः सौख्यमभून्मिलितयोः किल । तावेव वेदकौ तस्य नान्यस्तद्वक्तुमीश्वरः ॥ २७१ ॥
मित्रानन्दोऽवदन्मित्र ! तव चित्तस्य चौर्यसौ । आनीताऽस्त्युररीकृत्य मया कष्टपरम्पराम् ॥ २७२ ॥
इतरः स्माह बन्धो ! त्वं सत्यनामा मदैव मे । साधितेनामुनाऽर्थेन विशेषेणाभवः पुनः ॥ २७३ ॥
अपनाय्य चितैधांसि स्थाने तत्राग्निमाक्षिकम् । मित्रः कारयति स्माथ पाणिग्रहणमेतयोः ॥ २७४ ॥
विलोक्य रत्नमञ्जर्या रूपं पौरगणोऽवदत् । तन्नाश्चर्यं यदेषोऽस्याः प्रतिच्छन्देन मोहितः ॥ २७५ ॥
वृत्तोद्वाहस्य तस्याथाऽमरदत्तस्य तत्र यत् । सञ्जातं भाग्ययुक्तस्य तदितः श्रूयतां जनाः ॥ २७६ ॥
तस्मिन्नेव पुरेऽपुत्रो महीपालो व्यपद्यत । चक्रे च राजलोकेन पञ्चदिव्याऽधिवासना ॥ २७७ ॥
भ्रान्त्वा त्रिकचतुष्कादिस्थानेषु निखिले पुरे । तानि तत्र समाजग्मुः कुमारो यत्र विद्यते ॥ २७८ ॥
हयेन हेषितं द्राक् हस्तिना गुलगुलायितम् । चक्रे तस्योपरि छत्रं तस्थौ तत्र स्वयं तथा ॥ २७९ ॥
वीजितं चामराभ्यां च भृङ्गारेण विनिर्ममे । महीपत्वाभिषेकोऽस्य, पुण्यैः किं नाम नो भवेत् ? ॥ २८० ॥
ततस्तं शुण्डयोत्पाट्य गजः स्कन्धेऽध्यरोहयत् । विवेश नगरे सोऽथ सञ्जातानेकमङ्गलः ॥ २८१ ॥

पुरप्रवेशे तस्याथ मिलितो महिलाजनः । राजराज्ञ्योः स्वरूपं तत् दृष्ट्वाऽन्योन्यमदोऽवदत् ॥ २८२ ॥
काचिज्जजल्प राज्ञोऽस्य रूपसम्पदमुत्तमाम् । पश्य विश्वजनश्लाघ्यां हला ! रतिपतेरिव ॥ २८३ ॥
अन्याऽवादीत् किमन्यत्त्वं मुग्धे ! वर्णयसि स्फुटम् । देव्याः समानरूपाऽस्या न स्त्री त्रिभुवनेऽपि यत् ॥ २८४ ॥
अपरा स्माह यद्रूपमस्यास्त्रिभुवनोत्तरम् । तदेतत्प्रतिच्छन्देन मोहितोऽयमभून्नृपः ॥ २८५ ॥
इतरोचे हलाः ! पुण्यभागिन्येषा महीतले । यया विश्वजनश्रेष्ठो लब्ध एवंविधो धवः ॥ २८६ ॥
प्रत्युक्तमन्ययैषोऽपि धन्यो येनेदृशी प्रिया । लब्धा विदेशगेनापि लक्ष्मीरिव मुरद्विषा[2] ॥ २८७ ॥
कृत्वा गाढोद्यमं येनाऽऽनीतेयं मृगलोचना । तदस्य भाग्यवन् मित्रं श्लाघ्यमित्यपराऽवदत् ॥ २८८ ॥
जजल्पान्या किमेतं न श्रेष्ठिनं वर्णयस्यलम् । अविज्ञातोऽपि येनायं पुत्रवत् परिपालितः ॥ २८९ ॥
इत्यालापान् पुरन्ध्रीणां शृण्वानः प्रीतमानसः । ययावमरदत्तोऽसौ द्वारे नृपतिवेश्मनः ॥ २९० ॥
स्तम्बेरमात्[1] समुत्तीर्य्य विवेशाऽऽस्थानमण्डपे । उपाविशच्च तत्रैव नृपमण्डलसेवितः ॥ २९१ ॥
सा रत्नमञ्जरी देवी मित्रानन्दः सुहृत्तथा । निषेदतुर्नृपोपान्ते यथास्थानमथापरे ॥ २९२ ॥
चक्रे राज्याभिषेकोऽस्य सामन्तैर्मन्त्रिभिस्तथा । गज्ञा च विहिता पट्टराज्ञी सा रत्नमञ्जरी ॥ २९३ ॥
चक्रे सर्वाऽधिकारी च मित्रानन्दो महामतिः । स्थापितश्च पितुः स्थाने रत्नसारो वणिग्वरः ॥ २९४ ॥

१ गजात्. २ कृष्णेन.

एवं कृत्वोचितं तेषां कृतज्ञैकशिरोमणिः । अखण्डशासनो राज्यं पालयामाम तत्र सः ॥ २९५ ॥
राज्यकार्यरतोऽप्येवं मित्रानन्दः शवोदितम् । तन्मृत्युसूचकं वाक्यं विसस्मार कदापि न ॥ २९६ ॥
एकदा तेन भूपस्य कारणं तन्निवेदितम । देशान्तरगतिः स्वस्य प्रार्थिता च पुनस्ततः ॥ २९७ ॥
प्रत्युक्तो भूभुजा सोऽपि मा कार्षीस्त्वं भयं सखे!। दुष्टोऽपि स्थितयोऽत्र कर्ता नो व्यन्तरः स किम्?॥ २९८ ॥
मित्रानन्दोऽवदत् प्रत्यासन्नत्वेन मनो मम । अद्यापि दूयते दूरं तन्मां प्रेषय भूपते ! ॥ २९९ ॥
विचिन्त्योक्तं पुना राज्ञा यद्येवं गच्छ तत् सखे ! । नरैः प्रत्ययितैः[1] सार्द्धं वसन्तपुरपत्तनम् ॥ ३०० ॥
अङ्गीकृते तदादेशे विसृष्टोऽसौ महीभुजा । प्रेषिताश्च समं तेन शिक्षां दत्त्वेति पूरुषाः ॥ ३०१ ॥
हंहो ! तत्र गतैः कैश्चिद् युष्मन्मध्यान् ममान्तिकम् । आगन्तव्यमिहैतस्य क्षेमवार्ता निवेदितुम्॥ ३०२ ॥
अथ मित्र गते राजा तद्वियोगार्दितोऽपि सः । पुण्यलब्धां समं देव्या भुङ्क्ते स्म नृपतिश्रियम् ॥ ३०३ ॥
तेषां मध्यान्नृणां कोऽपि नाऽऽययौ भूभुजा ततः । अन्ये संप्रेषितास्तस्य शुद्धिज्ञानकृते नराः ॥ ३०४ ॥
प्रत्यागतैश्च तैः पुम्भिः कथितं नृपतेरदः । दृष्टोऽसौ तत्र नाऽस्माभिः वार्त्ताऽप्यस्य श्रुता न हि ॥ ३०५ ॥
तत संभ्रान्तचित्तो राट् देवीमूचे कथं प्रिये !। कर्तव्यं यन्न वार्ताऽपि श्रुता मित्रस्य हा ! मया ॥ ३०६ ॥

१ विश्वस्तैः ।

साऽऽख्यद् यद्येति कोऽप्यत्र ज्ञानी तत्तेन छिद्यते । सन्देहोऽयं प्राणनाथ ! हन्त नान्येन केनचित् ॥ ३०७ ॥
उद्यानपालकेनेति विज्ञप्तोऽत्रान्तरे नृपः । देवाऽऽयातोऽस्ति श्रीधर्मघोषसूरिः पुरे तव ॥ ३०८ ॥
अशोकतिलकोद्याने प्राशुकस्थण्डिले स्थितः । चतुर्ज्ञानधरो धर्मं लोकानामादिशत्यसौ ॥ ३०९ ॥
समयाऽऽगमनं तस्य श्रुत्वाऽसौ भक्तितत्परः । ययौ तद्वन्दनाहेतोः सामग्र्या प्रेयसीयुतः ॥ ३१० ॥
खड्गादिराजचिह्नानि मुक्त्वा गुर्वन्तिकं गतः । नत्वा सपरिवारं तं निषसाद यथास्थिति ॥ ३११ ॥
गुरूरूचेऽत्र भोः ! स्वर्गापवर्गादिसुखैषिभिः । नष्टदुष्टाष्टकर्माऽयं कर्तव्यो धर्म एव हि ॥ ३१२ ॥
अत्रान्तरेऽशोकदत्तः पप्रच्छैवं वणिग्वरः । भगवन् ! कर्मणा केनाशोकश्रीर्दुहिता मम ॥ ३१३ ॥
अतीव वेदनाऽऽक्रान्ता सर्वाङ्गेष्वभवत्ततः । चिकित्साश्च कृतास्तस्या रोगशान्तिर्बभूव न ॥ ३१४ ॥ युग्मम् ॥
सूरिः प्रोचे भूतशालनगरं श्रेष्ठिनः प्रिया । साऽभवद् भूतदेवस्य नाम्ना कुरुमती पुरा ॥ ३१५ ॥
पीते सत्यन्यदा दुग्धे मार्जार्या भणिता तया । स्नुषा देवमती नाम्नी गाढकोपवशादिदम् ॥ ३१६ ॥
शाकिन्या किं गृहीताऽसीर्यन्नारक्षि पयस्त्वया । साऽपि तद्वचसा भीतोत्कम्पिताङ्गी बभूव च ॥ ३१७ ॥
ततः सा दुष्टमातङ्ग्या शाकिनीमन्त्रयुक्तया । आत्ता स्वकर्मकर्येव छलं लब्ध्वा झटित्यपि ॥ ३१८ ॥
ततस्तद्वेदनाक्रान्ता भिषग्भिः सा चिकित्सिता । दोषे तथाऽप्यशान्तेऽस्या योगी कोऽपि समाययौ ॥ ३१९ ॥

मन्त्रवादेऽमुनाऽऽरब्धेऽग्निना यन्त्रे च ताडिते[1] । मातङ्गी मुक्तकेशा सा तत्रागाद्वेदनाऽर्दिता ॥ ३२० ॥
क्व गृहीता त्वयाऽसाविति पृष्टा योगिना पुनः । श्वश्रूदुर्वाक्यभीताङ्गी मयाऽऽत्तेति जगाद सा ॥ ३२१ ॥
नीरोगाऽथ स्नुषा साऽभूच्छाकिनी सा विनाशिका ।[2] योगिनो वचसा तस्य राज्ञा निर्वासिता पुरात्[3] ॥ ३२२ ॥
कुलमत्यपि लोकेन कालजिह्वेति जल्पिता । तत सा संयतीपार्श्वे व्रतं जग्राह भावतः ॥ ३२३ ॥
विशुद्धं पालयित्वा तन्मृत्वाऽगादमरालयम् । ततश्च्युतेयं संजाता श्रेष्ठिंस्ते दुहिता सका ॥ ३२४ ॥
उक्त्वा नालोचितं पूर्वभवे दुर्वाक्यमेतया । यतस्तेनेयमाकाशदेवतादोषदूषिता ॥ ३२५ ॥
तामिहाऽऽनय कन्यां त्वं श्रुत्वा येन वचो मम । असौ पूर्वभवं जातिस्मरणेन हि पश्यति ॥ ३२६ ॥
तस्मादुपद्रवादाशु मुच्यते सेति सूरिणा । कथिते श्रेष्ठिना निन्ये सा सद्यस्तत्पदान्तिकम् ॥ ३२७ ॥
नष्टाः सूरिप्रभावेण खगामिन्यः क्षणेन ताः । श्रुत्वा च चरितं स्वस्य जातिस्मृतिमवाप सा ॥ ३२८ ॥
जजल्प च प्रभो ! सत्यं यद् युष्माभिर्निवेदितम् । तदलं भवत्रासेन परिव्रज्यां प्रयच्छ मे ॥ ३२९ ॥

१ श्रीमाणिक्यचन्द्रसूरिनिर्मिते शान्तिनाथचरित्रे तृतीयसर्गे–विदित्वा शाकिनीदोषं मान्त्रिको यन्त्रमालिखत् ॥ २७९ ॥ कृत्वा समग्रां सामग्रीं यावत्तत्ताप्यतेऽग्निना ।

२ प्रभावाद् योगिनस्तस्य शाकिन्या सा स्नुषोज्झिता । पाठोऽयं युक्तः ।

३ सापि तद्वचसा शीघ्रं राज्ञा निर्वासिता पुरात् । सापि तद्वचसा राज्ञा मुक्ता कृतविलक्षणा । इति च पाठान्तरम्.

गुरुः प्रोवाच ते भोगफलं कर्मास्ति संप्रति। भुक्ते तस्मिन् श्रमणी त्वं भविष्यसि शुभाशये! ॥ ३३० ॥
एवमस्त्विति तद्श्रेष्ठी प्रतिपद्यायथौ गृहम्। तद्दृष्ट्वा चिन्तयामास विस्मितः स महीपतिः ॥ ३३१ ॥
अत्यद्भुतं भगवतो ज्ञानमस्य महीतले। प्रत्यक्षमिव येनोक्तं यद्वृत्तं पूर्वजन्मनि ॥ ३३२ ॥
प्रप्रच्छ च प्रभो! मित्रानन्दस्य सुहृदः कथाम्। ममाप्याख्याहि कृत्वा त्वं प्रसादमतुलं मयि ॥ ३३३ ॥
गुरुणोक्तं महाराज! त्वत्पार्श्वाच्चलितोऽथ सः। जलदुर्गमतिक्रम्य स्थलदुर्गे ययौ क्रमात् ॥ ३३४ ॥
तत्रैकत्र गिरिणदीप्रप्राते तस्थिवानसौ। तदा भोक्तुं निविष्टास्ते सर्वेऽपि तव सेवकाः ॥ ३३५ ॥
कस्याश्चिद् दैवदुर्योगात पल्लेर्मध्यात् समागता। पपात तत्र भिल्लानां धाटी तावदतर्किता ॥ ३३६ ॥
सर्वेऽपि पत्तयो भिल्लैः प्रचण्डैस्ते पराजिताः। मित्रानन्दः स एकाकी कान्दिशीकः पलायितः ॥ ३३७ ॥
ह्रिया दर्शयितुं वक्त्रमक्षमास्ते पदातयः। केऽपि क्वापि ययुः पार्श्वे भवतः कोऽपि नाऽऽययौ ॥ ३३८ ॥
मित्रो गच्छन्नरण्येऽथ ददर्शैकं सरोवरम्। तत्र पीत्वा च पानीयं न्यग्रोधस्य तलेऽस्वपीत ॥ ३३९ ॥
ततोऽसौ कृष्णसर्पेण निस्सृत्य वटकोटरात्। दष्टो दृष्टश्च तत्रैकेनाऽऽगतेन तपस्विना ॥ ३४० ॥
विद्याऽभिमन्त्रितजलाभिषिक्तः सकलाङ्गकः। करुणाऽऽपन्नचित्तेन तेन जीवापितस्ततः ॥ ३४१ ॥
पृष्टश्चैवं त्वमेकाकी प्रस्थितोऽसि क्व भद्रक!। तेनापि कथिता वार्त्ता सत्या तस्य स्वकीयका ॥ ३४२ ॥
स्वस्थानं तापसः सोऽगाद् दध्यौ मित्रोऽपि हा मया। संप्राप्तमपि नो लब्धं सुखेन मरणं किल ॥ ३४३ ॥

तन्मित्रमङ्गमस्याऽपि भ्रष्टोऽहं स्वकदाग्रहात । अथवाऽद्यापि तत्पार्श्वे यामि किं चिन्तयाऽनया ॥ ३४४ ॥
ततोऽसौ वलितो मार्गे गृहीतस्तस्करैः पुनः । नीत्वा च निजपल्लीं तैर्विक्रीतो वणिगन्तिके ॥ ३४५ ॥
सोऽपि पारमकूलाख्ये देशे गन्तुमना वणिक् । उज्जयिन्यां पुरि प्राप्तोऽन्यदाऽऽवात्सीच्च तद्बहिः ॥ ३४६ ॥
तत्र रात्रावसौ मित्रः कथञ्चिद् गतबन्धनः । पुर्यां निर्द्धमनेनान्तः प्रविवेश तदा पुनः ॥ ३४७ ॥
तस्करोपद्रुता माऽभूत ततो राज्ञा नियोजितः । आरक्षको विशेषेण चौरनिग्रहकर्मणि ॥ ३४८ ॥ ( युग्मम् )
प्रविशंश्चौरवत तेन मित्रानन्दो निरीक्षितः । बद्धश्च केकिबन्धेनं[1] विपरीतविधेर्वशात ॥ ३४९ ॥
यष्टिमुष्ट्यादिभिर्घातैस्ताडयित्वा च निष्ठुरम् । वधार्थं स्वमनुष्याणामारक्षेण समर्पितः ॥ ३५० ॥
अयं सिप्रानदीतीरे वटवृक्षे महीयसि । उद्बध्य वध्यो युष्माभिरिति चाज्ञापिता इमे ॥ ३५१ ॥
ततस्तैर्नीयमानोऽसौ मनस्येवं व्यचिन्तयत् । जातं तद्वचनं सत्यं यच्छवेनोदितं पुरा ॥ ३५२ ॥
यत्र वा तत्र वा यातु यद्वा तद्वा करोत्यसौ । तथाऽपि मुच्यते प्राणी न पूर्वकृतकर्मणा ॥ ३५३ ॥
विभवो निर्धनत्वं च बन्धनं मरणं तथा । यत्र यस्य यदा लभ्यं तस्य तत्र तदा भवेत् ॥ ३५४ ॥
याति दूरमसौ जीवोऽपायस्थानाद्भयद्रुतः । तत्रैवाऽऽनीयते भूयोऽद्दमिव प्रौढकर्मणा ॥ ३५५ ॥
मा कार्षीः कोपमेतेषु रे जीव ! वधकेष्वपि । यदीच्छसि परत्रापि सुखलेशं त्वमात्मनः ॥ ३५६ ॥

[1] मयूरबन्धेन.

एवं विचिन्तयन्नेष तैरारक्षकपूरुषैः । तत्रोद्बद्धो वटे नीत्वाऽपराधरहितोऽप्यहो ! ॥ ३५७ ॥
अन्यदा रममाणानां गोपानां दैवयोगतः । उत्प्लुत्योन्नतिकाऽविक्षत् मुखे तस्याऽपि पूर्ववत् ॥ ३५८ ॥
तत् सूरिवदनाच्छ्रुत्वाऽमरदत्तो महीपतिः । स्मारं स्मारं गुणग्रामं तस्यैवं व्यलपन्मुहुः ॥ ३५९ ॥
हा मित्र ! निर्मलस्वान्त ! हा परोपकृतौ रत ! । हा प्रशस्यगुणव्रात ! हा भ्रातः ! क्व गतोऽसि हा ! ॥ ३६० ॥
देवी च विललापैवं हा देवर ! सखिप्रिय ! । सुविचार ! गुणाधार ! निर्विकार ! क्व तिष्ठसि ? ॥ ३६१ ॥
यदाऽहं भवताऽऽनीता तदाऽनेके विनिर्मिताः । उपायाः स्वविपत्तौ ते क्व गता हा महामते ! ॥ ३६२ ॥
उवाच सप्रियं भूपं विलपन्तमदो गुरुः । शोकं मा कुरु राजेन्द्र ! भवभावं विभावय ॥ ३६३ ॥
न चतुर्गतिकेऽप्यस्मिन् संसारे परमार्थतः । सौख्यं शरीरिणामस्ति किन्तु दुःखं निरन्तरम् ॥ ३६४ ॥
स कोऽपि नास्ति संसारे मृत्युना यो न पीडितः । सिद्धमार्गममुं ज्ञात्वा कः शोकं कुरुते सुधीः ? ॥ ३६५ ॥
शोकाऽऽवेशं परित्यज्य राजन् ! धर्मोद्यमं कुरु । येनेदृशानां दुःखानां भाजनं नोपजायसे ॥ ३६६ ॥
राज्ञा प्रोचे करिष्यामि धर्मं मे कथ्यतां परम् । मित्रानन्दस्य जीवोऽसौ कुत्रोत्पन्नो मुनीश्वर ! ॥ ३६७ ॥
सूरिः प्रोवाच ते देव्याः सोऽस्याः कुक्षौ समागतः । सुतत्वेन यतस्तेन भावना भाविता तदा ॥ ३६८ ॥
जातः कमलगुप्ताख्यस्तव पुत्रः सुविक्रमः । पूर्वं कुमारतां प्राप्य क्रमाद्राजा भविष्यति ॥ ३६९ ॥
पुनः पप्रच्छ भूपालः कथं तस्य महात्मनः । जाता निरागसोऽप्येवं तस्करस्येव पञ्चता ॥ ३७० ॥

कलङ्कसम्भवो देव्याः कथं वा समभूत प्रभो ! । मम बन्धुवियोगश्चाऽऽबाल्यादप्यभवत कथम् ? ॥ ३७१ ॥
स्नेहोऽधिकतरोऽस्माकं कथं वा भगवन् ! वद । इति पृष्टो मुनीन्द्रस्तु ज्ञात्वा ज्ञानेन सोऽवदत ॥ ३७२ ॥
इतो भवात् तृतीये त्वं भवे क्षेमङ्कराभिधः । आसीः कौटुम्बिको राजन् ! सत्यश्रीस्तस्य गेहिनी ॥ ३७३ ॥
चण्डसेनाभिधः कर्मकरः कर्मक्रियापटुः । बभूव च तयोर्भक्तोऽनुरक्तो विनयान्वितः ॥ ३७४ ॥
तत्क्षेत्रे सोऽन्यदा कर्म कुर्वाणः कञ्चनाध्वगम् । परक्षेत्रे धान्यशम्बा गृह्णन्तं समलोकयत् ॥ ३७५ ॥
ऊचे चैनमहो चौरमुल्लम्बय तराविति । न क्षेत्रस्वामिना तस्य विदधे किञ्चनापि तु ॥ ३७६ ॥
दूनस्तद्वचसा सोऽथाऽध्वगः कर्मकृताऽपि तत् । बद्धं क्रुधा चेष्टितेन कर्म दुर्वाक्यसम्भवम् ॥ ३७७ ॥
वध्वाः सत्यश्रियस्तस्या भुञ्जानाया गृहेऽन्यदा । उत्तालायाः कथमपि कवलो व्यलगद् गले ॥ ३७८ ॥
सोचे सत्यश्रिया पापे ! निशाचरि ! न भुञ्जसे । कवलैर्लघुभिः किं त्वं यथा नो विलगेद् गले ॥ ३७९ ॥
अन्येद्युः कर्मकृत सोऽथ स्वामिनोक्तो यथाऽद्य भोः ! । ग्रामेऽमुष्मिन् प्रयाहीति कारणेनामुना त्वकम्॥ ३८० ॥
सोऽवदद् व्याकुलोऽद्याहं बन्धूनां मिलनेन हि । कुपितेन च तेनोक्तं स्वजना मा मिलन्तु ते ॥ ३८१ ॥
अत्रान्तरे मुनिद्वन्द्वं गृहे तस्य समागतम् । दानमस्मै प्रदेहीति भणिता चामुना प्रिया ॥ ३८२ ॥
सुपात्रमिति हर्षेण तदा तत्प्रतिलाभितम् । प्राशुकैर्भक्तपानाद्यैरकृताकारितैस्तथा ॥ ३८३ ॥
दद्दृशौ कर्मकरोऽप्येतौ धन्यौ याम्यां महामुनी । काले निजगृहायातौ भक्तितः प्रतिलाभितौ ॥ ३८४ ॥

अत्रान्तरेऽपतत् तेषां त्रयाणामुपरि क्षणात् । क्षणिका तेन पञ्चत्वं सममेव गता हि ते ॥ ३८५ ॥
सौधर्मकल्पे देवत्वं प्राप्ताश्च प्रीतिनिर्भराः । ततः क्षेमङ्करश्च्युत्वा त्वमभूर्जगतीपते ! ॥ ३८६ ॥
जीवः सत्यश्रियः सेयं सञ्जाता रत्नमञ्जरी । जीवः कर्मकरस्याभूत् मित्रानन्दः सखा तव ॥ ३८७ ॥
बद्धं यद् येन दुष्कर्म वचसा पूर्वजन्मनि । तत्तस्योपस्थितं राजन् ! युष्माकमिह जन्मनि ॥ ३८८ ॥
ततः पूर्वभवे राजन् ! यद्धसद्भिर्निबध्यते । रुदद्भिर्वेद्यतेऽवश्यं तत्कर्मेह शरीरिभिः ॥ ३८९ ॥
तन्निशम्य महीपोऽसौ मुमूर्च्छ प्रियया सह । तत्पूर्वविहितं सर्वं जातिमृत्या विवेद च ॥ ३९० ॥
ऊचे च यत्प्रभो ! प्रोक्तं युष्माभिर्ज्ञानभास्करैः । तज्जातिस्मरणेनाऽभूत् प्रत्यक्षमधुनाऽपि मे ॥ ३९१ ॥
तदेतस्यामवस्थायां विद्यते यस्य योग्यता । कृत्वा प्रसादं युष्माभिः स धर्मो मम कथ्यताम् ॥ ३९२ ॥
गुरुः प्रोवाच सञ्जातं तनये ते महीपते ! । प्रव्रज्या भवितेदानीं गृहिधर्मस्तवोचितः ॥ ३९३ ॥
ततो द्वादशभेदेन गृहीधर्मो विवेकिना । प्रपन्नोऽमरदत्तेन भूभुजा प्रियया सह ॥ ३९४ ॥
पुनः पप्रच्छ भूपालो यत्तदा तेन जल्पितम् । मृतकेन तदाख्याहि कारणं विस्मयोऽत्र मे ॥ ३९५ ॥
गुरुणोक्तमसौ पान्थः शम्बाग्राही महीपते ! । मृत्वा भ्रान्त्वा भवं तत्र वटेऽभूद् व्यन्तरः क्रमात् ॥ ३९६ ॥
मित्रानन्दं समुद्वीक्ष्य स्मृत्वा वैरं च तत्कृतम् । अवतीर्य्य शवस्याऽऽस्ये तेन तज्जल्पितं वचः ॥ ३९७ ॥

१ विद्युत्.

इत्थं विच्छिन्नसन्देहोऽमरदत्तो महीपतिः । सूरिं नत्वा स्वसदनमाययौ मपरिग्रहः ॥ ३९८ ॥
अज्ञानमोहितप्राणिप्रतिबोधविधौ रतः । धर्मघोषमुनीन्द्रोऽपि विजहार महीतले ॥ ३९९ ॥
समये रत्नमञ्जर्या देव्याः सूनुरजायत । तदेव ममभूत् तस्य नाम यद् गुरुणोदितम् ॥ ४०० ॥
धात्रीभिः पालितः सोऽथ समतिक्रान्तशैशवः । समधीतकलो विश्वम्भराधारक्षमोऽभवत् ॥ ४०१ ॥
स एव सुगुरुस्तत्र पुनरन्येद्युराऽऽययौ । उद्यानपालकस्तस्याऽऽगतिं राज्ञे शशंस च ॥ ४०२ ॥
निवेश्य तनयं राज्ये ततोऽसौ प्रियया सह । गुरूणामन्तिके तेषां परिव्रज्यामुपाददे ॥ ४०३ ॥
गज्ञः सपरिवारस्य दत्त्वा दीक्षामथो गुरुः । तस्याऽन्येषां च बोधार्थं शिक्षामेवंविधां ददौ ॥ ४०४ ॥
भवाम्भोधिपतज्जन्तुनिस्तारणतरी क्षमा । कथञ्चित् पुण्ययोगेन प्रव्रज्या प्राप्यतेऽङ्गिभिः ॥ ४०५ ॥
प्रव्रज्यां प्रतिपद्यापि स्युर्यके विषयैषिणः । जिनरक्षितवद् घोरे ते पतन्ति भवार्णवे ॥ ४०६ ॥
स्युर्यके निरपेक्षास्तु विषयेष्वर्थिता अपि । जिनपालितवत्तेऽत्र भवन्ति सुखभाजिनः ॥ ४०७ ॥
पृष्टो राजर्षिणा तेन ततः कथयति स्म सः । सूरिः सिद्धान्तकथितां भविष्यन्तीं तयोः कथाम् ॥ ४०८ ॥
चम्पापुर्यां प्रसिद्धायां जितशत्रुरभून्नृपः । बभूव धारिणी नाम्नी तत्प्रिया रूपशालिनी ॥ ४०९ ॥
अभवत्तत्र माकन्दी नाम्ना श्रेष्ठी महाधनः । प्रशान्तः सरलस्त्यागी बन्धुकैरवचंद्रमाः ॥ ४१० ॥

भद्रा नाम्नी च तद्भार्या तत्सुतौ क्रमजावुभौ । जिनपालितनामाढ्यो द्वितीयो जिनरक्षितः[2] ॥ ४११ ॥
यानमारुह्य कुर्वद्भ्यां परदेशे गताऽऽगतम् । वारानेकादशामूभ्यां निस्तीर्णः सरितां पतिः ॥ ४१२ ॥
अर्जितं हि धनं भूरि ततस्तावतिलोभतः । गन्तुकामौ पुनस्तत्राऽऽपृच्छतां पितरं निजम् ॥ ४१३ ॥
सोऽवदद् विद्यतेऽग्रेऽपि हे वत्सौ ! प्रचुरं धनम् । निजेच्छया त्यागभोगौ तेनैव कुरुतं युवाम् ॥ ४१४ ॥
इयं च द्वादशी वेला भवेत् सोपद्रवाऽप्यमो । ततो न युज्यते वार्द्धौ प्रयातुमिति मे मतिः ॥ ४१५ ॥
अथ तावूचतुस्तात ! मा वादीरीदृशं वचः । भाविन्येषाऽपि नौयात्रा क्षेमेण त्वत्प्रमादतः ॥ ४१६ ॥
ततस्तेन विसृष्टौ तावत्याग्रहपरायणौ । क्रयाणकं जगृहतुर्गणिमादिचतुर्विधम् ॥ ४१७ ॥
सामग्रीं सकलां कृत्वा जलादीनां च संग्रहम् । यानमारुह्य चार्णोधौ ततः प्रविशतः स्म तौ ॥ ४१८ ॥
तयोर्महासमुद्रान्तर्गतयोरभवत् क्षणात् । अकालदुर्दिनं व्योम्नि जगर्ज च बलाहकः ॥ ४१९ ॥
विललासामकृद् विद्युद्भयश्च जजृम्भिरे । वातश्च प्रबलो जज्ञे यानं तेन ननर्त तत् ॥ ४२० ॥

१ सद्धर्मकर्मनिपुणो गुरौ देवे च भक्तिमान् । दानशीलतपोभावधर्मं करोत्यनारतम् ॥ ११ ॥ भद्रानाम्नी च तद्भार्या रूपलावण्यसंयुता । सतीत्वं पालयन्ती सा विनयादिगुणान्विता ॥ १२ ॥ तत्कुक्षिसम्भवौ शान्तौ तनयौ क्रमजावुभौ । इत्येवं पाठः । २ इतिश्लोकानन्तरं—विद्याविनयसौन्दर्य्यलावण्यादिगुणाञ्चितौ । शैशवाद् यौवनं प्राप्तौ पित्रा तौ परिणायितौ ॥ १४ ॥ द्विसप्ततिकलायुक्तौ द्रव्योपार्जनतत्परौ । स्वदेशे परदेशे च यातायातौ सदैव तौ ॥ १९ ॥ इत्येवं पाठः । ३ जलधौ । ४ मेघः ।

स्फुटितं च क्षणादेव विधुरेऽधीरचित्तवत् । विपन्नस्तद्गतो लोकस्तौ यानाधिपती पुनः ॥ ४२१ ॥
लब्ध्वा फलहकं किञ्चित् तद् गाढं परिरभ्य च । तीरमासेदतू रत्नद्वीपस्य दिवसैस्त्रिभिः ॥ ४२२ ॥ (युग्मम्)
नालिकेरीफलैस्तत्र प्राणयात्रां विधाय तौ । तत्तैलाभ्यङ्गयोगेन रूढदेहौ बभूवतुः ॥ ४२३ ॥
ततस्तत्राऽऽययौ रत्नद्वीपदेवीति देवता । नृशंसा निर्घृणा पाणौ कृपाणं बिभ्रती शितम् ॥ ४२४ ॥
ऊचे चैवमहो सार्द्धं मया विषयसेवनाम् । चेद् युवां कुरुथः प्राणकुशलं वां ततो भवेत् ॥ ४२५ ॥
अन्यथाऽनेन खड्गेन शिरश्छेत्स्यामि निश्चितम् । इत्युक्ते भयभीताङ्गौ तावप्येवं जजल्पतुः ॥ ४२६ ॥
भिन्नप्रवहणावावां देवि ! त्वां शरणाऽऽश्रितौ । यदाऽऽदिशसि किञ्चित्त्वं कर्तास्वस्तदसंशयम् ॥ ४२७ ॥
प्रासादमात्मनो नीत्वा तौ ततः प्रीतमानसा । अपजह्रे तयोरङ्गात् पुद्गलानशुभानसौ ॥ ४२८ ॥
बुभुजेऽथ समं ताभ्यां स्वैरं वैषयिकं सुखम् । ताभ्यां सुधाफलाहारं ददौ च प्रतिवासरम् ॥ ४२९ ॥
एवं च तस्थुषोर्यावद् गताः कत्यपि वासराः । तयोस्तत्राऽन्यदा तावत् तयैवं भणिताविमौ ॥ ४३० ॥
सुस्थितेनाऽहमादिष्टाऽधिष्ठात्रा लवणोदधेः । यथा त्रिः सप्तकृत्वस्त्वं भद्रे ! शोधय वारिधिम् ॥ ४३१ ॥
तृणकाष्ठाशुचिप्रायं भवेद् यत् तत्र किञ्चन । सर्वं नीत्वा तदेकान्ते परित्याज्यं ममाऽऽज्ञया ॥ ४३२ ॥
ततस्तत्र मया गम्यं युवामत्रैव तिष्ठतम् । कुर्वन्तौ सत्फलैरेभिः प्राणवृत्तिं शुभाशयौ ॥ ४३३ ॥

कथञ्चिद्विजनत्वाद्वां यद्यत्रोत्पद्यतेऽरतिः । पूर्वदिग्वनखण्डे तद् गन्तव्यमपशङ्कितम् ॥ ४३४ ॥
सर्वदाऽवस्थितौ तत्र ग्रीष्मप्रावृट्सुसंज्ञितौ । उभावृतू विनोदाय युवयोरपि भाविनौ ॥ ४३५ ॥
न चेत् तत्राऽपि वां चित्तं रमेत कथमप्यहो । तदोत्तरवनखण्डे गन्तव्यं हि ममाऽऽज्ञया ॥ ४३६ ॥
तत्राप्यवस्थितौ नित्यं शरद्धेमन्तनामकौ । भविष्यत ऋतू नाम स्वाधीनौ युवयोरपि ॥ ४३७ ॥
तत्राऽपि नो रतिश्चेद्वां तत्प्रतीचीवनान्तरे । गम्यं तत्राऽपि शिशिरवसन्ताख्यावृतू स्थिरौ ॥ ४३८ ॥
ततः प्रासाद एवाऽत्राऽऽगम्यमौत्सुक्यसम्भवे । दक्षिणस्या वनेऽमुष्मिन् गन्तव्यं न कथञ्चन ॥ ४३९ ॥
यतस्तत्रासितच्छायो भुग्नकायो द्विजिह्वकः । अस्ति दृष्टिविषः सर्पो वेणीभूतोऽतिनिस्त्रियः ॥ ४४० ॥
एवमुक्त्वा ययावेषा माकन्दितनयौ च तौ । वनखण्डत्रये तस्मिन् गच्छतः स्म पुरोदिते ॥ ४४१ ॥
अथाचिन्तयतां चैवं दक्षिणस्या दिशो वने । पौनःपुन्येन गच्छन्तौ तयाऽऽवां वारितौ कथम् ? ॥ ४४२ ॥
चिन्तयित्वेति साशङ्कौ यावत्तौ तत्र गच्छतः । प्रविवेश तयोस्तावद् घ्राणे गन्धः सुदुःसहः ॥ ४४३ ॥
स्थगयित्वोत्तरीयेण नासारन्ध्रे ततश्च तौ । राशिं नरकङ्काणां वने तस्मिन्नपश्यताम् ॥ ४४४ ॥
भयभीतौ विशेषेणाऽऽलोकयन्तावदो वनम् । नरमेकं च तौ प्रेक्षाञ्चक्राते शूलिकागतम् ॥ ४४५ ॥
जीवन्तं विलपन्तं च दृष्ट्वा पप्रच्छतुश्च तम् । कस्त्वं भद्र ! कथं वा तेऽत्रस्थेयं के त्वमी शवाः ? ॥ ४४६ ॥

१ नरकलेवराणां.

सोऽप्यवोचत काकन्दीपूर्वास्तव्योऽस्म्यहं वणिक्। भग्नं वारिनिधौ यानं वाणिज्येनाऽऽगतस्य मे॥ ४४७ ॥
ततश्चेहाऽऽगतो रत्नद्वीपदेव्याऽभिकामितः। स्तोकापराधेऽप्यन्येद्युस्तयैवं निहितोऽस्म्यहम् ॥ ४४८ ॥
तयैवं विहताश्चैतेऽनया प्रक्रियया शवाः। तद् युवां कुत आयातौ प्राप्तौ चास्या गृहे कथम्?॥ ४४९ ॥
ततस्तावात्मनो वार्ता निवेद्य तमपृच्छताम्। भद्र! नौ जीवनोपायः कोऽप्यस्त्येवंस्थिते मति॥ ४५० ॥
सोऽवदच्छैलको नाम्ना यक्षः पूर्ववनेऽस्ति भोः!। सोऽश्वरूपधरः पर्वदिनेष्वेवं प्रजल्पति॥ ४५१ ॥
कं रक्षामि नरं कं वा विपदं तारयाम्यहम्। तद् गत्वा यक्षराजं तं भक्त्याऽऽराधयतं युवाम्॥ ४५२ ॥
उद्घोषणायां जातायामावां रक्षेति जल्पतम्। इति शिक्षां तयोर्दत्त्वा स नरः संस्थितस्ततः॥ ४५३ ॥
पूजयामासतुः पुष्पैर्यक्षं गत्वा च तत्र तौ। आवां निस्तारयेत्याशु तदुक्तौ च जजल्पतुः॥ ४५४ ॥
उवाच शैलको निस्तारयिष्यामि युवामहम्। एकं त्ववहितौ भूत्वा वाक्यं मेश्रृणुतं मम॥ ४५५ ॥
युवयोर्गच्छतोः पृष्ठे देवता सा समेष्यति। सानुरागमकामानि जल्पिष्यति वचांस्यपि ॥ ४५६ ॥
अनुरागं ततस्तस्यां युवां यदि करिष्यथः। ततश्चोल्लालयित्वाऽहं प्रक्षेप्स्यामि महोदधौ॥ ४५७ ॥
यदि वा निरपेक्षौ हि तस्यां ननु भविष्यथः। ततः क्षेमेण चम्पायां प्रापयिष्यामि निश्चितम्॥ ४५८ ॥
किं बहुना?
संमाननं न दृष्टयाऽपि तस्याः कार्यं कथञ्चन। न भेतव्यं भयं तस्यां दर्शयन्त्यामपि स्फुटम्॥ ४५९ ॥

व्यवस्थयाऽनया त्वं भोः! शक्तौ निर्वाहितुं यदि। तन्ममाऽऽरुहतं पृष्ठं शीघ्रं येन नयाम्यहम् ॥ ४६० ॥
ततस्तत्पृष्ठमारूढौ तावङ्गीकृत्य तद्वचः। उत्पत्य नभसा सोऽपि ययौ मध्ये महोदधेः ॥ ४६१ ॥
अत्रान्तरे च देवी साऽपश्यन्ती तौ स्ववेश्मनि। बभ्राम वनखण्डेषु तत्राऽप्येतौ ददर्श न ॥ ४६२ ॥
ततो ज्ञानोपयोगेन ज्ञात्वा तद्गमनं तयोः। दधावे खड्गमादाय पृष्ठे कोपपराऽसकौ ॥ ४६३ ॥
दृष्ट्वा च तावुवाचैवं रे! किं याथो विमुच्य माम्?। पुनरागच्छतं स्वस्य जीवितं वाञ्छथो यदि ॥ ४६४ ॥
नो चेदनेन खड्गेन पातयिष्यामि वां शिरः। तयेत्युक्तेऽथ यक्षेण भणितौ ताविदं पुनः ॥ ४६५ ॥
मम पृष्ठे स्थितावस्या मा भैष्टं भोः! कथञ्चन। इति संधीरितावेतौ स्थिरचित्तौ बभूवतुः ॥ ४६६ ॥
ततोऽनुकूलवाक्यानि जजल्पैवमसौ यथा। मां मुक्त्वैकाकिनीं दीनां क्व प्रियौ प्रस्थितौ युवाम्?॥ ४६७ ॥
इत्यादिदीनवचनैस्तया भणितयोरपि। न चचाल तयोश्चित्तं यक्षावष्टम्भशालिनोः ॥ ४६८ ॥
ततोऽसौ भेदनिष्णाता प्रन्यूचे जिनरक्षितम्। मम प्रियो विशेषेण त्वमेवासि महाशय! ॥ ४६९ ॥
ईक्षणाऽऽलापसंमानक्रियासाम्येऽपि देहिनाम्। चित्ताह्लादकरं प्रेम कस्मिंश्चिदपि जायते ॥ ४७० ॥
एवं ममाऽपि कुर्वत्या युवाभ्यां सह सङ्गतिम्। जिनरक्षित! सद्भावे स्नेहस्त्वय्येव निश्चलः ॥ ४७१ ॥
तदेहि देहि हे कान्त! ममैकान्तरतेः सुखम्। अन्यथाऽहं मरिष्यामि त्वद्वियोगरुजाऽर्दिता ॥ ४७२ ॥
नाथानाथां म्रियमाणां दृष्ट्या मां किं न वीक्षसे?। ददाति रागिणी प्राणानिन्यर्थे संशयो नु किम्॥ ४७३ ॥

तत्कूटमोहितः सोऽथ तत्र मन्यमिति चिन्तयन् । दृष्ट्याऽऽलोकयते स्मास्या दुर्गतेरिव संमुखम् ॥ ४७४ ॥
यक्षेणोल्लालयित्वाऽथ क्षिप्तः सोऽथ स्वपृष्ठतः । तया नीग्मसंप्राप्तत्रिशूलेन प्रतीच्छितः ॥ ४७५ ॥
लभस्व पाप ! रे सद्यो मम वञ्चनजं फलम् । इत्युदित्वा च खड्गेन खण्डयित्वा निपातितः ॥ ४७६ ॥
ततश्च कूटकपटरचनानाटिका नटी । प्रत्याययितुमारेभे चाटुभिर्जिनपालितम् ॥ ४७७ ॥
यक्षेण भणितः सोऽथ यद्यस्या वचने रुचिः । भविष्यति गतिस्तत्ते कनिष्ठस्येव निश्चितम् ॥ ४७८ ॥
जातो निश्चलचित्तोऽसौ तं कूटमवधूय तत् । क्षेमेण सह यक्षेण प्राप्तः चम्पापुरीं निजाम् ॥ ४७९ ॥
वलिता व्यन्तरी साऽथ यक्षोऽपि वलितः सकः । क्षमितः कृतकृत्येन श्रेष्ठिपुत्रेण भक्तितः ॥ ४८० ॥
गेहे गत्वा स्वलोकस्य मिलितो जिनपालितः । कथयामास तद्बन्धुमरणं शोकसङ्कुलम् ॥ ४८१ ॥
मृतकार्याणि तस्याऽथ माकन्दी स्वजनान्वितः । विधाय पालयामास गृहवासं सुतश्च सः ॥ ४८२ ॥
अन्यदा समवासार्षीत तत्र वीरजिनेश्वरः । तं नन्तुं जग्मतुश्चैतौ माकन्दिजिनपालितौ ॥ ४८३ ॥
श्रुत्वा तदन्तिके धर्मं प्रतिबुद्धौ महाशयौ । जातव्रतपरीणामौ जिनं नत्वेयतुर्गृहम् ॥ ४८४ ॥
पौत्रे भारं कुटुम्बस्य विन्यस्य सुतसंयुतः । स श्रेष्ठी परिवव्राज श्रीवीरजिनसन्निधौ ॥ ४८५ ॥
पिता समन्वितः सोऽथ जिनपालितसंयतः । स्वकार्यसाधको जज्ञे तपः कृत्वा सुदुश्चरम् ॥ ४८६ ॥
कथयित्वा कथामेतां धर्मघोषमुनीश्वरः । राजर्षेरमरस्योपयनं कथयति स्म सः ॥ ४८७ ॥

यथा तौ वणिजौ तद्वद् जीवाः संसारिणोऽखिलाः । रत्नद्वीपदेवतेवाऽविरतिः परिकीर्तिता ॥ ४८८ ॥
तथाऽविरतिजं दुःखं यथाऽस्याः शवसञ्चयः । शूलागतनरो यद्वद् हितभाषी गुरुस्तथा ॥ ४८९ ॥
यथा तेन तत्स्वरूपमनुभूतं निवेदितम् । तथैवाविरतेर्दुःखं गुरुराख्याति देहिनाम् ॥ ४९० ॥
यथाऽसौ शैलको यक्षस्तारकः संयमस्तथा । समुद्र इव संसारस्तरणीयोऽमुना ध्रुवम् ॥ ४९१ ॥
यथा तस्या वशीभूतो विनष्टो जिनरक्षितः । तथैवाऽविरतेर्जन्तुर्वशीभूतो विनश्यति ॥ ४९२ ॥
देवतोक्तिनिराकाङ्क्षी यक्षादेशमखण्डयन् । क्षेमेण स्वपुरं प्राप्तो यथाऽसौ जिनपालितः ॥ ४९३ ॥
विरतोऽविरतेस्तद्वच्चारित्रमविराधयन् । निष्कर्मा जायते प्राणी निर्वाणसुखभाजनम् ॥ ४९४ ॥
तद् भोः ! प्रपद्य श्रामण्यं पुनर्भोगेषु नो मनः । कर्त्तव्यमिति सन्दिष्टे गुरुणा मुमुदे मुनिः ॥ ४९५ ॥
समर्पिता प्रवर्तिन्यास्ततोऽसौ रत्नमञ्जरी । कृत्वोदारं तपस्तौ द्वौ संप्राप्तौ परमं पदम् ॥ ४९६ ॥

॥ इति मित्रानन्दामरदत्तकथानकं समाप्तम् ॥

स्वयंप्रभमुनेर्धर्मोपदेशमतिपावनम् । श्रुत्वैवं प्रतिबुद्धोऽसौ राजा स्तिमितसागरः ॥ ४९७ ॥
अनन्तवीर्यं भूपत्वे, कुमारत्वेऽपरं सुतम् । विन्यस्यास्य मुनेः पार्श्वे स दीक्षां समुपाददे ॥ ४९८ ॥
विराध्य मनसा किञ्चित् सोऽन्तकालेऽनगारताम् । मृत्वाऽधो भुवने जज्ञे चमरेन्द्रोऽसुराऽधिपः ॥ ४९९ ॥
इतोऽपराजितानन्तवीर्ययोर्विश्रुताजुषोः । विद्याधरेण केनाऽपि मैत्री समभजायत ॥ ५०० ॥

दत्ता विद्यास्तेन ताभ्यां विहायोगमनक्षमाः । सर्वा तत्साधनोपायसामग्री च निवेदिता ॥ ५०१ ॥
बर्बरीति चिलातीति गीतनाट्यकलाविदौ । तयोर्बभूवतुर्दास्यौ विनोदास्पदमद्भुतम् ॥ ५०२ ॥
अन्यदा स्थानमासीनौ सन्नाट्यक्रियया तयोः । अभूतां व्याकुलौ यावत् तौ बन्धू रङ्गनिर्भरौ ॥ ५०३ ॥
तावत् तत्र ब्रह्मचारी स्वेच्छाचारी कलिप्रियः । सम्यग्दर्शनपुण्यात्मा नारदर्षिरुपाययौ ॥ ५०४ ॥
नासावभ्युत्थितस्ताभ्यामाक्षिप्ताभ्यां ततश्च सः । रुष्टो व्यचिन्तयदिमौ चेटीनाट्येन मोहितौ ॥ ५०५ ॥
वित्तो मामपि नाऽऽयातं ततोऽमू चेटिके ध्रुवम् । महामात्रे कलापात्रे हारयिष्यामि केनचित् ॥ ५०६ ॥ (युग्मम्)
विद्याधराधिराजस्य त्रिखण्डविजयेशितुः । प्रतिविष्णोर्दमितारेः सकाशे स ययौ ततः ॥ ५०७ ॥
अभ्युत्थानादिसत्कारं कृत्वाऽस्मावासनस्थितम् । पप्रच्छ तं मुनिं दृष्टं पृथिव्यां किञ्चिदद्भुतम् ॥ ५०८ ॥
सोऽवदच्छृणु राजेन्द्र ! सुभगायाः पुरो विभोः । अनन्तवीर्यभूपस्य समीपे गतवानहम् ॥ ५०९ ॥
तद्बर्बरिचिलात्याख्यचेट्योर्नाट्यक्रिया वरा । मयाऽवलोकिता तत्र विश्वविस्मयकारिणी ॥ ५१० ॥
किं विद्याभिः प्रचण्डाभिः किं राज्येन किमाज्ञया । ते विना तत्र भूपेति गदित्वा नारदो ययौ ॥ ५११ ॥
तेनाऽथ प्रेषितो दूतः स गत्वा तत्र सत्वरम् । इदमूचे तयोरग्रे स्वस्वामिबलगर्वितः ॥ ५१२ ॥
हंहो भवन्ति रत्नानि राजगामीनि निश्चितम् । चेट्यौ नाट्यविधायिन्यौ तदेते अर्प्यतां प्रभोः ॥ ५१३ ॥
तावेवमूचतुर्भद्र ! युक्तं त्वं ननु जल्पसि । आलोच्यैतत् करिष्यावो याहि त्वं स्वामिनोऽन्तिके ॥ ५१४ ॥

दूतं विसृज्य तावेवं मन्त्रयांचक्रतुर्यथा । विद्याबलेन नौ तावत् करोत्येष पराभवम् ॥ ५१५ ॥
आवामपि ततो विद्याः साधयित्वा स्वचित्तगाः । दर्पमस्य हरिष्याव इति चिन्तयतोस्तयोः ॥ ५१६ ॥
पूर्वजन्मसाधितास्ताः स्वयमेवोपतस्थिरे । शंसित्वा सिद्धमात्मानं विविशुश्च तदन्तिके ॥ ५१७ ॥ ( युग्मम् )
जातौ विद्याधरौ तौ द्वौ तत्प्रभावान्महौजसौ । विद्यानां चक्रतुश्चाऽर्चां गन्धमाल्यादिवस्तुभिः ॥ ५१८ ॥
अत्रान्तरे पुनर्दूतः प्राप्तस्तस्य महीपतेः । जजल्पैवमहो मृत्योरतिथी किं भविष्यथः ? ॥ ५१९ ॥
येन नाऽद्याऽपि चेट्यौ ते कृते प्रेषयथः प्रभोः । तावूचतुश्च कर्तव्यमवश्यं स्वामिनो हितम् ॥ ५२० ॥
ततस्तद्दुहितः स्वर्णश्रियो लोभेन तावुभौ । चेट्यो रूपं तयोः कृत्वा जग्मतुस्तत्पुरे द्रुतम् ॥ ५२१ ॥
कलाकौशलमालोक्य भणितौ तौ महीभुजा । युवाभ्यां करणीयो हि विनोदः कनकश्रियः ॥ ५२२ ॥
यथौतुर्[1]दुग्धरक्षायां क्षुद्रान् सिद्धान्नरक्षणे । हृष्टा भवेत् तथाऽभूतां तदादेशे नृपस्य तौ ॥ ५२३ ॥
सा कामगृहिणीरूपा[2] दृष्टा ताभ्यां सुकन्यका । सर्वोपमादलौघैर्या विधिनेव विनिर्मिता ॥ ५२४ ॥
आभाषि भावमधुरैः परिहासमनोहरैः । देशीभाषासगर्भैश्च प्रियालापैः ससंभ्रमम् ॥ ५२५ ॥
पप्रच्छ साऽथ तत्पार्श्वेऽनन्तवीर्यस्वरूपताम् । ततोऽपराजितोऽशंसत् तदग्रे तद्गुणानिति ॥ ५२६ ॥

१ मार्जारः । २ रतिरूपा ।

रूपचातुर्यगाम्भीर्यवीर्यौदार्यादिसद्गुणाः । शक्या ह्यनन्तवीर्यस्य शंसितुं नैकजिह्वया ॥ ५२७ ॥ (युग्मम्)

किञ्च—

कुटिलः सरलाङ्गेन विश्रुतिः श्रुतिशालिना । शेषोऽपि निर्जितो येन क्षमाभृद् बिभ्रता क्षमाम् ॥ ५२८ ॥

सञ्जातरोमहर्षा तां दृष्ट्वा पुनरभाषत । यद्यस्ति कौतुकं तत्ते दर्शयाम्यधुनैव तम् ॥ ५२९ ॥

आमेति तकया प्रोक्ते तावभूतां स्वरूपिणौ । दृष्ट्वा जगाद सा चाहं युष्मदाज्ञाकरी खलु ॥ ५३० ॥

विष्णुः प्रोवाच यद्येवमेहि यामो निजां पुरीम् । जजल्प सा च मत्तातो विधाता वां पराभवम् ॥५३१॥

भणिता सा ततस्ताभ्यां भेतव्यं न हि सर्वथा । आवयोः समरे नैष पुरः स्थातुं क्षणं क्षमः ॥ ५३२ ॥

तयोरिति वचः श्रुत्वा प्रेमपाशनियन्त्रिता । विस्मिता रूपशौर्याभ्यामाभ्यां सह चचाल सा ॥ ५३३ ॥

विमानं विद्यया कृत्वा समारुह्य नभःस्थितः । उवाचाऽनन्तवीर्योऽथ दमितारिं सदःस्थितम् ॥ ५३४ ॥

भो भोः ! सामन्तमन्त्र्याद्याः ! सेनाध्यक्षा ! नृपस्य ये । शृण्वन्त्वपहरन्नस्मि सुतां युष्मत्पतेरिमाम् ॥ ५३५ ॥

१ प्रत्यन्तरेषु भूयान् पाठभेद एषः—

भणिता सा ततस्ताभ्यां भेतव्यं सुभ्रु ! न त्वया । आवां त्वज्जनकं जेतुं शक्तौ सबलवाहनम् ॥ ५३२ ॥ ततः सा प्रस्थिताऽनन्तवीर्येणैवमथोदितम् । सर्वे श्रृणुत भो लोकाः ! दमितारिश्च भूपतिः ॥ ५३३ ॥ अनन्तवीर्यनामाऽहं निजभ्रातृसमन्वितः । सहसा हरामि कनकश्रियं स्नेहवतीमिमाम् ॥५३४ ॥ विद्याविनिर्मितविमानाऽधिरूढौ ततश्च तौ । नभसा गन्तुमारब्धौ तां गृहीत्वा नृपात्मजाम् ॥५३५॥

न वाच्यं तेन भावेन गृहीवाऽस्माकमजानताम् । इत्युक्त्वीर्य्याऽनन्तवीर्यो नभोऽगात् सपरिग्रहः ॥ ५३६ ॥
तदाकर्ण्य ज्वलत्कोपकरालः प्रतिकेशवः । रे रे ! गृह्णीत गृह्णीत दुरात्मानममुं जवात् ॥ ५३७ ॥
खेचरा हुं प्रकुर्वन्तः क्व गमिष्यसि दुर्मते ! । अन्वधावन् गृहीतास्त्रा मृगारेरिव जम्बुकाः ॥ ५३८ ॥
एतान् विद्रावयामास तृण्यां वायुः क्षणादिव । विष्णुस्तांश्च तथा दृष्ट्वा दमितारिरथाऽचलत् ॥ ५३९ ॥
कल्पान्त इव पाथोधिर्वलोर्मिकुलसङ्कुलः । गजाश्वपत्तिग्राहाक्रस्तद्विरावघनध्वनिः ॥ ५४० ॥
तमायान्तमथाऽऽलोक्य भीरुं भयसमाकुलाम् । आश्वास्य रचयामास नाशकारि रिपोर्बलम् ॥ ५४१ ॥
तयोर्नासीरवीराणां प्रतिकेशवशार्ङ्गिणोः । कलिः कलकलारावसङ्कुलः समभूत् तदा । ॥ ५४२ ॥

दमितारिनृपेणाऽथ प्रेषिताः सुभटा निजाः । तदोत्पन्नास्त्ररत्नाभ्यां सुभटास्ते पराजिताः ॥ ९३६ ॥ दमितारिः स्वयं सोऽथ महाबलसमन्वितः । हन्तुमेतावधाविष्ट दुष्टो दष्टाधरः क्रुधा ॥ ९३७ ॥ कृतान्तमिव संक्रुद्धं समायान्तं विलोक्य तम् । बिभाय कनकश्रीः सा ताभ्यां चाऽऽश्वासिता पुनः ॥ ९३८ ॥ संग्रामे संमुखीनौ तावित्युक्तौ दमितारिणा । भो ! भोः ! समर्प्य मे पुत्रीं जीवन्तौ गच्छतं युवाम् ॥ ९३९ ॥ लभेतां मा पतङ्गत्वं मम कोपहुताशने । तावूचतुश्च याहि त्वं मा म्रियस्व मुधैव रे ! ॥ ९४० ॥ ततोऽपराजिताऽनन्तवीर्ययोः समुपस्थितम् । चतुरङ्गबलं ताभिर्विद्याभिर्विहितं क्षणात् ॥ ९४१ ॥ क्षणमेकमथो युद्धमुभयोः सैन्ययोरभूत् । विश्वम्य विस्मयोऽधायि विद्याजनितमायया ॥ ९४२ ॥ उपशान्ते ततस्तस्मिन् दमितारिर्महाभुजः ।

१ अग्रसैन्ययोधानाम् ।

प्रत्यनीकभटैर्भग्नं वीक्ष्य सैन्यं निजं हरिः । किञ्चिच्चिन्तावशो जज्ञे रत्नान्युत्पेदिरे तदा ॥ ५४३ ॥
वनमाला गदा खड्गो मणिः शङ्खो धनुस्तथा । प्रत्यर्द्धचक्रिणश्चक्रं सप्तमं तद् भविष्यति ॥ ५४४ ॥
पाञ्चजन्यमथाऽऽदायाऽनन्तवीर्यो महौजसा । दध्मौ ध्वानेन तस्याऽऽशु शत्रुसैन्यं मुमूर्च्छ च ॥ ५४५ ॥
बलमुत्साहवत् जातं निजं विष्णोस्तदाऽखिलम् । सर्वाभिसारतस्तावद् ढुढौके दमितार्यपि ॥ ५४६ ॥
संवर्म्य रथमारुह्य शस्त्राण्याऽऽदाय भूरिशः । उत्तस्थौ केशवश्चापि तथैव ह्यपराजितः ॥ ५४७ ॥
वहन्ति चासृजां नद्यो मौलिपङ्कजभीषणाः । नृत्यन्ति च कबन्धानि रणरङ्गावनौ तदा ॥ ५४८ ॥
दमितारिप्रयुक्तानि शस्त्राण्यपि क्षणात् पुनः । सर्वाण्यनाशयत् शार्ङ्गी नवोदयवशात् तदा ॥ ५४९ ॥
दीपयन्तं दिशश्चक्रं स्मृतमात्रमुपागतम् । मुक्तमेतेन तुम्बेनाऽऽहत्य तस्थौ करे हरेः ॥ ५५० ॥

युध्यते स्म समं ताभ्यां दिव्यास्त्रैस्तिमिरादिभिः ॥५४३॥ तानि शस्त्राणि तस्याऽऽशु प्रतिशस्त्रैर्महाभुजौ । निर्भाग्यस्येप्सितानीव विफलीचक्रतुस्तकौ ॥ ५४४ ॥ जातसर्वास्त्रवैफल्यो दमितारिरमर्षणः । दध्यौ हा धिक् कथमहं शत्रुणाऽनेन निर्जितः ॥ ५४५ ॥ विफलत्वं यथा जग्मुर्दिव्यास्त्राण्यखिलान्यपि । भविता चक्रमप्येवं प्रतिहन्तुं तथैव किम् ॥ ५४६ ॥ किं वा प्रणष्टमेवेदं नाऽऽयात्यद्यापि यत् करे । इति चिन्तापरस्यास्य हस्ते तच्छीघ्रमाययौ ॥ ५४७ ॥ तत् तेन मुक्तमागत्याऽनन्तवीर्यस्य वक्षसि । विशाले लगति स्मोरुनाभिना न तु धारया ॥ ५४८ ॥ क्षणमेकमसौ मूर्छां लेभे घातेन तस्य च । तस्थावस्यैव सविधे भेदिनाऽन्येन भेदितम् ॥ ५४९ ॥ ततोऽसौ तत् समादाय दमितारिमदोऽवदत् । अरे ! त्वं निजचक्रेण मत्मुक्तेन मरिष्यसि ॥ ५५० ॥

तदाऽऽदाय जगौ विष्णुर्भङ्क्ष्व राज्यं म्रियस्व मा। कनकश्रीपितेति त्वं मया मुक्तः प्रयाहि भोः ॥ ५५१ ॥
सोऽवोचन्मयका मुक्तं यथा मोघमभूदिदम्। तथा त्वया विनिर्मुक्तमपि भावीति मे मतिः ॥ ५५२ ॥
अथवा मण्डलाग्रेण तच्चक्रं त्वां च घातकम्। अनेन खण्डयिष्यामीत्युक्त्वाऽधावत सोऽम्बरे ॥ ५५३ ॥
खड्गखेटकभृत् स्वस्याभिमुखं च समापतन्। अनन्तवीर्यमुक्तेन चक्रेणाऽऽशु निपातितः ॥ ५५४ ॥
ततश्चाऽनन्तवीर्यस्योपरि पुष्पभरोऽम्बरात्। विमुक्तो व्यन्तरैरेवं प्रजल्पद्भिः प्रमोदतः ॥ ५५५ ॥
संजातो वासुदेवोऽयं विजयार्द्धपतिर्बली। द्वितीयो बलदेवश्च तच्चिरं जयतामिमौ ॥ ५५६ ॥
विद्याधरभटास्तेऽथाऽनन्तवीर्यं समाश्रिताः। कृतप्रणामास्तेनाऽपि सर्वे संमानिता इमे ॥ ५५७ ॥
ततोऽपराजिताऽनन्तवीर्यौ विद्याधरान्वितौ। रम्यं विमानमारूढौ चेलतुः स्वपुरीं प्रति ॥ ५५८ ॥
कनकाद्रावथ प्राप्तौ प्रोक्तौ विद्याधरैरिमौ। मन्त्यत्र जिनचैत्यानि युज्यन्ते तानि वन्दितुम् ॥ ५५९ ॥
ततोऽवतीर्य्य चैत्यानि वन्दित्वा तानि भक्तितः। तत्रावलोकितस्ताभ्यां मुनिः कीर्तिधराभिधः ॥ ५६० ॥
वर्षोपवासतपसोत्पन्नकेवलचक्षुषः। तस्यर्षेश्चरणावेतौ नेमतुः परया मुदा ॥ ५६१ ॥
उपविश्य धरापीठे हर्षोदञ्चितविग्रहौ। इति शुश्रुवतुश्चास्य विशुद्धां धर्मदेशनाम् ॥ ५६२ ॥

---

१ उत्पन्नकेवलदर्शनः।

तद्यथा—

मिथ्यात्वमविरतिश्च कषाया दुःखदायिनः । प्रमादा दुष्टयोगाश्च पञ्चैते बन्धकारणम् ॥ ५६३ ॥
यद् देवत्वमदेवेषु गुरुत्वमगुरौ तथा । अतत्त्वे तत्त्वबुद्धिश्च तन्मिथ्यात्वं प्रकीर्त्तितम् ॥ ५६४ ॥
यत्र कर्मसु पापेषु न स्तोकमपि वर्जनम् । जानीथोऽविरतिं तां हि सर्वदुःखनिबन्धिनीम् ॥ ५६५ ॥
कोपो मानश्च माया च लोभश्चेति निवेदिताः । मूलं संसारवासस्य कषाया जिनशासने ॥ ५६६ ॥
क्षान्तेर्विपर्ययः कोपो मानोऽमार्दवसंज्ञितः । मायाऽऽर्जवस्य वैरूप्यं लोभो मुक्तेर्विपर्ययः ॥ ५६७ ॥
मदिरा विषयाश्चैव निद्राश्च विकथास्तथा । प्रमादाः कथिताः पञ्च कषायसहिता इमे ॥ ५६८ ॥
काष्ठपिष्टादिनिष्पन्ना कथिता मदिरा द्विधा । शब्दरूपरसगन्धस्पर्शाख्या विषयास्तथा ॥ ५६९ ॥
निद्रा च निद्रानिद्रा च तृतीयो प्रचलाऽभिधा । प्रचलाप्रचला तुर्या स्त्यानर्द्धिः पञ्चमी भवेत् ॥ ५७० ॥
सुखबोधा भवेन्निद्रा दुःखबोधाऽतिनिद्रिका । प्रचला संनिविष्टस्य चतुर्थी गच्छतो भवेत् ॥ ५७१ ॥
दिनचिन्तितकार्यस्य साधनी पञ्चमी पुनः । सा तूदये भवेज्जन्तोरतिसंक्लिष्टकर्मणः ॥ ५७२ ॥
स्त्रीकथा भक्तवार्ता[1] च राजदेशकथा तथा । चतस्रो विकथा एता वर्जनीया विवेकिना ॥ ५७३ ॥
मनोवचनकायाख्यास्त्रयो योगाः प्रकीर्तिताः । अप्रशस्ता भवन्त्येते कर्मबन्धस्य हेतवः ॥ ५७४ ॥

१ भोजनकथा ।

सर्वमेतत् परित्यज्य पापकर्मनिबन्धनम् । विदधीत मतिं धर्मे भव्यो मुक्तिसुखप्रदे ॥ ५७५ ॥
अत्रान्तरे कनकश्रीः सा पप्रच्छेति तं मुनिम् । अभूद्बन्धुवियोगो मे पितुर्मृत्युश्च किं प्रभो ! ॥ ५७६ ॥
ततः कीर्तिधरेणोक्तं तद् भद्रे ! शृणु कारणम् । येन बन्धुवियोगादि तव दुःखमभूदितः ॥ ५७७ ॥
अस्त्यत्र धातकीखण्डे द्वीपे प्राग्भरते पुरम् । नाम्ना शङ्खपुरं भूरिधनधान्यसमाकुलम् ॥ ५७८ ॥
काचिदुच्छिन्नसन्ताना श्रीदत्ता नाम दुर्गता । तत्राऽभूदबला कर्मकरणावाप्तजीवना ॥ ५७९ ॥
पीडिता दुर्गतत्वेन निशम्य मुनिसन्निधौ । चकार साऽन्यदा धर्मचक्रवालाभिधं तपः ॥ ५८० ॥
त्रिरात्रद्वितयं तत्र प्रथमं क्रियते तपः । सप्तत्रिंशच्चतुर्थानि शक्त्याऽऽर्चा गुरुदेवयोः ॥ ५८१ ॥
ददौ तस्यै जनः सर्वः संप्रीतः पारणाहनि । मनोज्ञभक्ष्यभोज्यादि तपो हि महितं जने ॥ ५८२ ॥
तपोगुणरतेत्यस्यै कर्मणोऽन्ते महेभ्यकाः । द्विगुणां त्रिगुणां वृत्तिं ददिरे वसनानि च ॥ ५८३ ॥
जाता सकिञ्चना किञ्चिदन्येद्युर्निजवेश्मनः । कुड्यैकदेशात् पतितात् साऽवाप धनसञ्चयम् ॥ ५८४ ॥
उद्यापनं च तपसः प्रारेभे कर्तुमन्यदा । पूजां जिनेन्द्रबिम्बानां विधिनाऽकारयत ततः ॥ ५८५ ॥
साधर्मिकगणे भक्त्या भोजितेऽस्या गृहाङ्गणे । मासोपवासी सत्साधुः सुव्रतः समुपाययौ ॥ ५८६ ॥
परप्रमोदपूर्णाङ्ग्या तयाऽसौ प्रतिलाभितः । प्राशुकैर्भक्तपानाद्यैर्भावसारं च वन्दितः ॥ ५८७ ॥

धर्मे दृष्टप्रभावा सा पप्रच्छाऽथ तदन्तिके । सोऽवदत् साम्प्रतं धर्मदेशना न हि साम्प्रतम् ॥ ५८८ ॥
यदि ते धर्मशुश्रूषा ततः काल उपाश्रये । आगत्य विधिना भद्रे ! श्रव्यो धर्मः सविस्तरः ॥ ५८९ ॥
इत्युक्त्वा स्वाऽऽश्रयं गत्वा रागादिरहितोऽथ सः । विधिना पारणं चक्रे स्वाध्यायं च ततः क्षणम् ॥ ५९० ॥
पुरलोकस्तदा तत्र श्रीदत्ता च समाययौ । प्रणम्य मुनिवर्यं तं तत्पुरो निषसाद च ॥ ५९१ ॥
धर्मलाभाऽऽशिषं दत्त्वा स मुनिर्धर्मदेशनाम् । विदधे प्रतिबोधार्थं श्रीदत्ताया जनस्य च ॥ ५९२ ॥
तद्यथा—

धर्मादर्थस्तथा कामो धर्मान्मोक्षोऽपि जायते । चतुर्वर्गे ततस्तस्य मुख्यता परिकीर्तिता ॥ ५९३ ॥
अयमर्थोऽपरोऽनर्थ इति निश्चयशालिना । भावनीया अस्थिमज्जा धर्मेणैव विवेकिना ॥ ५९४ ॥
श्रीदत्ता स्माह भगवन्नस्थिमज्जाऽधिवासना । अमूर्तेन हि धर्मेण कथङ्कारं विधीयते ॥ ५९५ ॥
ततोऽसौ सुव्रतः साधुस्तस्याः पौरजनस्य च । दृष्टान्तं कथयामासेप्सितार्थस्य निवेदकम् ॥ ५९६ ॥
आसीदुज्जयिनीपुर्यां जितशत्रुर्महीपतिः । तत्प्रिया धारिणी नाम्नी नरसिंहश्च तत्सुतः ॥ ५९७ ॥
कलाकलापसम्पूर्णः सोऽथ संप्राप्तयौवनः । रम्या द्वात्रिंशतं कन्यास्तातेन परिणायितः ॥ ५९८ ॥
शरत्कालेऽन्यदा तत्र पुरेऽरण्यात् समाययौ[1] । करी कश्चित् मदोन्मत्तः शङ्खश्वेतो नगोन्नतः ॥ ५९९ ॥

१ योग्येत्यर्थः ।

कृतान्तमिव तं क्रुद्धं जनविप्लवकारिणम् । करिणं कथयामास पुमान् कोऽपि महीपतेः ॥ ६०० ॥
तेनाऽथ प्रेषितं सैन्यं दैन्यं भेजे पुरोऽस्य तत् । स्वयमेव महीपालश्चचाल सबलस्ततः ॥ ६०१ ॥
नरसिंहकुमारोऽथ विनिवार्य महीपतिम् । दमनार्थमिभस्याऽस्य प्राचलत्सेनया सह ॥ ६०२ ॥
दीर्घो नव करान् सप्तोन्नतश्च त्रींश्च विस्तृतः । दीर्घदन्तकरस्तुच्छपुच्छो मधुपिङ्गदृक् ॥ ६०३ ॥
चत्वारिंशत्समधिकैर्लक्षणानां चतुःशतैः । अलङ्कृतः करीन्द्रोऽयं कुमारेण निरीक्षितः ॥ ६०४ ॥ (युग्मम्)
अभियानापसरणप्रपातोत्पतनादिभिः । बहुधा खेदयित्वा तं वशमानयति स्म सः ॥ ६०५ ॥
तस्मिन्नैरावणाकारेऽधिरूढं मेनिरे जनाः । कुमारद्भुतश्रीकं साक्षादिव शचीपतिम् ॥ ६०६ ॥
तं गजेन्द्रमथालाने नीत्वा कलयति स्म सः । समुत्तीर्य ततस्तस्य स्वयं नीराजनां व्यधात् ॥ ६०७ ॥
जनकस्य समीपेऽथ स ययौ विनयाश्रितः । विदधे जनकोऽप्यस्य परिरम्भादिगौरवम् ॥ ६०८ ॥
दध्यौ च जरतीभारक्षमोऽयमभवत् सुतः । तदेनं भूपतिं कृत्वा युज्यते मेऽनगारता ॥ ६०९ ॥
ततस्तं मन्त्रिसामन्तपौरलोकस्य संमतम् । स्वपदे स्थापयामास सुमुहूर्ते महीपतिः ॥ ६१० ॥
जयन्धरगुरोः पार्श्वे सोऽथ दीक्षामुपाददे । न्यायेन पालयामास नरसिंहनृपः क्षमाम् ॥ ६११ ॥
अन्येद्युर्दस्युनैकेनाऽतिप्रचण्डेन मायिना । अगृह्यणाऽलक्षितेन मुष्यते स्म पुरी सका ॥ ६१२ ॥
महाजनेन विज्ञप्ते तस्मिन्नर्थे महीभुजा । आरक्षकः समादिष्टश्चौरनिग्रहहेतवे ॥ ६१३ ॥

पुनर्विज्ञापयामासान्येद्युर्भूपं महाजनः । मुषिता निखिला देव ! तस्करेण पुरी तव ॥ ६१४ ॥
सुरूपा यौवनस्था च या काचिदबलाऽभवत् । साऽपि रात्रौ तस्करेण नीयते स्म बलादपि ॥ ६१५ ॥
वासस्थानं ततोऽस्माकं किञ्चिदन्यत् प्रदर्शय । निवसामो वयं तत्र नृनाथ ! निरुपद्रवाः ॥ ६१६ ॥
ततश्चाऽऽरक्षको राज्ञा क्रुद्धेनैवं प्रजल्पितं । रे त्वं गृह्णन् ! विना रक्षामधमर्णोऽसि किं मम ? ॥ ६१७ ॥
महाजनेन भणितं दोषो नास्त्यस्य कश्चन । अमुना सबलेनाऽपि चौरो धर्तुं न शक्यते ॥ ६१८ ॥
तथा मया विधातव्यं यथा भव्यं भविष्यति । इत्युदित्वा नरेन्द्रेण विसृष्टोऽथ महाजनः ॥ ६१९ ॥
वण्ठवेषो नृपो रात्रौ निर्गत्य निजमन्दिरात् । शङ्कास्थानेषु बभ्राम कुर्वंश्चौरगवेषणम् ॥ ६२० ॥
रात्रौ भ्रान्तः पुरीमध्ये बहिः पुर्या दिवा पुनः । तथाऽपि क्वापि नो दृष्टः स दुष्टस्तस्करोऽमुना ॥ ६२१ ॥
सायं मार्गरजःकीर्णस्तरुमूलस्थितो नृपः । कषायवस्त्रमायान्तं ददर्शैकं त्रिदण्डिनम् ॥ ६२२ ॥
स्वसमीपे समायान्तं ननाम स महीपतिः । कुतः स्थानादागतोऽसीत्याऽऽललाप सकोऽपि तम् ॥ ६२३ ॥
राजा प्रोवाच द्रव्यार्थी पथिको भगवन्नहम् । भ्रान्तोऽस्मि बहुदेशेषु विभवं क्वापि नाऽऽप्नुवम् ॥ ६२४ ॥
तदा त्रिदण्डिकस्तूचे ये देशा वीक्षितास्त्वया । तेषां स्वरूपमाख्याहि नामग्राहमहो मम ॥ ६२५ ॥
भूपतिः स्माऽऽह चतुरशीतिसङ्ख्या हि नीवृतः[1] । स्वरूपमपि केषाञ्चिच्छृणु त्वं कथयाम्यहम् ॥ ६२६ ॥

१ देशाः ।

यत्रैकवसना नार्यः प्रायो लोकः प्रियंवदः । केशो नैवोच्यते बालो लाटदेशः स वीक्षितः ॥ ६२७ ॥
सुदीर्घचिहुरा[1] मञ्जरावाः कम्बलचीवराः । यत्र रामाः स सौराष्ट्रनामा राष्ट्रो मयेक्षितः ॥ ६२८ ॥
नालिकेरीकदलीनां फलं शालिश्च भोजने । नागवल्लीदलं यत्र स दृष्टः कुङ्कुणो मया ॥ ६२९ ॥
शुचिवेषाः प्रियाऽऽलापा यत्र लोका विवेकिनः । वैदग्धीरुचिरो देशो मया दृष्टः स गुर्जरः ॥ ६३० ॥
यत्रैकभक्तिकं वस्त्रमस्तं सर्वनृणां करे । भाषाऽतिपरुषा दृष्टः स देशो मारुकाऽऽह्वयः ॥ ६३१ ॥
यवे(त्र)क्षवो व्रीहयश्च जायते च कृषित्रयम् । सर्वसाधारणो लोको मध्यदेशः स वीक्षितः ॥ ६३२ ॥
गोधूमाः प्रचुरा यत्र दुष्प्रापं लवणं तथा । सजलः सकलोऽप्येष मालवोऽपि निरीक्षितः ॥ ६३३ ॥
त्रिदण्डिवेषभृच्चौरः स श्रुत्वैवं व्यचिन्तयत् । अयं हि पथिकोऽवश्यं द्रव्यार्थी सदृशो मम ॥ ६३४ ॥
बभाषे च मम त्वं चेद् भणितं भोः ! करिष्यसि । तन्मनोवाञ्छितं द्रव्यमचिरात् समवाप्स्यसि ॥ ६३५ ॥
नृपः प्रोवाच यो द्रव्यं ददाति हृदयेप्सितम् । न केवलमहं तस्य सर्वोऽप्याऽऽज्ञाकरो जनः ॥ ६३६ ॥
सोऽवदत् सांप्रतं तर्हि वर्तते भोः ! तमस्विनी । पारदारिकदस्यूनां दुष्टानां च प्रियङ्करी ॥ ६३७ ॥
तदुत्तिष्ठ कृपाणं त्वं करे कुरु यथा पुरे । प्रविश्याऽऽनीयते द्रव्यं कुतोऽपीश्वरमन्दिरात् ॥ ६३८ ॥
राजाऽपि चिन्तयामास नूनमेष स तस्करः । तदेनं हन्मि वा पश्याम्यथो यद्विदधात्यसौ ॥ ६३९ ॥

१ चिहुराः केशाः ।

ततः खड्गं चकर्षाऽसौ दध्यौ संवीक्ष्य योग्यपि । ईदृशेनैव खड्गेन नगरीशो विभाव्यते ॥ ६४० ॥
तन्मया मारणीयोऽयमुपायेन हि केनचित् । इति ध्यात्वाऽग्रतो गत्वा वलितोऽसौ झटित्यपि ॥ ६४१ ॥
जागर्त्यद्यापि पूर्लोको विश्रामं कुर्वहे ततः । क्षणमेकमिहाऽऽवां भोरित्यूचे च नृपं प्रति ॥ ६४२ ॥
ततस्तदाऽऽज्ञया राजा चक्रे पल्लवसंस्तरौ । तत्रैकत्र स विश्रान्तो द्वितीये पार्थिवः स्वयम् ॥ ६४३ ॥
मयि जाग्रति नैषोऽपि शयिष्यते कथञ्चन । चिन्तयित्वेति सुष्वाप संस्तरे सोऽथ तस्करः ॥ ६४४ ॥
झटित्यथो समुत्थाय स्वस्थानेऽस्थापयन्नृपः । महत्काष्ठं स्वयं चास्थात् सामिवृक्षस्य कोटरे ॥ ६४५ ॥
त्रिदण्डी खड्गमाकृष्य तस्करोऽपि समुत्थितः । तत्काष्ठमसिघातेन नृपभ्रान्त्या द्विधा व्यधात् ॥ ६४६ ॥
अपमार्ये पटिं स्पर्शादिना विज्ञाय दारु तत् । धूर्तेन वञ्चितोऽस्मीति पश्चात्तापं चकार च ॥ ६४७ ॥
राज्ञा सोऽभाणि रे दुष्ट ! मया त्वं मार्यसेऽधुना । विद्यते पौरुषं चेत् ते ततो मेऽभिमुखो भव ॥ ६४८ ॥
साधु साध्विति चौरोऽपि बलात् निस्त्रिंशपाणिकः । संग्रामाय समं राज्ञाऽभ्यढौकिष्ट स दुष्टधीः ॥ ६४९ ॥
खड्गाखड्गि चिरं कृत्वा दोष्मता पृथिवीभुजा । मर्मप्रदेश आहत्य पातितोऽसौ महीतले ॥ ६५० ॥
विधुरस्तेन घातेन तस्करः स्माह भूपतिम् । सोऽहं दस्युरहो वीर ! येनेयं मुषिता पुरी ॥ ६५१ ॥
अहं तावन् मरिष्यामि शृणु त्वं मम भाषितम् । अस्ति देवकुलस्यास्यपृष्ठे पातालमन्दिरम् ॥ ६५२ ॥
तत्राऽस्ति प्रचुरं द्रव्यं धनदेवी च मे स्वसा । अन्याश्च नायिकाः सन्ति नगर्या या मया हृताः ॥ ६५३ ॥

अमुं मत्खड्गमादाय गच्छ त्वं तत्र सत्वरम् । आकारयेः स्वसारं मे शिलाया विवरेण ताम् ॥ ६५४ ॥
कथयेश्च मृतिं मेऽस्याः खड्गमेनं च दर्शयेः । ततोऽसौ त्वत्प्रवेशाय द्वारमुद्घटयिष्यति ॥ ६५५ ॥
तत् सर्वं भवता ग्राह्यमथवा यद् यस्य तस्य तत् । अर्पयेस्त्वमिति प्रोच्य विपन्नः स मलिम्लुचः ॥ ६५६ ॥
गत्वा तत्र नरेन्द्रोऽपि कृत्वा च तदुदीरितम् । पातालभवने तत्र प्रविष्टोऽथ ददर्श तत् ॥ ६५७ ॥
विश्राम्यतु क्षणं तावत् पर्यङ्केऽत्र भवानिति । भणित्वा भूपतिं द्वारं पिदधे तस्करस्वसा ॥ ६५८ ॥
दृष्ट्वाऽवलोकयन्तीं तां छन्नं छन्नं स्वसंमुखम् । साशङ्कः स्थापयामासोपधानं तत्र भूपतिः ॥ ६५९ ॥
स्वयं तस्थौ च दीपस्य छायायां मतिमानथ । मुक्त्वा यन्त्रशिलां शय्यां बभञ्ज धनदेऽयसौ ॥ ६६० ॥
ततः सा ददती तालां जजल्पैवमहो मया । भव्यं कृतं यतो भ्रातृवधको विनिपातितः ॥ ६६१ ॥
धृत्वा केशेषु तां राजा प्रोचे रण्डे ! भविष्यसि । त्वमेवं कुर्वती हन्त भ्रातुर्मार्गानुयायिनी ॥ ६६२ ॥
जल्पन्तीं दीनवाक्यानि ततोऽसौ प्रविमुच्य ताम् । द्वारमुद्घाट्य च क्षिप्रं निजं धाम समाययौ ॥ ६६३ ॥
मेलयित्वा च पूर्वोक्तं वस्तु यद् यस्य तस्य तत् । सर्वं समर्पयामास भवनं तद्बभञ्ज च ॥ ६६४ ॥
आनीताः स्वस्वगेहेषु ताः स्त्रियस्तेन दस्युना । मोहिता न रतिं तत्र लेभिरे चञ्चलाशयाः ॥ ६६५ ॥
मुहुर्मुहुर्व्रजन्ति स्म दस्युस्थाने ततो जनैः । कथितं पार्थिवस्यैतत् तेनाऽपि भणितो भिषक् ॥ ६६६ ॥
सोऽवददस्युचूर्णेन जाता एवं विधा इमाः । दत्त्वा स्वचूर्णं राजेन्द्र ! स्वभावस्थाः करोम्यहम् ॥ ६६७ ॥

ततो राजाज्ञया तेन ताः कृता गतकार्मणाः । एका तु तदवस्थैवाऽऽचख्ये तदपि भूभुजा ॥ ६६८ ॥
पृष्टोऽथ भिषगाचख्यौ देव ! चूर्णेन योगिनः । कासाश्चित् वासिता कृत्तिः कासाश्चित् मांसशोणिते ॥६६९॥
सर्वास्ताः प्रतिचूर्णेन स्वभावस्थाः कृता मया । अस्यास्तु वासितास्तेनाऽस्थिमज्जा अपि भूपते ! ॥ ६७० ॥
यद्यसौ घर्षयित्वाऽस्य दस्योरस्थीनि पाय्यते । ततः संजायते राजन् ! स्वभावस्थाऽन्यथा न हि ॥ ६७१ ॥
तत् तथा कारयित्वाऽऽशु निर्विकारा कृताऽप्यसौ । नरसिंहनरेन्द्रेण सदा परहितैषिणा ॥ ६७२ ॥
स श्रीजयन्धराचार्योऽन्यदा तत्र समाययौ । यस्य पार्श्वे पिता राज्ञो जितशत्रुरभूद् व्रती ॥ ६७३ ॥
धर्मं तदन्तिके श्रुत्वा नरसिंहनृपोऽपि सः । प्रतिबुद्धः सुतं राज्येऽस्थापयद् गुणसागरम् ॥ ६७४ ॥
ततो दीक्षामुपादाय तपः कृत्वाऽतिदुष्करम् । निष्कर्मा नरसिंहर्षिरवाप शिवसम्पदम् ॥ ६७५ ॥

॥ इति नरसिंहऋषिकथानकम् ॥

ऊचेऽथ सुव्रतो भद्रे ! यथा चूर्णेन योगिनः । तस्यास्तस्या नितम्बिन्या अस्थिमज्जाऽधिवासिता ॥ ६७६ ॥
तथा त्वमपि कल्पद्रुचिन्तामण्यधिकश्रिया । धर्मेण भावयाऽऽत्मानं श्रीदत्ते ! दृष्टप्रत्यये ! ॥ ६७७ ॥
ततोऽसौ शुद्धसम्यक्त्वमूलं धर्ममगारिणाम् । प्रतिपेदे मुनेस्तस्य समीपे सरलाऽऽशया ॥ ६७८ ॥
व्यहार्षीन्मुनिरन्यत्र श्रीदत्ताऽपि गता गृहम् । प्रतिपन्नं निजं धर्मं विधिवत् पर्यपालयत् ॥ ६७९ ॥
चकार साऽन्यदा कर्मपरिणामवशादिमाम् । धर्मस्य विषये श्राद्धी विचिकित्सां मनोगताम् ॥ ६८० ॥

जैनं धर्ममनुं रम्यं यत्नतः प्रकरोम्यहम् । परमस्य फलं भावि न वेति ज्ञायते न हि ॥ ६८१ ॥
विचिकित्सामिमां कृत्वा मृत्वा चाऽऽयुःक्षये सका । सञ्जाता तत्र तदितः स्थानं सङ्कीर्तयाम्यहम् ॥ ६८२ ॥
विजयेऽत्रैव वैताढ्ये नगरे सुरमन्दिरे । राजा कनकपूज्योऽभूद् वायुवेगा च तत्प्रिया ॥ ६८३ ॥
तस्य कीर्तिमतो राज्ञः पुत्रः कीर्तिधरोऽस्म्यहम् । ममाऽप्यनिलवेगाख्या बभूव सहचारिणी ॥ ६८४ ॥
गजकुम्भबलीवर्दस्वप्नत्रितयसूचितः । प्रतिविष्णुर्नृपो जज्ञे दमितारिर्ममाऽऽत्मजः ॥ ६८५ ॥
उद्यौवनो मया बह्वीः स कन्याः परिणायितः । स्थापितश्च निजे राज्ये मया चाऽऽत्ताऽनगारता ॥ ६८६ ॥
दमितारेर्नृपस्याऽस्य मदिरा नाम वल्लभा । तत्कुक्षिसम्भवा पुत्री कनकश्रीर्भवत्यभूत् ॥ ६८७ ॥
यत् त्वया विहिता धर्मविचिकित्सा पुरा भवे । तत् ते बन्धुवियोगादि भद्रे ! दुःखमभूदिदम् ॥ ६८८ ॥
निजं पूर्वभवं श्रुत्वा पितामहमुनेर्मुखात् । जातसंसारवैराग्या दमितारिनृपात्मजा ॥ ६८९ ॥
ऊचेऽपराजितानन्तवीर्यावेवं कृताञ्जलिः । चेद् युवामनुजानीथस्तदद्य प्रव्रजाम्यहम् ॥ ६९० ॥
ताभ्यां सा भणिता चैवं संप्राप्य सुभगापुरीम् । स्वयंप्रभजिनोपान्ते भूयास्त्वं व्रतिनी शुभे ! ॥ ६९१ ॥
तं तपोधनमानम्य विमानमधिरुह्य च । तौ तया सहितौ शीघ्रं संप्राप्तौ नगरीं निजाम् ॥ ६९२ ॥
स्वयंप्रभजिनोऽन्येद्युः सुरासुरनरार्चितः । आगत्य समवासार्षीत् सुभगायां पुरि प्रभुः ॥ ६९३ ॥
गत्वा भक्त्या ववन्दाते तमिमौ बलकेशवौ । धर्मं शुश्रुवतुः सार्द्धं तया च कनकश्रिया ॥ ६९४ ॥

अग्रेऽपि कनकश्रीः सा विषयेभ्यो विरक्तधीः । जैनीं वाचं समाकर्ण्य विशेषेणाऽभवत् तदा ॥ ६९५ ॥
ततश्च हरिसीरिभ्यां कृतनिष्क्रमणोत्सवा । सा प्रवव्राज तेपे चैकावल्यादि तपो महत् ॥ ६९६ ॥
शुक्लध्यानानलप्लुष्टघातिकर्मचतुष्टया । उत्पाद्य केवलज्ञानं संप्राप्ता परमं पदम् ॥ ६९७ ॥
इतोऽपराजितस्याऽऽसीद् विरता नाम गेहिनी । तदङ्गसंभवा पुत्री जाता सुमतिसंज्ञिका ॥ ६९८ ॥
जीवाजीवाऽऽदितत्त्वज्ञा तपःकर्मसमुद्यता । आबाल्यादपि सा जज्ञे कुशला जिनशासने ॥ ६९९ ॥
चतुर्थपारणेऽन्येद्युस्तस्या गेहं समाययौ । शान्तो दान्तः क्षमायुक्तो वरदत्तो महामुनिः ॥ ७०० ॥
परिवेषितया स्थाले स्वस्य पारणहेतवे । प्रत्यलाभि तया साधुः समवन्या मनोज्ञया ॥ ७०१ ॥
मुनेः प्रभावतस्तस्य तत्र तद्भक्तिरञ्जितैः । विहितानि सुरैरासन् पञ्च दिव्यानि तत्क्षणात् ॥ ७०२ ॥
स स्वस्थानमगात् साधुस्तद् दृष्ट्वा बलकेशवौ । चिन्तयामासतुः कन्या धन्येयं कृतपुण्यका ॥ ७०३ ॥
आलोच्य मन्त्रिणा सार्द्धं महानन्देन तौ ततः । कारयामासतुश्चाऽस्याः कृते रम्यं स्वयंवरम् ॥ ७०४ ॥
एत्य दूतसमाहूताः सर्वेऽपि पृथिवीभुजः । आसीना आसीनेषूच्चैः स्वयंवरणमण्डपे ॥ ७०५ ॥
कन्याऽपि कृतशृङ्गारा सखीवृन्दसमन्विता । वरमालाङ्कितकरा यावत् तत्र समागता ॥ ७०६ ॥
तावद् देवतया पूर्वभवस्वस्रा प्रबोधिता । कृतसङ्केतया तत्राऽऽगतया व्रतहेतवे ॥ ७०७ ॥
अनुज्ञाप्य नृपान् सर्वान् स्वयम्वरसमागतान् । सुरारिबलभद्राभ्यामनुज्ञाता विशेषतः ॥ ७०८ ॥

पञ्चकन्याशतैः सार्द्धं प्रतिपद्याऽनगारताम् । समीपे सुव्रताऽऽर्यायाः सा चचार तपोऽमलम् ॥ ७०९ ॥ ( युग्मम् )
क्षपकश्रेणिमारूढा क्रमात् संप्राप्तकेवला । प्रतिबोधितभव्यौघा ययौ साऽपि शिवं सती ॥ ७१० ॥
अशीतिपूर्वलक्षाणि चतुर्भिरधिकान्यथ । आयुः प्रपूर्य सोऽनन्तवीर्यो विष्णुर्व्यपद्यत ॥ ७११ ॥
संवत्सरद्विचत्वारिंशत्सहस्रायुगादिमे । श्वभ्रे नारकिको जज्ञे स निकाचितकर्मभिः ॥ ७१२ ॥
तद्वियोगेऽपरः शोकमस्तोकं विदधे ततः । नीतिधर्मविदग्धेन मन्त्रिणैवमभाणि सः ॥ ७१३ ॥
यदि मोहपिशाचेन छल्यन्ते त्वादृशा अपि । तदा कमपरं धीर ! धीरता संश्रयत्वियम् ॥ ७१४ ॥
इति तद्वचसा किञ्चित् गतशोको बभूव सः । अन्यदा गणभृत् तत्राऽऽययौ नाम्ना यशोधरः ॥ ७१५ ॥
विज्ञायाऽऽगमनं तस्य वन्दनार्थमगादसौ । भक्त्या षोडशभिर्भूपसहस्रैः परिवारितः ॥ ७१६ ॥
नत्वा गणधरेन्द्रं तं निषण्णोऽसौ यथास्थिति । कृताञ्जलिपुटो धर्मदेशनामशृणोदिति ॥ ७१७ ॥
शोकोऽभीष्टवियोगेन जायते दारुणो जने । स सद्भिः परिहर्तव्यस्तत्स्वरूपमिदं यतः ॥ ७१८ ॥
नामान्तरः पिशाचोऽयं पाप्मा रूपान्तरस्तथा । तारुण्यं तमसो ह्येष विपर्यस्य विशेषतः ॥ ७१९ ॥
तस्मादिष्टवियोगाऽऽख्यमहद्रो(हारो)गनिपीडितैः । सुश्रुतोक्तक्रियायुक्तैः कार्यं धर्मौषधं महत् ॥ ७२० ॥

सम्पदोऽत्र करिकर्णचञ्चलाः सङ्गमा प्रियवियोगनिष्फलाः ।
जीवितं मरणदुःखनीरसं मोक्षमक्षयमतोऽर्जयेद् बुधः ॥ ७२१ ॥

तां धर्मदेशनां श्रुत्वा गतशोकोऽपराजितः । जातव्रतपरीणामो नत्वा तं गणनायकम् ॥ ७२२ ॥
गृहमागत्य राज्ये च स्थापयित्वा स्वनन्दनम् । समाददे परिव्रज्यां नृपमण्डलसंयुतः ॥ ७२३ ॥ ( युग्मम् )
बहुकालं तपस्तप्त्वा कृत्वाऽन्तेऽनशनं तथा । विपद्याऽच्युतकल्पेऽसौ संजज्ञे त्रिदशेश्वरः ॥ ७२४ ॥
इतोऽस्य जम्बूद्वीपस्य क्षेत्रे भरतनामनि । वैताढ्यदक्षिणश्रेण्यां पुरे गगनवल्लभे ॥ ७२५ ॥
मेघवाहनविद्याभृद्भूपतेर्मेघमालिनी । बभूव गुणसंयुक्ता गेहिनी रूपशालिनी ॥ ७२६ ॥ ( युग्मम् )
अनन्तवीर्यो नरकादुध्धृत्य समभूत तयोः । मेघनादाभिधः पुत्रो यौवनं समवाप सः ॥ ७२७ ॥
कन्या विवाह्य बह्वीस्तं स्वराज्ये विनिवेश्य च । प्रतिपेदेऽनगारत्वं मेघवाहनभूपतिः ॥ ७२८ ॥
सोऽथ श्रेणिद्वयस्वामी मेघनादो महामतिः । दशोत्तरशतं देशान् स्वसुतेभ्यो ददौ क्रमात् ॥ ७२९ ॥
गत्वा सुराचलेऽन्येद्युः प्रतिमाः शाश्वतार्हताम् । पूजयामास विद्यां च प्रज्ञप्तिं भक्तिपूर्वकम् ॥ ७३० ॥
तदा तत्राऽऽययुः सर्वदेवाः कल्पनिवासिनः । अच्युतेन्द्रेण दृष्टोऽसौ स्नेहात् सम्भाषितस्तथा ॥ ७३१ ॥
स आख्याय पूर्वभवस्वरूपं धर्मसंयुतम् । निजं स्थानं ययौ मेघनादोऽपि खचरेश्वरः ॥ ७३२ ॥
भक्त्याऽमरगुरोः पार्श्वे मुनीन्द्रस्याऽनगारताम् । प्रतिपद्य तपस्तेपे गत्वा नन्दनपर्वते ॥ ७३३ ॥
अश्वग्रीवसुतजीवाऽसुरेणास्य विनिर्मिताः । महोपसर्गास्तत्रैकरात्रिकीप्रतिमाजुषः ॥ ७३४ ॥
प्रतिमां पारयित्वा तां विहृत्य जगतीतले । मृत्वा समाधिना चाऽन्ते सोऽप्यभूदच्युतेश्वरः ॥ ७३५ ॥

षष्ठो भवः सप्तमसंयुतोऽयं कषायविच्छेदकथाविचित्रः ।
प्रोक्तो मया शान्तिजिनेश्वरस्य करोतु कल्याणततिं स सङ्घे ॥ ७३६ ॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते
षष्ठसप्तमभववर्णनो नाम तृतीयः प्रस्तावः ॥ ३ ॥

# चतुर्थः प्रस्तावः

इतः पूर्वविदेहेऽत्र जम्बूद्वीपस्य मध्यगे । विजये मलावत्यभिधे सीतानदीतटे ॥ १ ॥
तीर्थङ्करादिपुंरत्नसश्रया रत्नसञ्चया । अस्ति सिद्धान्तविख्याता शाश्वता नगरी वरा ॥ २ ॥ ( युग्मम् )
दुर्नीतिवागुरुत्वेन प्रजायाः क्षेमकारकः । तत्र क्षेमङ्करो जज्ञे राजा तीर्थङ्करश्च सः ॥ ३ ॥
सतीत्वपादपाऽऽलाला सुविशाला गुणश्रिया । बभूव भूपतेस्तस्य रत्नमालाऽभिधा प्रिया ॥ ४ ॥
अपराजितजीवोऽसौ द्वाविंशत्यर्णवस्थितेः । अच्युतेन्द्रपदाच्च्युत्वा तस्याः कुक्षाववातरत् ॥ ५ ॥
चतुर्दश महास्वप्ना वज्रस्वप्नसमन्विताः । दृष्टा देव्या तया रात्रौ चक्रभृज्जन्मसूचकाः ॥ ६ ॥
कथितास्ते महीभर्तुः प्रभातोत्थितया तया । सुपुत्रजन्मकथनात् तेनाऽप्याऽऽह्लादिता सका ॥ ७ ॥
अजीजनत् सुतं राज्ञी सम्पूर्णसमयेऽथ सा । प्रवर्द्धितश्च भूपालश्चेटीभिः सुतजन्मना ॥ ८ ॥
आसप्तकुलवृत्त्या ताः सुतजन्मनिवेदिकाः । तोषयित्वा महीपालो वर्द्धापनमकारयत् ॥ ९ ॥
दृष्टं पञ्चदशस्वप्ने देव्या वज्रायुधं ततः । वज्रायुधाभिधानं तत्पित्रा पुत्रस्य निर्ममे ॥ १० ॥
अष्टवर्षप्रमाणोऽसौ कलाचार्यस्य सन्निधौ । कारितस्तु कलाभ्यासममावासं गुणसंपदः ॥ ११ ॥
संप्राप्तयौवनो राजकन्यां लक्ष्मीवतीं वराम् । सोऽथोत्सवेन गुरुणा गुरुणा परिणायितः ॥ १२ ॥

अनन्तवीर्यजीवोऽथ प्रच्युत्याच्युतकल्पतः । वज्रायुधकुमारस्य लक्ष्मीवत्याः सुतोऽभवत् ॥ १३ ॥
सहस्रायुधनामाऽसावपि संप्राप्तयौवनः । उपयेमे नृपसुतां सुरूपां कनकश्रियम् ॥ १४ ॥
भुञ्जानस्य तया सार्द्धं भोगांस्तस्याऽपि बन्धुरान् । कालक्रमेण संजज्ञे पुत्रः शतबलाभिधः ॥ १५ ॥
क्षेमङ्करनृपोऽन्येद्युः पुत्रपौत्रसमन्वितः । सिंहासनोपविष्टोऽसौ यावदासीत सभान्तरे ॥ १६ ॥
तत्राऽऽगात्तावदीशानकल्पवास्यमृताशनः । चित्रचूलोऽभिधानेन कश्चिद् मिथ्यात्वमोहितः ॥ १७ ॥ ( युग्मम् )
नास्ति देवो गुरुर्नास्ति नास्ति पुण्यं न पातकम् । न जीवपरलोकौ चेत्यादिनास्तिकवाग्यसौ ॥ १८ ॥
वज्रायुधकुमारेण भणितो भोः ! न युज्यते । तव नास्तिकवादोऽयमत्र हेतुर्भवानपि ॥ १९ ॥
चेत् त्वया सुकृतं किञ्चित् नाभविष्यत् पुरा कृतम् । नालप्स्यथाः सुरत्वं हि ततस्त्वं शर्मणः पदम् ॥ २० ॥
आसीस्त्वं मनुजः पूर्वमिह जातोऽसि निर्जरः । घटते कथमप्येतद् यदि जीवो न विद्यते ॥ २१ ॥
इत्यादिहेतुभिः सोऽथ निर्जरः प्रतिबोधितः । वज्रायुधकुमारेण ततस्तुष्टो जगाद सः ॥ २२ ॥
भोः ! कुमार ! त्वया साधु विदधे यद्भवार्णवे । पतन् संज्ञानहस्तावलम्बनेनोद्धृतोऽस्म्यहम् ॥ २३ ॥
आददे सोऽथ सम्यक्त्वं कुमारस्यैव सन्निधौ । प्रियं किं ते करोमीति कुमारं तं जजल्प च ॥ २४ ॥
निःस्पृहाय ततस्तस्मै दत्त्वाऽऽभरणमुत्तमम् । स देवः प्रययौ स्वर्गमीशानेन्द्रस्य सन्निधौ ॥ २५ ॥

१ देवः ।

वज्रायुधकुमारोऽसावीशानेन्द्रेण पूजितः । अयं जिनेन्द्रो भावीति भक्तिरञ्जितचेतसा ॥ २६ ॥
वसन्तसमयेऽन्येद्युः कुमारं तं स्मरोपमम् । क्षुद्रा सुदर्शना पुष्पाण्यर्पयित्वा व्यजिज्ञपत् ॥ २७ ॥
देव ! लक्ष्मीवती देवी युष्माभिः सह वाञ्छति । कर्तुं सूरनिपाताख्योद्याने सुरभिखेलनम् ॥ २८ ॥
वज्रायुधकुमारोऽथ सप्तराज्ञीशताग्ययया । लक्ष्मीवत्या समं देव्या तदुद्यानमगाद्वरम् ॥ २९ ॥
तत्र नानाविधक्रीडाः कर्तुं प्रववृते जनः । कुमारश्च ययौ वापीं सप्रियः प्रियदर्शनः ॥ ३० ॥
तत्र प्रविश्य पत्नीभिः सानुरागाभिरश्चितः । निरासन्नीकृतव्रीडां जलक्रीडां चकार सः ॥ ३१ ॥
दमितारेरथो जीवो भवं भ्रान्त्वा पुरा भवे । कृत्वा किञ्चिदनुष्ठानं विद्युद्दंष्ट्रः सुरोऽभवत् ॥ ३२ ॥
जलक्रीडापरं वीक्ष्य कुमारं पूर्वमत्सरात् । तद्वधार्थं महाशैलं वाप्या उपरि सोऽमुचत् ॥ ३३ ॥
अधस्तान्नागपाशैश्च तं बबन्ध दुराशयः । वज्रायुधोऽपि चक्रीति महाबलसमन्वितः ॥ ३४ ॥
अधिष्ठितश्च यक्षाणां सहस्रद्वितयेन सः । बिभेद तं नगं नागपाशान् त्रोटयति स्म च ॥ ३५ ॥ ( युग्मम् )
ततो वाप्या विनिर्गत्य सर्वराज्ञीगणाऽऽवृतः । अक्षताङ्गः कुमारोऽसौ चिरं चिक्रीड कानने ॥ ३६ ॥
अत्रान्तरे सहस्राक्षो जिनं नत्वा विदेहतः । वलितः शाश्वतयात्राकृते नन्दीश्वरं प्रति ॥ ३७ ॥
वापीमध्यान्नगं भित्त्वा छित्त्वा पाशांश्च सप्रियम् । निर्गच्छन्तं कुमारं तं पश्यति स्म सविस्मयः ॥ ३८ ॥
ज्ञात्वा ज्ञानोपयोगेन भाविनं तं च तीर्थपम् । ननाम परया भक्त्या तुष्टुवे च कृताञ्जलिः ॥ ३९ ॥

धन्योऽसि त्वं कुमारेन्द्र ! यो भविष्यसि भारते । षोडशः तीर्थकृत् शान्तिनामा शान्तिकरो जने ॥ ४० ॥
इति स्तुत्वा सुनासीरः प्रययौ स्थानमीप्सितम् । कुमारोऽपि गृहं प्राप्तः क्रीडित्वोपवने चिरम् ॥ ४१ ॥
सोऽपि क्षेमङ्करक्ष्मापोऽभ्येत्य लोकान्तिकामरैः । तीर्थं प्रवर्तयेत्युच्चैर्बोधितः स्थितिवेदिभिः ॥ ४२ ॥
ततो वज्रायुधं राज्ये निवेश्य जगतीप्रियम् । दत्त्वा च वार्षिकं दानं स चारित्रमुपाददे ॥ ४३ ॥
विहृत्य जिनलिङ्गेन कञ्चित् कालं विकेवलः । अवाप केवलज्ञानं घातिकर्मक्षये ततः ॥ ४४ ॥
देवैरागत्य समवसरणे रचिते सति । तत्रोपविश्य विधिना चक्रेऽसौ धर्मदेशनाम् ॥ ४५ ॥
कल्पद्रुमचिन्तामणिकामधेन्वधिकप्रभः । कर्तव्यः सर्वदा धर्मो भो भव्याः ! प्रतियत्नतः ॥ ४६ ॥
किन्तु सम्यक् परीक्ष्योऽयं श्रुतशीलकृपादिभिः । आयुर्वेदविनिर्दिष्टक्षीरपाणवचो यथा ॥ ४७ ॥
अविचार्य प्रवृत्तः सन् क्षीरमर्कादिसम्भवम् । पिबेद् येनान्त्रशातादिदोषः संजायते महान् ॥ ४८ ॥
बुद्ध्या विचारयेद् यस्तु वैद्यवाक्यं पिबत्यसौ । बलपुष्टिकरं क्षीरं गवादीनां मनोहरम् ॥ ४९ ॥
धर्मे प्रवृत्तिः कर्तव्येति वाक्येऽप्यविचारिते । करोत्यज्ञानतो जीवः प्रवृत्तिं धनुरादिषु ॥ ५० ॥
धर्मे तस्मादहिंसादिलक्षणे जिनभाषिते । विदधीत प्रवृत्तिं भोः ! शिवं सौख्यं यदीच्छथ ॥ ५१ ॥
अविचार्य धिया कार्यं कुर्वतामिह देहिनाम् । दोषा भवन्त्यमृताम्रनिपान्यादिनरेन्द्रवत् ॥ ५२ ॥

१ इन्द्रः । २ केवलज्ञानरहितः ।

पप्रच्छैवमथो भर्त्री पर्षत् कौतूहलाकुला । अमृताम्रनिरान्यादिनृपाः के भगवन्निमे ? ॥ ५३ ॥
दोषो जज्ञे कथं तेषामविचारितकर्मणाम् । इति भर्त्रमदःप्रोक्तः क्षेमङ्करजिनोऽवदत ॥ ५४ ॥
अस्त्यवन्तिजनपदे प्रसिद्धोज्जयिनी पुरी । नगरी धनदस्येवावतीर्णेह कुतूहलात ॥ ५५ ॥
जितशत्रुर्महीपालः पालयामास तां पुरीम् । यो वैरिवारनारीणां वैधव्यव्रतदो गुरुः ॥ ५६ ॥
तस्याऽग्रमहिषी जज्ञे विजयश्रीः सुलोचना । भुञ्जानस्तामिलां चैव राजा राज्यमपालयत् ॥ ५७ ॥
आस्थानमण्डपाऽऽसीनमन्यदा तं महीपतिम् । सुविज्ञातेङ्गिताकारः प्रतीहारो व्यजिज्ञपत् ॥ ५८ ॥
राजन् ! त्वन्मन्दिरद्वारे त्वद्दर्शनसमुत्सुकाः । चत्वारः पुरुषाः सन्ति मूर्त्या राजसुता इव ॥ ५९ ॥
ततः किं क्रियतां तेषामित्युक्ते स्माऽऽह भूपतिः । शीघ्रमानय तानत्रेत्यानिनाय च सोऽपि तान् ॥ ६० ॥
दत्ताऽऽसनोपविष्टांस्तान् निरीक्ष्य विहितानतीन् । दध्यौ राजाऽनयाऽऽकृत्या नूनमेते सुवंशजाः ॥ ६१ ॥
ताम्बूलादिप्रदानेन संमान्याभाषितास्ततः । कुतो यूयमिहाऽऽयाताः केनार्थेनेति भूभुजा ॥ ६२ ॥
अथोवाचानुजस्तेषामस्ति देवोत्तरापथे । सुवर्णतिलकं नाम विख्यातमवनौ पुरम् ॥ ६३ ॥
तद् वैरिमर्दनो राजा न्यायेन प्रत्यपालयत । तस्य रूपवती नाम्ना चारुरूपवती प्रिया ॥ ६४ ॥
तयोः क्रमेण सञ्जाताश्चत्वारस्तनया वराः । तेषां नामानि चामूनि प्रदत्तानि क्रमेण हि ॥ ६५ ॥
प्रथमो देवराजाख्यो वत्सराजो द्वितीयकः । तृतीयो दुर्लभराजः कीर्त्तिराजश्चतुर्थकः ॥ ६६ ॥

सर्वे शुभकलाऽभ्यासं कारिता जनकेन ते । प्राप्ताश्च यौवनं स्वानुरूपकन्याविवाहिताः ॥ ६७ ॥
अन्येद्युः स महीपालो निवर्तकरुजाऽर्दितः । राज्ये संस्थापयामास देवराजं सुताग्रिमम् ॥ ६८ ॥
दत्त्वा शिक्षामथो तस्मै परलोकमियाय सः । स्वं राज्यं देवराजोऽपि कियत्कालमपालयत् ॥ ६९ ॥
दायादैरन्यदा तच्च संभूय बलवत्तरैः । प्रसह्य स्वीकृतं देशात् निरासे स च सानुजः ॥ ७० ॥
देवराजः स देवाऽयमाययौ युष्मदन्तिके । सेवाविधित्सयाऽस्माभिरनुजैः परिवारितः ॥ ७१ ॥
गुणवृतसमाहूता भवतामन्तिके वयम् । धृत्वा सम्भावनां चित्ते समायाता महीपते ! ॥ ७२ ॥
हृष्टो राजाऽवदद् यूयं मम पार्श्वे यदागताः । तत्साधु विहितं सन्तः सतां शरणमेव यत् ॥ ७३ ॥
प्रतीहारं समादिश्य राज्ञा वृत्तिसमन्वितः । निवासाय ततस्तेषामावासः प्रवरोऽर्पितः ॥ ७४ ॥
दृढभक्तिपराः प्रौढाः सेवकास्ते महीभुजा । प्रसादपूर्वकं स्वाङ्गरक्षकत्वे नियोजिताः ॥ ७५ ॥
रात्रेश्चतुर्षु यामेषु चत्वारोऽपि क्रमेण ते । चक्रिरे नृपते रक्षां शयितस्य धृताऽऽयुधाः ॥ ७६ ॥
ग्रीष्मकालेऽन्यदा देवराजोऽनुज्ञाप्य भूपतिम् । ग्रामे क्वापि समासन्ने ययौ कार्येण केनचित् ॥ ७७ ॥
कार्यं कृत्वा स मध्याह्ने वलितो यावदन्तरे । भीषणा तावदुत्तस्थौ प्रबला वातमण्डली ॥ ७८ ॥
धूलिरुच्छलति स्मोच्चैः प्रचण्डपवनोद्धता । निपेतुः कर्कराः पत्रतृणानि भ्रेमुरम्बरे ॥ ७९ ॥
पपात विरलं चाम्बु गुरुगर्जारवोत्कटम् । विलासस्तथा विद्युद्दृष्टिसन्तापकारिणी ॥ ८० ॥

तद्धूलिजलभीतोऽसावाश्रित्य वटपादपम् । यावत् तस्थौ क्षणं तावदश्रौषीदुपरि स्वरम् ॥ ८१ ॥
किमेतदिति दत्तावधानो भाषाविशारदः । वचः पिशाचयोः सोऽथ शुश्रावेति सुदुःश्रवम् ॥ ८२ ॥
[1]फो फो! जाणसि किंची मो पभणदि णो कहेहि मह किं तं । जंपइ इमोवि अज्जं मलिहीए मो नलिन्दोत्ति॥ ८३ ॥
[2]वीएण तओ पुट्ठो केण निमित्तेण कीइ वेलाए । मो जंपइ सप्पाओ पढमे पहलंमि लत्तीए*॥ ८४ ॥
तत्पिशाचवचः श्रुत्वा पीडितो हृदयेऽधिकम् । स दध्यौ हा कथं कार्यं दैवेनैतद्विनिर्मितम् ॥ ८५ ॥
तथा कथञ्चिदत्रार्थे यतिष्येऽहं यथा विभोः । नैतद्भविष्यतीत्येवं ध्यायन् सोऽगाद् नृपाऽन्तिकम् ॥ ८६ ॥
प्रदोषसमये जाते विसृज्याऽऽस्थानगं जनम् । प्रविश्य वासभवने सुप्तो देव्या समं नृपः ॥ ८७ ॥
देवराजोऽपि तद्वासगृहं सर्वत्र शङ्कितः । उपरिष्टादधस्ताच्च शोधयामास यत्नतः ॥ ८८ ॥
ततः खड्गं समाकृष्य दीपच्छायान्तरस्थितः । उपर्यधो वीक्षमाणो यावदस्थादसौ तदा ॥ ८९ ॥
चन्द्रोदयस्य विवरेणाहिं दृष्ट्वा प्रलम्बितम् । अभीतो जगृहे शीघ्रं करेणैकेन तन्मुखम् ॥ ९० ॥ (युग्मम्)
द्विखण्डं विदधे चास्य देहमन्येन सोऽसिना । एकत्र गोपयामास तत् खण्डद्वयमप्यसौ ॥ ९१ ॥
दृष्ट्वाऽथ पतितान् रक्तबिन्दून् देव्या उरस्थले । सोऽपजह्रे स्वहस्तेन विषसंक्रान्तिभीरुकः ॥ ९२ ॥

१ भो भोः ! जानासि किञ्चित् स प्रभणति नो कथय मम किं तत् । कथयत्ययमपि अद्य मरिष्यति स नरेन्द्र इति ॥
२ द्वितीयेन ततः पृष्टः केन निमित्तेन कस्यां वेलायाम् । स कथयति सर्पात् प्रथमे प्रहरे रात्रेः ॥ * पैशाचिकी भाषा.

अत्राऽन्तरे पश्यति स्म जातनिद्राक्षयो नृपः । करं व्यापारयन्तं तं देव्या वक्षोरुहोपरि ॥ ९३ ॥
ततः कोपपरीताङ्गो दध्यौ किं मारयाम्यमुम् । अथवा सबलो नैष शक्यो मारयितुं मया ॥ ९४ ॥
अमुं केनाऽप्युपायेन मारयिष्यामि निश्चितम् । इति सञ्चिन्त्य तस्थौ स सनिद्राऽवस्थया तया ॥ ९५ ॥
वादितोऽथाऽऽदिमो यामो रजन्या घटिकागृहे । वत्सराजं विमुच्याऽऽत्मस्थाने सोऽगान्निजाऽऽलयम्॥ ९६ ॥
जजल्प भूपतिः कोऽत्र स्थाने प्राहरिकोऽस्ति भोः! । सोऽवदद् वत्सराजोऽहं तिष्ठामि तत्र सेवकः ॥ ९७ ॥
उवाच भूपतिर्भूयः किमेकं प्रेषणं मम । करिष्यसीति सोऽप्योचदादेशं देहि सत्वरम् ॥ ९८ ॥
राजा प्रोवाच यद्येवं भद्राऽऽदेशस्तवैष भोः ! । यद् भ्रातुर्देवराजस्य शीर्षं छित्त्वा समानय ॥ ९९ ॥
तथेत्याज्ञां गृहीत्वाऽसौ निर्ययौ वासमन्दिरात् । दध्यौ च देवराजस्याऽतीव क्रुद्धो महीपतिः ॥ १०० ॥
तनुदारधनद्रोहैः कोपो ह्येवंविधो भवेत् । एकोऽपि सम्भवत्येषां मध्याद् बन्धोर्न मे तनौ ॥ १०१ ॥

यतः—

ये भवन्त्युत्तमा लोके स्वप्रकृत्यैव ते ध्रुवम् । अप्यङ्गीकुर्वते मृत्युं प्रपद्यन्ते न चोत्पथम् ॥ १०२ ॥
भीता जनापवादस्य ये भवन्ति जितेन्द्रियाः । अकार्यं नैव कुर्वन्ति ते महामुनयो यथा ॥ १०३ ॥
कुविज्ञातं कुदृष्टं वा कुश्रुतं कुपरीक्षितम् । नूनमेतद् भावि कार्यं तत्कर्तव्यं मया कथम् ? ॥ १०४ ॥

हुं ज्ञातमथवा कालविलम्बं प्रकरोम्यहम् । अशुभस्य निरासाय स एव कथितो बुधैः ॥ १०५ ॥
चिन्तयित्वेति भूपस्य समागत्य च सन्निधौ । स ऊचेऽद्यापि जागर्ति देवराजो महीपते ! ॥ १०६ ॥
जाग्रन्न शक्यते हन्तुं केनाऽप्येष महाभुजः । तमहं मारयिष्यामि जातनिद्राभरं पुनः ॥ १०७ ॥
एवं भवतु राज्ञेति प्रपन्ने सोऽवदत् पुनः । यूयं विनिद्रा मे काञ्चित् कथां कथयत प्रभो ! ॥ १०८ ॥
अथवा कथ्यमानां तां यूयं शृणुत सोद्यमाः । इयं हि निर्विनोदानां क्षयं याति न यामिनी ॥ १०९ ॥
त्वमेवाऽऽख्याहि भो ! भद्रेत्यादिष्टः पृथिवीभुजा । ततश्चाऽऽख्यातुमारेभे वत्सराजः कथामिमाम् ॥ ११० ॥
बहुलोकसमायुक्तं मुक्तमीतिभयादिभिः । अस्तीह पाटलीपुत्रं युक्तं भूपशतैः पुरम् ॥ १११ ॥
तत्राऽभूत् पृथिवीराजो राजा शत्रुविनाशकृत् । भूमिमण्डलविख्यातो धार्मिको विनयी नयी ॥ ११२ ॥
विनयादिगुणाऽऽधारा सुविचारा मनोहरा । आसीद् रत्या समाकारा सुतारा तस्य वल्लभा ॥ ११३ ॥
उदारो निर्मलाऽऽचारः सुविचारो दयापरः । रत्नसारोऽभिधानेन तत्र श्रेष्ठिवरोऽभवत् ॥ ११४ ॥
अनवद्यक्रियाऽऽसक्ता भक्ता देवगुरुष्वलम् । सलज्जा रज्जुकानाम्नी तस्याऽभूद् गृहिणी वरा ॥ ११५ ॥
धनदत्तस्तयोः पुत्रः पवित्रः शुभकर्मणा । कलाकलापसंयुक्तो विमुक्तो व्यसनाऽऽदिभिः ॥ ११६ ॥
सोऽन्यदा कृतशृङ्गारो मित्रबान्धवसंयुतः । निर्गत्य मन्दिराद् गन्तुं प्रवृत्तोऽर्थेन केनचित् ॥ ११७ ॥

१ विनाशाय ।

तं दृष्ट्वा कश्चिदित्यूचे धन्योऽसौ श्रेष्ठिनन्दनः । य एवंविधसामग्र्या स्वेच्छया विलसत्यहो ॥ ११८ ॥
सोऽन्येन भणितो मुग्ध ! किमस्य त्वं प्रशंससि । यः पित्रोपार्जितां लक्ष्मीं भुङ्क्ते कापुरुषक्रियः ॥ ११९ ॥
प्रशंसायाः स योग्योऽत्र यो द्रव्योपार्जने रतः । त्यागभोगपरो यश्च लोकमध्ये विजृम्भते ॥ १२० ॥
तच्छ्रुत्वा श्रेष्ठिपुत्रोऽसौ चिन्तयामास चेतसि । अमुनेर्ष्यापरेणाऽपि जल्पितं मे हितं वचः ॥ १२१ ॥
ततो देशान्तरे गत्वा समुपार्ज्य धनं घनम् । तत् सर्वं साधयिष्यामि यदनेन विभाषितम् ॥ १२२ ॥
स्ववितर्कोऽथ मित्राणामग्रे तेन निवेदितः । प्रशंसितश्च तैस्तस्याऽभिप्रायः प्रियवादिभिः ॥ १२३ ॥
लगित्वा पादयोः सोऽथ जगाद जनकं मया । अर्थार्जनकृते गम्यं परदेशे त्वदाज्ञया ॥ १२४ ॥
वज्राऽऽहत इव श्रेष्ठी दुःखितस्तमभाषत । अर्थस्ते विद्यते वत्स ! त्यागभोगक्षमो बहुः ॥ १२५ ॥
तेनैव साधनीयानि सर्वकार्याणि निश्चितम् । प्राणसन्देहकरणे गम्यं देशान्तरे न हि ॥ १२६ ॥
पुनरप्यवदत् पुत्रस्तात ! लक्ष्मीस्त्वयाऽर्जिता । जननीव न मे भोक्तुं युज्यते शैशवाद्दते ॥ १२७ ॥
अत्याग्रहपरं ज्ञात्वा विससर्ज पिताऽपि तम् । ततोऽसौ यानसामग्रीमखिलां प्रगुणां व्यधात् ॥ १२८ ॥
ससहायः सपाथेयः समादाय क्रयाणकम् । विदधे सार्थसंयुक्तः स शुभेऽह्नि प्रयाणकम् ॥ १२९ ॥
कृत्वाऽनुगमनं तस्य किञ्चिदध्वानमञ्जसा । श्रेष्ठी निवर्तमानोऽथ शिक्षामेवंविधामदात् ॥ १३० ॥

१ ऋते विना ।

त्यागिना कृपणेनैव निर्घृणेन दयालुना । विदेशगेन भवता भाव्यं शूरतरेण च ॥ १३१ ॥
सर्वथाऽलब्धमध्यस्त्वं भया वत्स ! ममाऽऽज्ञया । शिक्षां दत्त्वेति वलितः श्रेष्ठी स प्रचचाल च ॥ १३२ ॥
आगच्छाऽऽगच्छ भो ! अत्र तिष्ठोत्तिष्ठ व्रज द्रुतम् । इत्यादिवाक्यतुमुलः सार्थमध्ये तदाऽभवत् ॥ १३३ ॥
श्रीपुरं नगरं प्राप्तस्तत्र चोपसरोवरम् । सार्थोऽस्थात् सार्थनाथस्तु रम्ये पटकुटीतटे ॥ १३४ ॥
तदैकः कम्पमानाङ्गो भयात् चञ्चललोचनः । पुरुषः शरणं कश्चिद् धनदत्तमुपाश्रितः ॥ १३५ ॥
तेनैवं भणितः सोऽथ मा भैषीस्त्वं कुतोऽपि भोः ! । महत्यप्याऽपराधेऽपि मत्समीपमुपागतः ॥ १३६ ॥
अत्राऽन्तरे हत हतेति वदन्त उदायुधाः । आरक्षकनरा एत्य सार्थवाहमदोऽवदन् ॥ १३७ ॥
दासोऽयं नरनाथस्य तस्याऽऽभरणमुत्तमम् । गृहीत्वा हारयामास द्यूतकारस्य सन्निधौ ॥ १३८ ॥
तद् विलोक्य महीभर्तुरस्माभिः प्रतिपादितम्[1] । तेनापि वध्य आदिष्टो द्रोहकारीति रोषतः ॥ १३९ ॥
ततो दयाप्रपन्नेन मन्त्रिणेत्युदितो नृपः । गुप्तौ तिष्ठत्वसौ तावद् यावन्नाऽऽभरणागमः ॥ १४० ॥
ततः कारागृहे क्षिप्तो रजन्याः प्रहरेऽन्तिमे । भङ्क्त्वा तदाऽऽरक्षकं च हत्वाऽप्येष विनिर्ययौ ॥ १४१ ॥
विज्ञाय वयमप्यस्य पृष्ठे शीघ्रं प्रधाविताः । एषोऽस्य सरमः प्रत्यासन्ने गूढवनेऽविशत् ॥ १४२ ॥
ततोऽधुना विनिर्गत्य प्रविष्टः शरणे तव । तदयं मुच्यतां राजापथ्यकारी[2] महामते ! ॥ १४३ ॥

१ निवेदितम् । २ राज्ञोऽहितकारी.

उवाच सार्थवाहोऽपि यद्यप्येवं तथाऽपि भोः !। मतां नार्पयितुं युक्तः कदाऽपि शरणाऽऽगतः ॥ १४४ ॥
आरक्षका वदन्ति स्म राजादेशकरा वयम् । सोऽवदत् तर्हि राजानं गत्वा विज्ञपयाम्यहम् ॥ १४५ ॥
एवमस्त्विति तैरुक्ते सोऽगात नृपतिसन्निधौ । तस्य रत्नाऽऽवलीं चैकां महामूल्यामढौकयत् ॥ १४६ ॥
राज्ञा सोऽभाणि सार्थेश ! कुत आगमनं तव । तेनापि कथितस्तस्य वृत्तान्तश्च सविस्तरः ॥ १४७ ॥
इति चोक्तं महाराज ! लब्धमाभरणं यदि । तदमौ मुच्यतां मेऽद्य तस्करः शरणागतः ॥ १४८ ॥
राजा प्रोवाच लब्धेऽपि भूषणे वधमर्हति । यद्यप्येष तथाऽप्यद्य मुक्तः प्रार्थनया तव ॥ १४९ ॥
महाप्रमाद इत्युक्त्वा निजस्थानमगादसौ । आरक्षकनरास्ते च राजदूतेन वारिताः ॥ १५० ॥
भोजनं कारयित्वाऽथ तस्करोऽप्यात्मना सह । इत्युक्तो धनदत्तेन मैवं कार्षीद् भवान् पुनः ॥ १५१ ॥
सोऽवदद् विनिवृत्तोऽस्मि चौर्यात् सार्थेश ! संप्रति । करिष्यामि व्रतं किञ्चिद्धितं स्वस्य प्रियाय ते ॥ १५२ ॥
अन्यच्च साधुना दत्तो भूतनिग्रहकारकः । मन्त्रः सप्रत्ययो मेऽस्ति ग्राह्योऽवश्यममौ त्वया ॥ १५३ ॥
जगृहे प्रार्थनाभङ्गभीरुणा सार्थपेन सः । तस्करोऽपि तमापृच्छ्य ययौ स्वेप्सितहेतवे ॥ १५४ ॥
दत्तं प्रयाणकं शीघ्रं धनदत्तेन चाग्रतः । गच्छन् क्रमेण संप्राप्तोऽटवीं कादम्बरीमसौ ॥ १५५ ॥
एकस्याश्च महानद्या रोधस्यावासितोऽथ सः । तत्र प्रकर्तुमारब्धा सामग्री भोजनादिका ॥ १५६ ॥
अत्रान्तरे च सार्थेशो व्याधमेकं ददर्श सः । कृष्णरक्तेक्षणं चापबाणव्यापृतपाणिकम् ॥ १५७ ॥

सारमेयसमायुक्तं रुदन्तं च सुदुःखितम् । किमेतदिति तं दृष्ट्वा पप्रच्छ च कृताग्रहः ॥ १५८ ॥
सोऽवोचत् शृणु भो भद्र ! मम दुःखस्य कारणम् । इहाऽस्ति पर्वते भिल्लपल्ली गिरिकुडङ्गिका ॥ १५९ ॥
तत्र पल्लीपतिः शूरो विख्यातः सर्वभूभुजाम् । सिंहचण्डोऽभिधानेन प्रचण्डो रणकर्मणि ॥ १६० ॥
तस्य सिंहवती भार्या जीवितादपि वल्लभा । वर्तते प्राणसन्देहे सा भूतग्रहपीडया ॥ १६१ ॥
पल्लिनाथोऽपि नः स्वामी वियोगेऽस्या मरिष्यति । एतेन कारणेनाहं दुःखितो भद्र ! रोदिमि ॥ १६२ ॥
सार्थवाहस्ततोऽवादीदेकवारमहं दृशा । पश्यामि तां यतो मेऽस्ति मन्त्रो भूतग्रहापहः ॥ १६३ ॥
तेनाऽथ पल्लिनाथस्याऽऽचख्ये तत्सोऽपि सत्वरम् । प्रेयसीं तां समादाय तत्समीपमुपाययौ ॥ १६४ ॥
विलोक्य सार्थवाहोऽपि कृत्वा च सकला(लां)कृतिम् । मन्त्रजापविधानेन निर्दोषां विचकार ताम् ॥ १६५ ॥
जीवदानोपकारं तं कृत्वा पल्लीपतिः स तु । विसृष्टः सार्थवाहेन स्वपल्लीं पुनरप्यगात् ॥ १६६ ॥
चलितो धनदत्तोऽपि ततः स्थानात् शनैः शनैः । वेलाकूलगतं प्राप गम्भीराख्यं पुरं वरम् ॥ १६७ ॥
कृत्वा निवेशं सार्थस्य तस्थुपस्तत्र पत्तने । न मनोवाञ्छितो लाभो बभूवाऽस्य कथञ्चन ॥ १६८ ॥
ततोऽसौ चिन्तयामास पाश्चात्यप्रहरे निशः । अर्जयिष्याम्यहं वित्तमागाह्य सरितां पतिम् ॥ १६९ ॥
इति चिन्तापरस्याऽस्य विगता सा विभावरी । ततश्चोत्थाय शय्याया वेलाकूलमियाय सः ॥ १७० ॥
रङ्गत्तरङ्गमालाभिरभ्युत्थान इवोत्थितम् । विधिज्ञः पूजयामास सार्थवाहः सरित्पतिम् ॥ १७१ ॥

महद्गुणगणाऽऽधारं धीवराऽध्यासितं तथा । सार्थं[1] सितपटीस्फीतं संसाराम्बुधितारकम् ॥ १७२ ॥
देवताऽधिष्ठितं जैनवाक्यवन्नैगमान्वितम्[2] । तत्रैकं स्वीकृतं तेन यानं द्रव्येण सुन्दरम् ॥ १७३ ॥
तत्र संक्रामितं भाण्डं योग्यं देशान्तरस्य यत् । आरूढश्च स्वयं श्रेष्ठिसुतो वेलासमागमे ॥ १७४ ॥ (युग्मम्)
ततोऽनुकूलपवनप्रेरितं गुरुरंहसा । ययौ महासमुद्रे तदतीत्य बहुयोजनीम् ॥ १७५ ॥
गृहीताऽऽम्रफलं वक्त्रे समायान्तं विहायसा । ददर्शैकमथान्येद्यु राजकीरमसौ पुरः ॥ १७६ ॥
परिश्रमवशादेनं पतन्तं वारिधेर्जले । धारयित्वाऽऽत्मनः पार्श्वे धीवरैरानिनाय च ॥ १७७ ॥
जलवाताऽऽदिदानेन स्वस्थीभूतः क्षणेन सः । मुक्त्वा चञ्चुपटादाम्रफलं कीरवरोऽवदत् ॥ १७८ ॥
सार्थाधिनाथ ! ते नैवोपकर्तुं शक्यते मया । जीवितव्यप्रदानं यत् त्वया चक्रे ममाऽधुना ॥ १७९ ॥
जीवितं ददता मेऽद्य साधो ! जीवापितौ त्वया । मद्दत्तजीवनाबन्धौ वृद्धौ मत्पितरावपि ॥ १८० ॥
ततः किमुपकुर्वेऽहं तवाऽतुल्योपकारिणः । तथाऽप्येतत् मयाऽऽनीतं फलं चूतस्य गृह्यताम् ॥ १८१ ॥
सार्थवाहोऽब्रवीद् भद्र ! किमेतेन करोम्यहम् । भक्ष त्वमेव यच्छामि भक्ष्यमप्यन्यदात्मनः ॥ १८२ ॥
शुकः प्रोवाच सार्थेश ! सुदुष्प्रापमिदं फलम् । अनेकगुणकारि स्यात् श्रूयतामत्र कारणम् ॥ १८३ ॥
अस्त्यत्र भारते वर्षे विन्ध्यो नाम महीधरः । गजेन्द्रभग्नदेवद्रुगन्धव्याप्तदिगन्तरः ॥ १८४ ॥

---

१ द्रव्यसहितं पक्षेऽर्थसहितम् । २ नैगमा वणिजः पक्षे नयाः ।

प्रसिद्धा विद्यते विन्ध्याऽटवी तस्य समीपगा । तत्रैकस्मिन् द्रुमे कीरमिथुनं मञ्जुभाषकम् ॥ १८५ ॥
तयोः सूनुरहं तौ चानेडमूकौ बभूवतुः । वृद्धत्वाच्च तयोर्भक्ष्यमानीय प्रददाम्यहम् ॥ १८६ ॥
अन्येद्युरटवी प्रान्तवने चूतद्रुमे वरे । यावदस्मि समारूढस्तावत् तत्र ममाययौ ॥ १८७ ॥
मुसाधुयुगलं तच्च कृत्वा दिगवलोकनम् । निःशङ्कं विजनत्वेन वार्तामेवंविधां व्यधात् ॥ १८८ ॥ ( युग्मम् )
अस्ति मध्ये समुद्रस्य पादे शैलस्य कस्यचित् । प्ररूढः सहकाराख्यः सद्वृक्षः सफलः सदा ॥ १८९ ॥
तस्यैकमपि योऽश्नाति फलं तस्य शरीरगः । नश्यन्ति व्याधयः सर्वेऽपमृत्युश्च जरा तथा ॥ १९० ॥
सौभाग्यमतुलं रूपं दीप्तिः कान्तिश्च जायते । मत्फले भक्षिते तस्मिन्नेकवारमपि स्फुटम् ॥ १९१ ॥
तदाकर्ण्य मयाऽचिन्ति सत्यमेतन्न संशयः । यद् जायते मुनीन्द्राणां प्रलयेऽप्यन्यथा न गीः ॥ १९२ ॥
ततस्तत्फलमानीय पितृभ्यां प्रददाम्यहम् । येनैतौ तरुणावस्थौ जायेते च सुचक्षुषौ ॥ १९३ ॥
चिन्तयित्वेति सार्थेश ! गत्वा तत्र मयाद्भुतम् । फलमेतत समानीतं तदिदं भद्र ! गृह्यताम् ॥ १९४ ॥
अहमन्यत् समानीय पित्रोर्दास्यामि तत्फलम् । भवता ग्राह्यमेवेदं ममानुग्रहहेतवे ॥ १९५ ॥
ततश्च सार्थवाहेन विस्मयोत्फुल्लचक्षुषा । जगृहे तत्फलं कीरोऽप्युत्पपात नभस्तले ॥ १९६ ॥
बहूनामुपकाराय देयं कस्यापि भूपतेः । फलमेतदिति ध्यात्वा गोपितं सार्थपेन तत् ॥ १९७ ॥
परकूलमथान्येद्युः प्राप्तं प्रवहणं ततः । दत्त्वाऽऽत्मानं गृहीत्वा चोपायनं श्रेष्ठिनन्दनः ॥ १९८ ॥

ययौ भूमिपतेः पार्श्वे ढौकयित्वाऽथ प्राभृतम् । तत्फलं चार्पयामास परमार्थं निवेद्य तम् ॥ १९९ ॥ ( युग्मम् )
परितुष्टो मुमोचाऽथ शुल्कमस्याऽखिलं नृपः । महाप्रसाद इत्युक्त्वा निजाऽऽवासमगादसौ ॥ २०० ॥
विक्रीयाऽधिकलाभेन भाण्डमादाय चापरम् । वलित्वा च स संप्राप्तो गम्भीराख्यं पुरं ततः ॥ २०१ ॥
ततश्च प्रस्थितः प्राप्तोऽटवीं कादम्बरीं क्रमात् । दत्त्वाऽऽवासं च तत्राऽस्थात् सलोकः सार्थवाहकः ॥ २०२ ॥
सुप्तेषु सार्थलोकेषु रात्रौ भाण्डोत्कराद् बहिः । यामिकेषु च जाग्रत्सु यद् जातं तद् निगद्यते ॥ २०३ ॥
परिगलितायां रात्रौ लोकैः शुश्रुविरे खगाः । म्वग हतहृतेत्युच्चैस्तुमुलेन विमिश्रिताः ॥ २०४ ॥
उत्तालकाहलारावहकानादभयङ्करी । कुतोऽप्यतर्किता तत्र भिल्लधाटी समाययौ ॥ २०५ ॥
सन्नह्य सार्थवाहोऽपि सुभटैः परिवारितः । योद्धुं सह तया वीरो डुढौके भिल्लसेनया ॥ २०६ ॥
पपाठाऽत्रान्तरे बन्दी गुरुदेवार्चने रतः । निर्भयः स्थिरचित्तश्च धनदत्तो जयत्वयम् ॥ २०७ ॥
निशम्य धनदत्तस्याभिधां पूर्वोपकारिणः । साशङ्कः पल्लिनाथोऽथ रणात् पत्तीन् न्यवारयत् ॥ २०८ ॥
ज्ञात्वा नरप्रयोगेण तदुदन्तं यथातथम् । विशस्त्रो मिलनायास्य सन्मुखश्च ययावसौ ॥ २०९ ॥
धनदत्तोऽपि विज्ञाय तमुवाच ससंभ्रमः । अहो कृतज्ञतासार ! स्वागतं स्वागतं तव ॥ २१० ॥
तावन्योऽन्यं समाश्लिष्य निविष्टावुचितासने । ताम्बूलाद्यौचितीं तस्य सार्थनाथश्चकार सः ॥ २११ ॥

१ काहला शृङ्गाकारं वाद्यम् ।

क्षेमवार्तां च पप्रच्छ प्रत्यूचे सोऽपि किं मम । पृच्छ्यते येन विदधे प्रतिपत्तिस्तवेदृशी ॥ २१२ ॥
इत्याद्यात्मानमानिन्द्याऽभ्यर्थयित्वाऽथ सार्थपम् । आनिनाय निजां पत्नीं पल्लिनाथोऽप्युदारधीः ॥ २१३ ॥
स्नानभोजनवस्त्राऽऽद्यैस्तं संमान्य गृहाऽऽगतम् । मुक्ताफलैर्मदन्ताद्यैः पूजयामास चाऽऽदरात् ॥ २१४ ॥
ततस्तं समनुज्ञाप्य गृहीत्वा वस्तु किञ्चन । स सार्थसहितोऽचालीत् प्राप्तश्च नगरं निजम् ॥ २१५ ॥
प्रविश्य धनदत्तोऽथ महाभूत्या निजे पुरे । स्वभुजोपात्तवित्तेन विदधे स्वविचिन्तितम् ॥ २१६ ॥
ददौ दानानि पात्रेषु सच्चक्रे च सुवासिनीः । गुरूंश्च पूजयामासाऽकारयत् कीर्त्तनानि च ॥ २१७ ॥
चकार चाऽन्यदप्याऽऽत्मचिन्तितं विभवेन सः । तत्र स्थविरोऽन्येद्युर्विहरन् कश्चिदाययौ ॥ २१८ ॥
तत्पार्श्वे धर्ममाकर्ण्य स भूत्वा च महाव्रती । प्राप्तः क्रमेण निष्कर्मा निर्वाणपदमव्ययम् ॥ २१९ ॥
इतो नरवरेन्द्रोऽसौ गृहीत्वाऽऽम्रफलं करे । दध्यौ स्वयं प्राशितेन किमेतेन भवेद्गुणः ॥ २२० ॥
बहुशः कारयित्वाऽहममून्याम्रफलानि चेत् । करोमि बहु लोकस्योपकारं तद् महान् गुणः ॥ २२१ ॥
ध्यात्वेत्याज्ञापयामास भूपतिः पुरुषान् निजान् । वप्यमेतत् शुभस्थाने सहकारो भवेद् यथा ॥ २२२ ॥
ततस्तैर्विदधे पुम्भिर्गत्वाऽऽरामे मनोहरे । पाय्यते स्म जलं कृत्वाऽऽलवालं परितोऽस्य हि ॥ २२३ ॥
तैश्च संप्रीणितो राजा पूर्वं तस्याङ्कुरोद्गमे । प्रत्यहं नवनवर्द्धिकथनाच्च ततः परम् ॥ २२४ ॥
क्रमाच्चूतवरे तस्मिन् पुष्पिते फलिते सति । यत्नतो रक्षणीयोऽयमिति राज्ञोदिता नराः ॥ २२५ ॥

एवं तेषु प्रकुर्वत्सु प्रसुप्तेष्वन्यदा निशि । तस्य दैववशेनैकं पतति स्म फलं भुवि ॥ २२६ ॥
तत् प्रभाते महीभर्तुः प्रहृष्टैस्तैः समर्पितम् । देयं पात्राय कस्मैचिदिदं चिन्तयति स्म सः ॥ २२७ ॥
आकार्य देवशर्माणं चतुर्वेदधरं द्विजम् । अमृताम्रफलं तस्मै भक्तिपूर्वं ददौ नृपः ॥ २२८ ॥
सोऽप्यात्ममन्दिरे गत्वा पूजयित्वा च देवताम् । तत्फलं भक्षयामास पञ्चत्वं समवाप च ॥ २२९ ॥
केनचित् कथितं राज्ञो देवशर्माऽद्य स द्विजः । अमृताम्रफले तस्मिन् भक्षिते संस्थितः[1] प्रभो ! ॥ २३० ॥
सखेदोऽथ नृपः स्माहाहो ! अकार्यं कृतं मया । पातकं ब्रह्महत्याया धर्मभ्रान्त्या यदर्जितम् ॥ २३१ ॥
नूनमेष विषस्याम्रः प्रपञ्चं प्रविधाय तम् । मम प्राणविनाशाय केनचित् प्रेषितोऽरिणा ॥ २३२ ॥
ततोऽयं स्वयमुप्तोऽपि पालितोऽपि प्रयत्नतः । बहुप्राणिक्षयङ्कारी छिद्यतां विषपादपः ॥ २३३ ॥
राजादिष्टनरास्तीक्ष्णकुठारैस्तरुपुङ्गवम् । मूलादपि तमाच्छिद्य पातयन्ति स्म भूतले ॥ २३४ ॥
निर्विण्णा जीवितस्याथ कुष्टरोगार्दिता जनाः । धावितास्तत् समाकर्ण्य विषाऽऽम्रतरुच्छेदनम् ॥ २३५ ॥
कश्चित् पक्वमपक्वं वाऽर्द्धपक्वं चाऽपरस्तथा । तत्फलं भक्षयामास सुखमृत्युविधित्सया ॥ २३६ ॥
तस्मिन् चूतफले चाऽत्ते गतरोगव्यथाः क्षणात् । अभूवंस्ते जनाः सर्वेऽप्यमृताशनसन्निभाः ॥ २३७ ॥
दृष्ट्वा तान् विस्मयाऽऽपन्नः चिन्तयामास भूपतिः । अहो ! असदृशफलं फलमस्य तरोः कथम् ? ॥ २३८ ॥

१ मृतः ।

गतरोगाः कामतुल्याः संजाता यद्यमी जनाः । यजनादिक्रियासक्तः तद्विप्रोऽयं कथं मृतः ? ॥ २३९ ॥
व्याहार्याऽऽरक्षकान् तस्यापृच्छत् तच्चूतजं फलम् । त्रोटितं किं नु युष्माभिर्गृहीतं वा धरागतम् ॥ २४० ॥
तैश्च सत्ये समाख्याते राजोचेऽहिविषेण तत् । लिप्तं भावि बहिस्तेन विपन्नोऽयं द्विजोत्तमः ॥ २४१ ॥
अकार्यमविचार्येदं धिगहो विहितं मया । यदसौ छेदितो रोषात् तरुराजः सुधामयः ॥ २४२ ॥
अकारि सहसा कार्यं यथा तेनापरीक्षितम् । तथाऽन्येन न कर्तव्यं महीनाथ ! सुखैषिणा ॥ २४३ ॥
द्वितीयप्रहरेऽतीते निशाया वासमन्दिरात् । निर्ययौ वत्सराजोऽत्र प्रविष्टस्तस्य चानुजः ॥ २४४ ॥
राजा दध्यावहो रम्यं कथयित्वा कथानकम् । मम कार्यमकृत्वैव वत्सराजो गृहं ययौ ॥ २४५ ॥
अथ दुर्लभराजोऽपि तथैव भणितोऽमुना । प्रत्युत्पन्नमतिः सोऽपि गत्वाऽऽगत्याऽवदद् नृपम् ॥ २४६ ॥
नृनाथ ! जागृतोऽद्यापि तौ द्वावपि ममाऽग्रजौ । तत् प्रतीक्ष्य क्षणं कार्यं साधयिष्यामि तावकम् ॥ २४७ ॥
राजन् ! कथानकं किञ्चित् कथ्यतां शृणुताऽथवा । इत्युक्ते तेन सोऽवादीत् त्वमप्याख्याहि तन्मम ॥ २४८ ॥
उवाच दुर्लभोऽत्रैव भरते पर्वतोपरि । अस्ति राजपुरं नाम पुरमद्भुतसङ्कुलम् ॥ २४९ ॥
तत्राऽभूद् भूपतिः शत्रुदमनोऽन्वर्थसंज्ञितः । रत्नमालाऽभिधा तस्य महिषी प्रेमसंयुता ॥ २५० ॥
अन्यदा तस्य भूपस्याऽऽस्थानाऽऽसीनस्य सन्निधौ । आजगाम बटुः कश्चित् प्रतीहारनिवेदितः ॥ २५१ ॥
व्यग्रत्वाद् भूपतेः सोऽथोपविश्याऽस्थाद् नृपस्तथा । विसृज्याऽऽस्थानमभ्यङ्गस्नाने चक्रे श्रमापहे ॥ २५२ ॥

देवपूजनवेलायामथ तस्य महीपतेः । सपुष्पबटुरागत्य प्रसूनानि समार्पयत् ॥ २५३ ॥
कस्त्वं भद्रेति राज्ञोक्तः सोऽवोचद् यज्ञदत्तसूः । अहं शुभङ्करो नाम्ना विप्रोऽरिष्टपुरस्थितिः ॥ २५४ ॥
निजगेहाद् विनिर्गत्य देशदर्शनकौतुकी । भ्रमन्निह समायातः समीपे ते महीपते ! ॥ २५५ ॥
प्रकृत्या विनयी सोऽथ स्वसमीपे महीभुजा । स्थापितस्तत्र निश्चिन्तस्तस्थौ चापि शुभङ्करः ॥ २५६ ॥
शूरस्त्यागी प्रियाभाषी कृतज्ञो दृढसौहृदः । विज्ञानी स्वामिभक्तश्च स सर्वगुणमन्दिरम् ॥ २५७ ॥
अतिगौरवितो राज्ञा शुद्धान्तादिष्ववारितः । सर्वत्रास्खलितो जज्ञे गुणवान् स शुभङ्करः ॥ २५८ ॥
अन्यदा नगरस्याऽस्य समीपे हरिराययौ । व्याध एकः समागत्य तमाचख्यौ महीपतिम् ॥ २५९ ॥
सेनया चतुरङ्गिण्या संयुक्तः सशुभङ्करः । वधार्थं मृगराजस्य निर्ययौ नगराद् नृपः ॥ २६० ॥
ज्ञात्वाऽथ व्याधवचनात् तं सिंहं वनमध्यगम् । वनार्वाक् स्थापयामास सैनिकानखिलान्नृपः ॥ २६१ ॥
स्वयं तु स्वयशःकाङ्क्षी समारूढः स कुञ्जरम् । ययौ केशरिणः पार्श्वे शुभङ्करपुरस्सरः ॥ २६२ ॥
विदारिताऽऽस्यः सिंहोऽपि रक्ताक्षः सज्जितक्रमः । उत्पपाताऽम्बरतले प्रपित्सुः पार्थिवोपरि ॥ २६३ ॥
मा भूद् मत्स्वामिनः पीडेति ध्यायन् स शुभङ्करः । निपतन्तं जघानैनं मुखे क्षिप्त्वाऽङ्कुशं शितम् ॥ २६४ ॥
राजोचे न त्वया साधु विदधे भोः शुभङ्कर ! । मया जिघांसितः सिंहो यत् चापल्याद् हतोऽन्तरा ॥ २६५ ॥
न केवलं मृगारातिस्त्वयाऽयं निहतोऽद्य रे ! । मध्ये सर्वनरेन्द्राणां मद्यशोऽपि हतं खलु ॥ २६६ ॥

सोऽवदद् भवतां देव ! देहापायाभिशङ्कया । मया व्यापादितोऽयं हि न तु स्वोत्कर्षकाम्यया ॥ २६७ ॥
अन्यच्च निहतः स्वामिप्रभावेणैव केशरी । अन्यथा मृणिमात्रेण कथमस्य निकृन्तनम् ? ॥ २६८ ॥
कथयिष्यामि सैन्यानामग्रे यत् स्वामिना स्वयम् । हर्यक्षो निहतस्तत् त्वं माऽप्रसादं व्यधा मयि ॥ २६९ ॥
इदं कार्यं तु प्रत्यक्षमावयोरेव तत् प्रभो ! । चतुष्कर्णस्य मन्त्रस्य नास्य भेदो भविष्यति ॥ २७० ॥
राजा प्रोवाच यद्येष मन्त्रो भावी स्फुटः सखे ! । तदा मे भविता लोकेऽलीकवादिकलङ्कता ॥ २७१ ॥
शुभङ्करोऽब्रवीत् किं न श्रुतमेतत् त्वया प्रभो ! । साधोः समर्पितं गुह्यं सह तेनैव दह्यते ॥ २७२ ॥
ततस्तौ सिंहमादाय सैन्यमध्ये समागतौ । इति व्यावर्णयामास तदग्रे च बटुः प्रभुम् ॥ २७३ ॥
त्यजन्ति यस्य नादेन मदं मत्तद्विपा अपि । लीलया निहतः सोऽद्य स्वामिना नखरायुधः ॥ २७४ ॥
ततश्च पत्तिसामन्ताः संजातामितसंमदाः । शिरांसि धूनयन्तस्ते प्राशंसन् पौरुषं प्रभोः ॥ २७५ ॥
भर्तुर्जयमहे तेऽथ संप्राप्ता नगरान्तरे । सुवर्द्धापनकं चक्रुस्तूर्यनादपुरस्सरम् ॥ २७६ ॥
महोत्सवमये तस्मिन्नतीते लघुवासरे । विसृज्याऽऽस्थानलोकं राट् ययौ देव्या निकेतनम् ॥ २७७ ॥
पप्रच्छ देवी नाथाद्य पुरे किं कश्चिदुत्सवः ? । वर्तते तूर्यनिर्घोषो यदयं श्रूयते महान् ॥ २७८ ॥
राजा प्रोवाच हे देवि ! यन्मया निहतो हरिः । ततोऽयं विहितो भूपैर्वर्द्धापनमहोत्सवः ॥ २७९ ॥

१ अपायो नाशः । २ सिंहः । ३ सिंहः ।

प्रत्यूचे सा पुनर्नाथोत्तमवंशोद्भवस्य ते । किमिदं युज्यते कर्तुं स्वस्याऽलीकप्रशंसनम् ? ॥ २८० ॥
शुभङ्करेण बटुना सिंहो व्यापादितो यतः । संवर्द्धनमहोऽकारि यशोलुब्धेन तु त्वया ॥ २८१ ॥
तच्छ्रुत्वा भूपतिः क्रुद्धो दध्यौ तस्य दुरात्मनः । पश्य दुश्चरितं कीदृक् स्फुटं मिथ्याऽभिभाषिणः ॥ २८२ ॥
गुह्यं कस्यापि नाऽऽख्येयमित्युदित्वा पुरो मम । तदेव कथयामास देव्याः स्वोत्कर्षलम्पटः ॥ २८३ ॥
प्रच्छन्नं मारणीयोऽयं तन्मया मर्मभाषकः । इति ध्यात्वाऽऽरक्षकस्य शिक्षां तां प्रददौ नृपः ॥ २८४ ॥
तेन व्यापादितः सोऽथ निजगेहमुपागतः । सिद्धं तद् देव ! ते कार्यं भर्तुश्चेति निवेदितम् ॥ २८५ ॥
अन्यस्मिंश्च दिने देवी पप्रच्छ जगतीपतिम् । शुभङ्करबटुर्नाथ ! दृश्यते नाऽधुना कथम् ? ॥ २८६ ॥
बभाण भूपतिस्तस्य ग्राह्यं नामापि न प्रिये ! । सोचेऽपराद्धं किं तेन तत्र देव ! महात्मना ? ॥ २८७ ॥
ततस्तद्विषये राज्ञा स्वाभिप्राये निवेदिते । तयोक्तं न ममाऽऽख्यातं तेनेदं सिंहमारणम् ॥ २८८ ॥
किं तु दृष्टं मयैवेदं प्रासादे सप्तभूमिके । आरूढया कौतुकेन नाऽस्य दोषोऽत्र कश्चन ॥ २८९ ॥
देव ! सत्यं समाख्याहि किं जीवति मृतोऽथ सः ? । इति पृष्टे तया भूपो भूयः सानुशयोऽवदत् ॥ २९० ॥
अकार्यं हा ! मया देवि ! कृतमद्य महत्तरम् । यदसौ घातितः सर्वगुणरत्ननिधिर्बटुः ॥ २९१ ॥
नास्ति मत्सदृशः कश्चिदविमर्शितकारकः । कृतोपकारं निघ्नंस्तं कृतघ्नोऽप्यहमेव हि ॥ २९२ ॥
अभाणि देव्या रभसकृतानामिह कर्मणाम् । विपाको हृदये दाही स्यादाजन्मापि शल्यवत् ॥ २९३ ॥

राजन् ! रात्रेर्विनोदाय कथितेयं कथा मया । कथायाः परमार्थस्तु श्लोकयुग्मेन कथ्यते ॥ २९४ ॥
तद्यथा—
भक्तः सर्वगुणैर्युक्तो हतो येन शुभङ्करः । कृतघ्नो भूतले शत्रुदमनात् कोऽपि नापरः ॥ २९५ ॥
अकारणोत्पन्नरोषे हिंसा निर्दोषमानुषे । कार्या नरेण नो शत्रुदमनेन कृता यथा ॥ २९६ ॥
आख्याय सत्कथामेतां गते यामे तृतीयके । रात्रेर्दुर्लभराजोऽपि समुत्थाय ययौ गृहम् ॥ २९७ ॥
तत्राऽऽसीनमथो कीर्तिराजं भूपतिरब्रवीत् । कार्यमेकं मामकीनं त्वया सेत्स्यति किं न वा ? ॥ २९८ ॥
सोऽप्यवोचत् न चेत् कार्यं साधयिष्यामि ते विभो ! । तत् त्वामाराधयिष्यामि चलस्नेहमहं कथम् ? ॥ २९९ ॥
भ्रातुः शीर्षमानयेति भणितः सोऽथ भूभुजा । गतप्रत्यागतं कृत्वा किञ्चिदूचे सुधीरिदम् ॥ ३०० ॥
शर्वर्याः प्रान्तकालत्वात् सर्वे जाग्रति यामिकाः । पुनः प्रस्तावे देवायं तवाऽऽदेशो विधास्यते ॥ ३०१ ॥
सोऽपि प्रस्तावनां कृत्वाऽनुज्ञातः पृथिवीभुजा । कथां कथयति स्मैनां तस्य मन्युविनाशिनीम् ॥ ३०२ ॥
इहाभूद् भरतक्षेत्रे महापुरपुरे नृपः । शत्रुञ्जयाभिधस्तस्य प्रियङ्गुरिति वल्लभा ॥ ३०३ ॥
अन्यदा नैगमः कश्चिद् जात्यमेकं तुरङ्गमम् । भूपतेर्ढौकयामास तस्य देशान्तरागतः ॥ ३०४ ॥
पृष्ठे पर्याणमाधाय तत्राऽऽरुह्य महीपतिः । वाहयामास वाहं तं गतिविज्ञानहेतवे ॥ ३०५ ॥
वेगात् प्रधाविते तस्मिन् तस्य शिक्षाविपर्ययम् । सामन्तानां समाचख्यौ स वणिग् पूर्वविस्मृतम् ॥ ३०६ ॥

ततोऽश्वेषु समारुह्याऽऽदाय भक्ष्यजलाऽऽदिकम् । गच्छन्तं तं महीपालमनुजग्मुः पदातयः ॥ ३०७ ॥
अथ वेगं निरुन्धाने पार्थिवे स तुरङ्गमः । तं जग्राह विशेषेण वैपरीत्येन शिक्षितः ॥ ३०८ ॥
आकुञ्चनेन वल्गायाः पाणिभ्यां रक्तमक्षरत् । भूपतिः सोऽथ निर्विण्णो मुमोच शिथिलामिमाम् ॥ ३०९ ॥
अश्वोऽप्यस्यां विमुक्तायां पदमात्रं चचाल न । ततो दुःशिक्षित इति तं विवेद महीपतिः ॥ ३१० ॥
तस्मादुत्तीर्य पर्याणमथाऽपनयति स्म सः । जातत्रोटस्तुरङ्गोऽपि पतित्वा भूतले मृतः ॥ ३११ ॥
भीमाटव्यामथो तस्यां दवदग्धवनान्तरे । तृष्णाक्षुधापीडिताङ्गो बभ्राम पृथिवीपतिः ॥ ३१२ ॥
वटमेकमथाऽद्राक्षीद् दीर्घशाखं सुविस्तृतम् । श्रान्तो गत्वा शनैस्तस्य च्छायायां निषसाद सः ॥ ३१३ ॥
पार्श्वावलोकनं तेन कुर्वाणेन निरीक्षिताः । तरोस्तस्यैव शाखायाः पतन्तो जलबिन्दवः ॥ ३१४ ॥
ततः सोऽचिन्तयदिदं वर्षाकालोद्भवं जलम् । शाखारन्ध्रे स्थितमियत्कालं पतति संप्रति ॥ ३१५ ॥
पलाशभाजनं सोऽधः कृत्वा तत्र न्यवेशयत् । क्रमेण पूरितं तत् चेपश्चीलकलुषाम्बुना ॥ ३१६ ॥
तद् गृहीत्वा नृपः पातुं यावदभ्युद्यतोऽभवत् । तावत् तत्राऽप्ययौ पक्षी कश्चिदुत्तीर्य पादपात् ॥ ३१७ ॥
तद् नीरभाजनं तेन पातितं नृपतेः करात् । तथैव तरुशाखायां गत्वा तस्थौ च स स्वयम् ॥ ३१८ ॥
विलक्षो भूपतिर्भूयः कृत्वा पूर्णं जलस्य तत् । यावत् पास्यति तेनैवाऽपाति तावद् विहायसा ॥ ३१९ ॥
ततः प्रकुपितो भूपो दध्यौ भूयः समेष्यति । यद्येष पक्षी दुष्टाऽऽत्मा मारणीयस्तदा मया ॥ ३२० ॥

चिन्तयित्वेति जगृहे कशामेकेन पाणिना । जलार्थं स्थापयामास द्वितीयेन पुनः पुटीम् ॥ ३२१ ॥
दध्यौ च विहगः सोऽथ कुपितोऽयं महीपतिः । चेत पुटं पातयिष्यामि तद् मामेष हनिष्यति ॥ ३२२ ॥
नो चेद् विषे निपीतेऽस्मिन् मरिष्यन्त्येष निश्चितम् । ततो वरं विपन्नोऽहं न त्वसौ लोकपालकः ॥ ३२३ ॥
एवं विचिन्त्य भूयोऽपि पातितं तेन तत्करात् । कशाऽऽघातेन राज्ञा च पक्षीन्द्रोऽपि निपातितः ॥ ३२४ ॥
पुनः प्रहृष्टचित्तेनास्थापि राज्ञा पुटोऽम्भसे । क्रमेण नीरकं तत् तु पतति स्माग्रतोऽग्रतः ॥ ३२५ ॥
ततश्चोत्थाय भूपालः किमेतदिति शङ्कितः । यावद् व्यलोकयत् तावद् ददर्शाजगरं तरौ ॥ ३२६ ॥
सोऽथ दध्यौ मुखादस्य सुप्तस्य गरलं किल । पतदेतदपास्यं चेदमरिष्यं तदा ध्रुवम् ॥ ३२७ ॥
पश्याहो ! पक्षिणाऽनेन चेष्टामाबिभ्रता सताम् । मम प्राणकृते प्राणास्तृणवत्कल्पिता निजाः ॥ ३२८ ॥
हा ! वृथा कोपयुक्तेन परमार्थमजानता । मया निष्ठुरचित्तेन हतः पक्षिवरोऽसता ॥ ३२९ ॥
इति खेदपरस्यास्य समेयुस्तत्र सैनिकाः । दृष्ट्वा स्वस्वामिनं ते च सद्यो सुमुदिरेतराम् ॥ ३३० ॥
नीराऽऽहाराऽऽदिभिः स्वस्थीभूतोऽथ जगतीपतिः । पक्षिणं तं समादाय निजं पुरमथाऽऽययौ ॥ ३३१ ॥
विधाय पक्षिदेहस्य दाहं चन्दनदारुभिः । दत्त्वा जलाञ्जलिं तस्य स आगाद् निजमन्दिरम् ॥ ३३२ ॥
पृष्टो दुःखाऽऽसनस्थोऽसौ तत्र सामन्तमन्त्रिभिः । प्रेतकार्यं पक्षिणोऽपि कृतं स्वस्येव किं विभो ! ॥ ३३३ ॥
ततो राजा निजां वार्तां यथावृत्तां न्यवेदयत् । पक्षिघातानुशयं च विसस्मार कदापि न ॥ ३३४ ॥

यदेवमनुतापः स्यादविचारितकारिणाम् । ततो विचार्य कर्तव्यं कार्यं सुन्दरबुद्धिभिः ॥ ३३५ ॥
कथयित्वा कथामेतां कीर्तिराजे स्थिते सति । प्रातस्तूर्यरवो जज्ञे पेठुर्मङ्गलपाठकाः ॥ ३३६ ॥
अथोत्थाय ययौ कीर्तिराजो राजाऽप्यचिन्तयत् । हन्तैकचित्ताः सर्वेऽमी तद् न जातं ममेप्सितम् ॥ ३३७ ॥
दास्यानीतजलेनाथ प्रक्षाल्य वदनं नृपः । कृत्वा सुवेषमास्थानमण्डपे निषसाद सः ॥ ३३८ ॥
अत्राऽन्तरेऽलकन्यस्तकरद्वन्द्वः प्रसन्नवाक् । एत्य विज्ञापयामास देवराजो महीपतिम् ॥ ३३९ ॥
यदि देवोऽनुजानाति किञ्चिद् विज्ञापयामि तत् । क्रुद्धेनाऽप्यमुना सोऽथाऽनुज्ञातः संज्ञया भ्रुवोः ॥ ३४० ॥
ततः पिशाचवचनश्रवणाऽऽदिकथाऽखिला । राज्ञोऽग्रे कथिता तेन भयविस्मयकारिणी ॥ ३४१ ॥
आकृष्य वासभवनाद् द्विखण्डं तदहेर्वपुः । अदर्शि चास्य विद्वेषविषनाशनभेषजम् ॥ ३४२ ॥
राजाऽथ चिन्तयामास हा ! अनेन महात्मना । मम जीवितरक्षाऽर्थं विहितं पश्य कीदृशम् ॥ ३४३ ॥
असमीक्षितकारित्वात् परोपकृतिकार्यपि । विघातयितुमारब्धो मयाऽसावपि पाप्मना ॥ ३४४ ॥
एतैश्च वत्सराजाद्यैः कथाऽऽख्यानविचक्षणैः । तत् साधु विदधे यद् न निहतोऽयं नरोत्तमः ॥ ३४५ ॥
ऊचे च स्वपरीवारमेते सर्वगुणाऽऽस्पदम् । कुलदेवतया दत्ता अपुत्रस्य सुता मम ॥ ३४६ ॥
ततोऽहं स्थापयिष्यामि देवराजं महीपतिम् । कुमारं वत्सराजं च ग्रहीष्यामि व्रतं स्वयम् ॥ ३४७ ॥
एवमाकर्ण्य लोकेन प्रोक्तं देव ! प्रतीक्ष्यताम् । कालं कञ्चित् ततश्चान्त्यकाले कुर्या इदं खलु ॥ ३४८ ॥

राजा प्रोवाच मद्वंश्या अदृष्टपलिता नृपाः । प्रतिपद्य व्रतं कृत्वा तपश्च सुगतिं गताः ॥ ३४९ ॥
अहं पुनरियत्कालं स्थितो राजधरं विना । इदानीं तु करिष्यामि निश्चयेन समीहितम् ॥ ३५० ॥
ततो दैवज्ञनिर्दिष्टे सुमुहूर्ते महीपतिः । देवराजं नृपं चक्रे कुमारं चापरं तथा ॥ ३५१ ॥
अन्येद्युर्नन्दनवनोद्याने तत्र समाययौ । बहुशिष्यपरीवारः श्रीदत्त इति साधुराट् ॥ ३५२ ॥
उद्यानपालकेनास्य समाख्याते समागमे । ववन्दे परया भक्त्या गत्वा तं जगतीपतिः ॥ ३५३ ॥
उपविश्य यथास्थानं श्रुत्वा सद्धर्मदेशनाम् । संप्राप्यावसरं सोऽथ पप्रच्छैवं कृताञ्जलिः ॥ ३५४ ॥
प्रभो ! प्रोक्तः पिशाचाभ्यां यदि नाम ममात्ययः । देवयोन्युदितस्यापि तस्याभूदत्ययः कथम् ? ॥ ३५५ ॥
सूरिराख्यदहो राजन् ! गौरी नाम गृहास्तव । बभूव रूपसम्पन्ना वैश्यवंशसमुद्भवा ॥ ३५६ ॥
कर्मदोषेण केनापि जाता दौर्भाग्यदूषिता । संजज्ञे सा तवाऽनिष्टा दृष्टा दृष्ट्याऽप्यसौख्यदा ॥ ३५७ ॥
ततः सा जातवैराग्या गत्वा पितृगृहे निजे । अज्ञानतपसाऽऽत्मानं शोषयित्वा व्यपद्यत ॥ ३५८ ॥
संप्राप्तव्यन्तरीभावा स्मृत्वा तं पूर्वमत्सरम् । अधिष्ठायौरगं कायं प्रविष्टा सा तवाऽऽलये ॥ ३५९ ॥
कृत्वा पिशाचयो रूपं कुलदेवतया तव । ज्ञापितो देवराजोऽर्थममुं त्वत्क्षेमहेतवे ॥ ३६० ॥
अचिन्त्या मानुषैर्दैवी शक्तिर्यद्यपि वर्त्तते । तथापि पौरुषं तेजः क्षमं तल्लङ्घने यतः ॥ ३६१ ॥

१ षष्ठीद्विवचनमिदम् ।

महाविषधरः क्रूरो व्यन्तर्याऽधिष्ठितोऽपि सः। बलिना देवराजेन लीलयैव हतस्ततः ॥ ३६२ ॥ (युग्मम्)
सूरिं विज्ञपयामास पुनर्नत्वाऽथ भूपतिः। भाग्योदयेन मुक्तोऽहममुष्माद् व्यसनात् प्रभो ! ॥ ३६३ ॥
भाग्यमेव ततः कर्तुं युज्यतेऽतः परं मम। तद्देहि दत्तसुव्रज्यां प्रव्रज्यां शुभदेहिनाम् ॥ ३६४ ॥
ततश्च सूरिणा सूत्रविधानेनैष दीक्षितः। महाव्रतानि चारोप्य शिक्षितः सङ्घसाक्षिकम् ॥ ३६५ ॥
स चास्य कथयामास प्रतिबोधविधायकम्। ज्ञाताधर्मकथाऽऽदिष्टं रम्यं भावि कथानकम् ॥ ३६६ ॥
प्रसिद्धे मगधे देशे पुरे राजगृहाभिधे। धनो नामाऽभवत् श्रेष्ठी लक्ष्म्या वैश्रवणोपमः ॥ ३६७ ॥
धारिणी गृहिणी तस्य सुतास्तत्कुक्षिसम्भवाः। पुरुषार्था इवाभूवन् चत्वारस्तस्य विश्रुताः ॥ ३६८ ॥
प्रथमो धनपालाख्यो धनदेवो द्वितीयकः। धनगोपस्तृतीयश्च चतुर्थो धनरक्षितः ॥ ३६९ ॥
उज्झिका भोगिका चैव धन्निका रोहिणी तथा। तेषां भार्याः क्रमेणैताः चतस्रो जज्ञिरे शुभाः ॥ ३७० ॥
सुप्तजागरितोऽन्येद्युः स श्रेष्ठी धनसंज्ञकः। यामिन्याः पश्चिमे यामे चिन्तां चक्रे निजौकसः ॥ ३७१ ॥
यथा सर्वगुणाऽऽधारैः पुरुषैर्वर्तते गृहम्। गृहिण्याऽपि तथैवेदं विदुः शास्त्रविदो यतः ॥ ३७२ ॥
भुक्ते गृहजने भुक्ते सुप्ते स्वपिति तत्र या। जागर्ति प्रथमं चास्मात् सा गृहश्रीर्न गेहिनी ॥ ३७३ ॥
ततः परीक्ष्य जानामि स्वामिनी का भविष्यति ?। मध्याद् वधूनामेतासां गृहस्याधिगुणा मम ॥ ३७४ ॥

१ दत्ता सुव्रज्या सद्गतिर्यया ताम्।

विचिन्त्येति ममादेशं स्नुषाणां प्रददौ प्रगे । मारा रमवती मवां प्रगुणीक्रियतामिति ॥ ३७५ ॥
तासां वधूनां स्वजनवर्गं सर्वं निमन्त्र्य तम् । पौरं चान्यजनं श्रेष्ठी भोजयामाम गौरवात् ॥ ३७६ ॥
संमान्य वस्त्रताम्बूलाऽऽदिभिः सर्वमथो जनम् । दत्त्वा शालिकणान् पञ्च प्रोचे ज्येष्ठवधूमिति ॥ ३७७ ॥
प्रत्यक्षं सर्वलोकानां मया ह्येते तवार्पिताः । मार्गयामि यदैवाहमर्पणीयास्तदा स्नुषे ! ॥ ३७८ ॥
विसृष्टा तेन गत्वाऽथ विजने सेत्यचिन्तयत् । नूनं वृद्धस्वभावेन जातो मे श्वशुरो विधीः ॥ ३७९ ॥
एवं मेलापकं कृत्वा दत्ता येन कणा इमे । अन्यान् तस्यार्पयिष्यामीति ध्यात्वा त्यजति स्म तान् ॥ ३८० ॥
एवं दत्ता द्वितीयस्याः साऽपि दध्यौ तथैव हि । परं सा वितुषान् कृत्वा कणान् भक्षयति स्म तान् ॥ ३८१ ॥
तृतीयया तु संचिन्त्य कार्यमेतद् गुरोरिति । रक्षितास्ते सुवस्त्रेण बध्ध्वा भूषणमध्यगाः ॥ ३८२ ॥
[1]ते कणास्तुर्यवध्वा च स्वबन्धूनां समर्पिताः । उप्ता वर्षासु संरूढा जाताश्चातिफलान्विताः ॥ ३८३ ॥
प्रथमे वत्सरे तेषामभूत् प्रस्थोऽपरेषु च । संजाता बहवः कुम्भास्ततः कुम्भशतान्यपि ॥ ३८४ ॥
अभूवन् पञ्चमे वर्षे शालिपल्यशतान्यथ । पुनर्निमन्त्र्य लोकं तं श्रेष्ठी भोजयति स्म च ॥ ३८५ ॥
मार्गयामास तान् पञ्च कणान् ज्येष्ठवधूं ततः । पल्यान्तरात् समानीयाऽर्पयामास सकाऽपि तान् ॥ ३८६ ॥
देवगुर्वादिशपथपूर्वं भणितया तया । तस्य सत्यं समाख्यातं रुष्टः श्रेष्ठी ततोऽवदत् ॥ ३८७ ॥

१ चतुर्थी मनसि ध्यात्वा लात्वा पञ्च कणानि च । गत्वा च पैतृके गेहे वापयति स्म निश्चला ॥ ८३ इति ॥ पाठान्तरम्.

मया समर्पिताः शालिकणा यद्यनयोज्झिताः । रजोभस्मगोमयाऽऽदि त्याज्यं तदनया गृहात् ॥ ३८८ ॥
पृष्ट्वा शालिकणादन्तं द्वितीयाऽपि स्नुषाऽमुना । कृता रसवतीमुख्यगृहव्यापारकारिणी[१] ॥ ३८९ ॥
चक्रे वधूस्तृतीया च शालिरक्षाविधायिनी । मणिमौक्तिकहेमादिभाण्डागाराधिकारिणी ॥ ३९० ॥
शालिवृद्धिकरी साऽथ चतुर्थी रोहिणी वधूः । गृहस्य स्वामिनी चक्रे श्रेष्ठिना दीर्घदर्शिना ॥ ३९१ ॥
यथायुक्तविधानेन कृत्वैवं सुस्थितं गृहम् । निश्चितं स व्यधात् श्रेष्ठी धर्मव्यापारमन्वहम् ॥ ३९२ ॥
श्रेष्ठितुल्यो गुरुर्ज्ञेयः स्नुषातुल्याश्च दीक्षिताः । योज्या महाव्रतानां च पञ्चशालिकणोपमाः ॥ ३९३ ॥
सङ्घश्चतुर्विधोऽप्यत्र कुलमेलनसन्निभः । महाव्रतप्रदानं च तत्समक्षं विधीयते ॥ ३९४ ॥
ऊज्झिकातुल्य आख्यातः शिष्यः त्यक्तव्रतो हि यः । इह लोके परलोके स भवेद् दुःखभाजनम् ॥ ३९५ ॥
लिङ्गमात्रोपजीवी यः स द्वितीयस्नुषासमः । व्रतपालनसंप्रीतो भाण्डागारवधूपमः ॥ ३९६ ॥
धर्मदेशनयाऽन्येषामप्यारोप्य व्रतानि यः । सूरिस्तद्वृद्धिकारी स्यात् स रोहिण्या समो मतः ॥ ३९७ ॥
श्री वीरजिनकालेऽदो भविष्यति कथानकम् । ततो व्रतानि पञ्चाऽत्राऽधुना चत्वारि तानि तु ॥ ३९८ ॥
एवं शिक्षाकथां श्रुत्वा जितशत्रुर्महामुनिः । प्रव्रज्यां पालयामास श्रीदत्तगुरुसन्निधौ ॥ ३९९ ॥
तद् भो भव्या ! अहिंसाऽऽदिलक्षणं धर्ममुत्तमम् । परीक्ष्य विदधीतेति क्षेमङ्करजिनोऽब्रवीत् ॥ ४०० ॥

१ द्वितीयां भक्षितां ज्ञात्वा पाकस्थाने नियोजिता । तृतीयां रक्षितां ज्ञात्वा भाण्डागाराधिकारिणीम् ॥ ८९ ॥

दुःखपर्वतदम्भोलिर्भाजनं सुखसन्ततेः । अहिंसा व्रतमुख्या सा स्वर्गमोक्षविधायिनी ॥ ४०१ ॥
सत्येन लभ्यते कीर्तिः सत्यं विश्वासकारणम् । सत्यं जयति लोकेऽस्मिन् द्वितीयं धर्मलक्षणम् ॥ ४०२ ॥
अदत्तत्यागतो नृणां राजदण्डो न जायते । विशिष्टजनसंयोगो निर्भयत्वं च जायते ॥ ४०३ ॥
ब्रह्मव्रतेन तेजस्वी सुभगश्च भवेद् नरः । नपुंसकत्वं तिर्यक्त्वं कदापि न लभेत च ॥ ४०४ ॥
परिग्रहेण वित्तस्य चित्तं सन्तोषपूरितम् । मुक्तिश्च क्रमयोगेन जायते भव्यदेहिनः ॥ ४०५ ॥
एतेषु नियतं धर्मलक्षणेष्वपि पञ्चसु । यूयं महानुभावा भोः ! प्रयत्नं कुरुतान्वहम् ॥ ४०६ ॥
श्रुत्वेमां देशनां जीवाः प्रतिबुद्धा अनेकशः । प्रावर्ति च जिनेन्द्रेण तीर्थं गणधराऽऽदिकम् ॥ ४०७ ॥
वज्रायुधोऽपि धर्मस्य प्रतिपत्तिं विधाय ताम् । प्रणम्य भगवन्तं च प्रविवेश पुरीं निजाम् ॥ ४०८ ॥
अन्यदाऽऽयुधशालायां चक्ररत्नं सुनिर्मलम् । समुत्पन्नं तस्य यक्षसहस्राऽधिष्ठितं वरम् ॥ ४०९ ॥
विधायाऽष्टदिनान्यस्य पूजां तदनुगाम्यसौ । षट्खण्डं साधयामास विजयं मङ्गलावतीम् ॥ ४१० ॥
ततो निजपुरीं प्राप्तः चक्रवर्तिश्रियाऽश्रितः । सहस्रायुधपुत्रं स यौवराज्ये न्यवेशयत् ॥ ४११ ॥
अन्यदाऽऽस्थानमासीनः स वज्रायुधचक्रभृत् । अभूद् यावद् नृपामात्यपदातिपरिवारितः ॥ ४१२ ॥
तावद् नभस्तलात् कश्चिदेत्य विद्याधरो युवा । भयात् प्रकम्पमानाङ्गः शरणं तं समाश्रितः ॥ ४१३ ॥
तस्य पृष्ठे वरा काचित् खड्गखेटकधारिणी । आगाद् विद्याधरी विद्याधरश्चैको गदाधरः ॥ ४१४ ॥

खेचरेणाऽमुना चक्री भणितः सपरिच्छदः । पापकर्मकृतेरस्याऽपराधः श्रूयतामिति ॥ ४१५ ॥
अहं सुकच्छविजये वैताढ्ये शुक्रपूःस्थितेः । पुत्रः पवनवेगाख्यः शुक्रदत्तस्य भूपतेः ॥ ४१६ ॥
सुकान्ता नाम मे कान्ता तस्याः कुक्षिमुद्भवा । एषा शान्तिमती नाम्ना मम पुत्री शुभाकृतिः ॥ ४१७ ॥
अथान्येद्युर्मया दत्तामिमां प्रज्ञप्तिसंज्ञिकाम् । ययौ साधयितुं विद्यां मणिसागरपर्वते ॥ ४१८ ॥
विद्यां प्रसाधयन्तीयं हृताऽनेन दुरात्मना । अत्रान्तरे च विद्या सा सिद्धाऽस्या भक्तिरञ्जिता ॥ ४१९ ॥
तस्या बिभ्यद् विवेशाऽयं युष्माकं शरणे प्रभो ! । तत्राऽपश्यन् नगे पुत्रीमत्राऽऽगामहमप्यरम् ॥ ४२० ॥
तदेनं मत्सुताशीलविध्वंसनरुचिं बलात् । मुञ्च राजन् ! यथैकेन गदाऽऽघातेन हन्म्यहम् ॥ ४२१ ॥
अवधिज्ञानतो ज्ञात्वा तत्पूर्वभवचेष्टितम् । प्रतिबोधकृते तेषां चक्री वज्रायुधोऽब्रवीत् ॥ ४२२ ॥
कारणेन हृता येन पुत्री पवनवेग ! ते । खेचरेणाऽमुना तन् त्वं शृण्वहं कथयामि भोः ॥ ४२३ ॥
विज्ञाय ज्ञानमाहात्म्यं सर्वे सभ्या निजप्रभोः । श्रोतुमभ्युद्यता जाताः स चाऽऽचख्याविदं स्फुटम् ॥ ४२४ ॥
द्वीपस्याऽस्यैव विशदैरवतक्षेत्रमध्यगे । पुरे विन्ध्यपुरे राजा विन्ध्यदत्ताऽभिधोऽभवत् ॥ ४२५ ॥
पत्नी सुदक्षिणा तस्य जज्ञे तत्कुक्षिसम्भवः । तनयो नलिनकेतुरिति ख्यातो महीतले ॥ ४२६ ॥
तत्रैव नगरे धर्ममित्रसार्थपतेः सुतः । श्रीदत्ताकुक्षिसम्भूतो दत्तो नामाऽभवद् धनी ॥ ४२७ ॥
रूपेण रतिसङ्काशा कान्त्या चन्द्रप्रियासमा । जज्ञे प्रभङ्करनाम्नी दत्तस्य गृहिणी वरा ॥ ४२८ ॥

सुशृङ्गाररसमये वसन्तसमयेऽन्यदा । गत्वोद्यानवने दत्तः क्रीडति स्म तया सह ॥ ४२९ ॥
नृनाथतनयः सोऽथ दृष्ट्वा तां सुन्दराऽऽकृतिम् । बाणैर्विषमबाणस्य पञ्चभिस्ताडितो हृदि ॥ ४३० ॥
स्वामित्वयौवनैश्वर्यगर्वितः सोऽथ तां ततः । अपजह्रेऽगणयित्वा कलङ्कं कुलशीलयोः ॥ ४३१ ॥
भुङ्क्ते स्म विषयसुखं कुमारः स तया सह । दत्तश्च तद्वियोगार्तो ययावुद्यानमन्यदा ॥ ४३२ ॥
सुसाधुः सुमनास्तत्र तत्कालोत्पन्नकेवलः । दृष्टोऽमुना वन्द्यमानो देवदानवमानवैः ॥ ४३३ ॥
तेनाऽपि वन्दितो भावसारं मुनिवरश्च सः । बोधयामास दत्तं तं धर्मदेशनयाऽर्यया ॥ ४३४ ॥
कृत्वा दानाऽऽदिकं धर्मं मृत्वा चाऽऽयुःक्षयेऽथ सः । सुकच्छविजये वैताढ्याद्रौ विद्याधरेशितुः ॥ ४३५ ॥
महेन्द्रविक्रमस्याऽभूत् तनयोऽजितसेनकः । तस्याऽपि कमलानाम्नी बभूव सहचारिणी ॥ ४३६ ॥ ( युग्मम् )
इतः स नलिनकेतू राज्यं संप्राप्य पैतृकम् । प्रभङ्कराऽऽख्यया सार्द्धं गृहवासमपालयत् ॥ ४३७ ॥
अधिरूढोऽन्यदा भूमिं स्वप्रासादस्य सप्तमीम् । ददर्शाञ्चितं मेघैः पञ्चवर्णैर्नभस्तलम् ॥ ४३८ ॥
तस्य पश्यत एवेदं मेघवृन्दं सकौतुकम् । प्रचण्डपवनक्षिप्तं खण्डखण्डं ययौ क्षणात् ॥ ४३९ ॥
तद्दृष्ट्वा जातसंवेगः स दध्यौ द्रविणाऽऽदिकम् । सांसारिकमहो ! वस्तु सर्वमेतदिवाऽध्रुवम् ॥ ४४० ॥
मयाऽज्ञानविमूढेन हरता हा ! परस्त्रियम् । क्षणिकस्य सुखस्याऽर्थे बहुपापमुपार्जितम् ॥ ४४१ ॥

१ श्रेष्ठया ।

तत् प्रपद्य परिव्रज्यां तपोनियमवारिणा । पापकर्मविलिप्तं स्वं निर्मलं प्रकरोम्यहम् ॥ ४४२ ॥
निवेश्य तनयं राज्ये सोऽथ त्यक्त्वा नृपश्रियम् । उपाददे परिव्रज्यां क्षेमङ्करजिनाऽन्तिके ॥ ४४३ ॥
विशुद्धां पालयित्वा तां समासाद्य च केवलम् । धौतकर्ममलः सिद्धिमासदत् स शुद्धधीः ॥ ४४४ ॥
साऽपि प्रभङ्करानाम्नी तपः चान्द्रायणाऽभिधम् । गणिन्याः सुव्रताख्यायाः समीपे विदधेऽमलम् ॥ ४४५ ॥
सेयं मृत्वा समुत्पन्ना पुत्री शान्तिमती तव । अस्याः प्राग्भवभर्ताऽयं खेचरोऽजितसेनकः ॥ ४४६ ॥
दृष्टा विद्यां साधयन्ती समुत्क्षिप्ता विहायसा । इयं पूर्वभवस्नेहमोहितेनाऽमुना ध्रुवम् ॥ ४४७ ॥
ततः पवनवेग ! त्वं त्वं च शान्तिमति ! स्फुटम् । मुञ्च कोपं धृताटोपमस्योपरि निरर्थकम् ॥ ४४८ ॥
इति वज्रायुधवाक्यं श्रुत्वा तौ सा च बालिका । अन्योन्यं क्षमयन्ति स्माऽपराधं प्रीतचेतसः ॥ ४४९ ॥
पुनश्चक्री समाचख्यौ समुद्दिश्य सभाजनम् । अतीतमुक्तमेतेषां भविष्यत कथयामि भोः ! ॥ ४५० ॥
अमूभ्यां सहिता शान्तिमती दीक्षां ग्रहीष्यति । रत्नावलीतपः कृत्वाऽनशनेन विपत्स्यते ॥ ४५१ ॥
साधिकसागरद्वंद्वस्थितिर्वृषभवाहनः । स्वामी समस्तदेवानामीशानेन्द्रो भविष्यति ॥ ४५२ ॥
वायुगत्यजितसेननाम्नोः साध्वोस्तदा पुनः । घातिकर्मेन्धने दग्धे भावि केवलमुत्तमम् ॥ ४५३ ॥
केवलज्ञानमहिमां तयोः कृत्वाऽर्चनं तथा । स्वस्याऽङ्गस्य निजं स्थानमीशानेन्द्रो गमिष्यति ॥ ४५४ ॥
इन्द्रोऽपि हि ततश्च्युत्वा कुले लब्ध्वा मनुष्यताम् । दीक्षां चाऽऽदाय निष्कर्मा निर्वाणं समवाप्स्यति ॥४५५॥

तच्छ्रुत्वा विस्मिताः सर्वेऽप्येवमूचुः सभासदः । अहो अस्मत् प्रभोर्ज्ञानं कालत्रितयदीपकम् ॥ ४५६ ॥
साऽथ शान्तिमती वायुवेगश्चाऽजितसेनकः । त्रयोऽपि चक्रिणं नत्वा जग्मुस्ते स्थानमात्मनः ॥ ४५७ ॥
कुमारस्य सहस्रायुधस्याथ तनयोऽभवत् । जवनाकुक्षिसञ्जातो नाम्ना कनकशक्तिकः ॥ ४५८ ॥
आद्या कनकमाला वसन्तसेना तथाऽपरा । उभे बभूवतुस्तस्य प्रिये तुल्यकुलोद्भवे ॥ ४५९ ॥
क्रीडां कर्तुमथाऽन्येद्युः स गतो गहनं वनम् । ददर्शैकं प्रकुर्वन्तं पतनोत्पतने नरम् ॥ ४६० ॥
पृष्टोऽत्र कारणं तेन सोऽवदत् खेचरोऽस्म्यहम् । वैताढ्यवासी सर्वत्राऽस्खलितो विचरामि भोः! ॥ ४६१ ॥
इहाऽऽगत्य चिरं स्थित्वा गच्छतः पुनरेव मे । पदमेकं खगामिन्या विद्याया भद्र! विस्मृतम् ॥ ४६२ ॥
ततो गन्तुमनीशोऽहं करोम्येवंविधक्रियाम् । कुमारः स्माऽऽह भोः! तावत् पठ विद्यां ममाऽग्रतः ॥ ४६३ ॥
विद्याधरोऽप्यपाठीत् तां सत्पुमानिति तत्पुरः । पदानुसारिलब्ध्या कुमारः पूरयति स्म तत् ॥ ४६४ ॥
खेचरोऽथ कुमाराय स्वविद्यां प्रददौ मुदा । तेन प्रणीतविधिना साधयामास सोऽपि ताम् ॥ ४६५ ॥
स्वस्थानमगमत् खेटः कुमारोऽपि यदृच्छया । विद्याबलेन बभ्राम प्रियाद्वययुतो भुवि ॥ ४६६ ॥
हिमवन्तमथाऽन्येद्युः शिलोच्चयमगादसौ । ददर्श चात्र विपुलमतिं विद्याधरं मुनिम् ॥ ४६७ ॥
प्रणम्य चरणौ तस्य कुमारः प्रेयसीयुतः । निषसाद यथास्थानं मुनिश्चक्रे च देशनाम् ॥ ४६८ ॥
कुलं रूपं कलाऽभ्यासो विद्या लक्ष्मीर्वराङ्गना । ऐश्वर्यं सुप्रभुत्वं च धर्मेणैव प्रजायते ॥ ४६९ ॥

धर्मश्चतुर्विधो येन भवेत् पूर्वभवे कृतः । स मनोवाञ्छितं सर्वं लभते पुण्यसारवत् ॥ ४७० ॥
पुण्यसारः प्रभो ! कोऽसाविति पृष्टोऽमुना मुनिः । तत्कथां कथयामास प्रतिबोधविधायिनीम् ॥ ४७१ ॥
अस्त्यत्र भरतक्षेत्रे जीवाजीवाऽऽदितत्त्ववत् । नानाऽद्भुतमनोहारि पुरं गोपालयाऽऽह्वयम् ॥ ४७२ ॥
पुरन्दरसमश्रीको धर्मार्थी राजमानितः । महाजनस्य मुख्योऽभूत् तत्र श्रेष्ठी पुरन्दरः ॥ ४७३ ॥
भक्त्या पत्यौ तथा देवे गुरौ गुणगणाऽन्विता । बभूव गेहिनी तस्य पुण्यश्रीरिति विश्रुता ॥ ४७४ ॥
पतिवाल्लभ्यसौभाग्यभाग्यवन्त्याः शुभाऽऽकृतेः । अप्येकं दूषणं तस्याः शरीरे निरपत्यता ॥ ४७५ ॥
वाञ्छन्नपि सुतं श्रेष्ठी भणितः स्वजनैरपि । तस्याः स्नेहपरो नारीं नान्यां परिणिनाय सः ॥ ४७६ ॥
यक्षं भट्टारिकां वा नो काश्चिदर्थयति स्म सः । नैवोपयाचितं चक्रे तयोः स्थिरसुदर्शनः ॥ ४७७ ॥
सन्तानार्थी स चाऽन्येद्युरभ्यर्च्य कुलदेवताम् । उवाच सप्रियोऽप्येवं प्रणिपातमसंस्पृशन् ॥ ४७८ ॥
अस्माकं पूर्वजैः सर्वैः पूजिता त्वं मयाऽपि च । इहलोकसुखस्याऽर्थे सर्वदा कुलदेवते ! ॥ ४७९ ॥
अविद्यमानसन्ताने परलोकं गते मयि । पूजां बन्धुजनस्येव करिष्यति तवाऽपि कः ? ॥ ४८० ॥
तत्त्वं ज्ञात्वाऽवधिज्ञानेनाऽऽख्याहि मम सन्ततिम् । भविष्यत्यथवा नेति नान्यत्त्वामर्थयाम्यहम् ॥ ४८१ ॥
देवतोवाच श्रेष्ठिन् ! ते भविष्यति सुतः खलु । धर्मे प्रवर्तमानस्य गते काले कियत्यपि ॥ ४८२ ॥
ततः प्रहृष्टचित्तोऽसौ गृहवासमपालयत । कुलक्रमाऽऽगतं धर्मं विशेषेण चकार च ॥ ४८३ ॥

कश्चित् पुण्याधिको जीवः सुतत्वेन समागमत् । कुक्षौ पुण्यश्रियोऽन्येद्युश्चन्द्रस्वप्नोपसूचितः ॥ ४८४ ॥
तत्स्वप्नदर्शनं प्रातः स्वभर्ता ज्ञापितस्तया । तेनाऽप्याऽऽह्लादिता पुत्रजन्मना सा सुचेतसा ॥ ४८५ ॥
जज्ञेऽथ समये तस्यास्तनयः शुभलक्षणः । तस्य जन्मनि तत्पित्रा विदधे च महाक्षणः ॥ ४८६ ॥
पुण्यं कृत्वाऽयमायातः प्राप्तः पुण्येन वा मया । पुण्यसार इति नाम चक्रे तस्येति तत्पिता ॥ ४८७ ॥
बालरक्षाविधात्रीभिर्धात्रीभिः परिपालितः । स पित्रोर्वल्लभतमो बभूवाऽध्ययनक्षमः ॥ ४८८ ॥
उपाध्यायस्य वर्यस्य कलाग्रहणहेतवे । जनकेनाऽर्पितो लेखशालाकृन्युत्सवेन सः ॥ ४८९ ॥
तत्रैव नगरे रत्नसारस्य वणिजः सुता । बभूव बालिका रत्नसुन्दरी सुन्दराङ्गका ॥ ४९० ॥
अधीयानाऽथ तस्यैव कलाचार्यस्य सन्निधौ । जज्ञे सहाध्यायिनी सा पुण्यसारस्य धीमती ॥ ४९१ ॥
सा चापलेन महिलासुलभेन कलाविधौ । विवादं पुण्यसारेण सह चक्रे मनीषिणी ॥ ४९२ ॥
अन्यस्मिन् दिवसे तेन रुष्टेनैवमभाणि सा । बालिके पण्डितंमन्या यद्यप्यसि कलावती ॥ ४९३ ॥
तथापि हि मया सार्द्धं विवादस्तव नोचितः । भविष्यसि यतो दासी पुरुषस्य गृहे खलु ॥ ४९४ ॥ (युग्मम्)
साऽवदद् यदि रे ! दासी महाभाग्यस्य कस्यचित् । भविष्यामि नरस्याहं तद् मूढ ! भवतोऽत्र किम् ? ४९५
शशंस पुण्यसारोऽपि परिणीय बलादपि । करोमि किङ्करीं चेत् त्वां तदाऽहं नियतं नरः ॥ ४९६ ॥
भूयोपि साऽब्रवीद् मूर्ख ! बलात्कारेण जायते । स्नेहो नाऽन्यस्य कस्यापि दम्पत्योस्तु विशेषतः ॥ ४९७ ॥

ततोऽसौ लेखशालायाः पुण्यसारो गतो गृहम् । सुष्वाप मन्युशय्यायां भूत्वा म्लानमुखोऽसुखी ॥ ४९८ ॥
श्रेष्ठी पुरन्दरो वेश्म भोजनार्थमुपागतः । ज्ञात्वा तच्चेष्टितं तस्याऽन्तिकमेत्यैवमूचिवान् ॥ ४९९ ॥
अयि वत्स ! कुतो हेतोरद्य श्याममुखो भवान् ? । अकाले शयनं किं ते कारणं मे निवेदय ? ॥ ५०० ॥
निर्बन्धपृष्टः सोऽवोचत् तात ! मां रत्नसुन्दरीम् । परिणाययसि त्वं चेत् तदा स्वस्थो भवाम्यहम् ॥ ५०१ ॥
भूयोऽभाषिष्ट तं श्रेष्ठी बालोऽस्यद्यापि वत्सक ! । कुरु तावत् कलाऽभ्यासं काले परिणये स्नुषाम् ॥ ५०२ ॥
पुत्रेण भणितं तात ! यदि तां याचसेऽधुना । मदर्थं तत्पितुः पार्श्वात् तदा भोक्ष्ये न चाऽन्यथा ॥ ५०३ ॥
संबोध्य भोजयित्वा तं स्वयं भुक्त्वा च श्रेष्ठ्यमौ । बन्धुभिः सहितो रत्नसारश्रेष्ठिगृहं ययौ ॥ ५०४ ॥
अभ्युत्थानाऽऽसनदानस्वागतप्रश्नपूर्वकम् । सोऽवदत् कारणं ब्रूत येन यूयमिहाऽऽगताः ॥ ५०५ ॥
ऊचे पुरन्दरस्त्वत्तः कन्यकां रत्नसुन्दरीम् । याचितुं स्वसुतस्याऽर्थे श्रेष्ठिन् ! वयमुपागताः ॥ ५०६ ॥
अभ्यधाद् रत्नसारोऽपि कृत्यं यद् मम सर्वथा । युष्माभिर्विहितं तत यद् देयाऽवश्यं सुता मया ॥ ५०७ ॥
यूयमत्र पुरे मुख्या याचितारः सुतां मम । महिता बन्धुभिश्चैभिस्तद् वाच्यं किमतः परम् ? ॥ ५०८ ॥
पितुः पार्श्वे स्थिता साऽथ कन्यका महसाऽवदत् । ताताऽहं पुण्यसारस्य भविष्यामि न गेहिनी ॥ ५०९ ॥
तस्यास्तद् वचनं श्रुत्वा दध्यावेवं पुरन्दरः । अहो ! मे तनयस्यास्यां व्यर्थः पाणिग्रहाऽऽग्रहः ॥ ५१० ॥
यस्या एवंविधा वाणी कर्कशा शैशवेऽप्यहो ! । भाविनी यौवनोन्मत्ता मा भर्तुः सुखदा कथम् ? ॥ ५११ ॥

उवाच रत्नसारन्तु मुग्धेयं तनया मम । वाच्यावाच्यं न जानाति तदस्याः फल्गु जल्पितम् ॥ ५१२ ॥
तथाऽहं बोधयिष्यामि श्रेष्ठिन् ! ते तनयो यथा । परिणेष्यत्यमूं चैव मया दत्ता त्वसौ ध्रुवम् ॥ ५१३ ॥
ततः पुरन्दरः श्रेष्ठी गृहमागत्य तत्कथाम् । कथयित्वाऽवदत् पुत्रं वत्स ! सा तव नोचिता ॥ ५१४ ॥
यतः—
कुदेहां विगतस्नेहां लज्जाशीलकुलोज्झिताम् । अतिप्रचण्डां दुस्तुण्डां गृहिणीं परिवर्जयेत् ॥ ५१५ ॥
प्रत्यूचे पुण्यसारस्तु अमूं परिणयामि नेत् । भवामि तदहं मत्वप्रतिज्ञस्तात ! नाऽन्यथा ॥ ५१६ ॥
अपश्यन्नपरोपायं तल्लाभे सोऽथ बुद्धिमान् । पृष्ट्वा तातं स्वेदात्रीं तां विवेद कुलदेवताम् ॥ ५१७ ॥
ततः कुसुमनैवेद्यगन्धधूपविलेपनैः । अभ्यर्च्य सुविनीतात्मा प्रार्थयामास तामिति ॥ ५१८ ॥
दत्तोऽहं तुष्टया देवि ! श्रेष्ठिनस्तनयो यया । मा त्वं वाञ्छां कलत्रस्य सकले ! पूरयाद्य मे ॥ ५१९ ॥
न चेत् पूरयसि स्वेच्छां मम त्वं कुलदेवते ! । अमत्रमपमानस्य ततोऽहं निर्मितः कथम् ? ॥ ५२० ॥
उत्थास्यामि तदैवाहमितः स्थानाद् यदीप्सितम् । पूरयिष्यसि देवि ! त्वं भोक्ष्ये चाऽहं तदैवं हि ॥ ५२१ ॥
इत्थं कृतप्रतिज्ञेऽस्मिन् दिनमेकमुपोषिते । तुष्टा सोचे शनैर्वत्स ! सर्वं भव्यं भविष्यति ॥ ५२२ ॥
हृष्टचित्तस्ततः पुण्यमागे विहितभोजनः । अवशिष्टकलाऽभ्यासं विदधे जनकाऽऽज्ञया ॥ ५२३ ॥

१ तुच्छं अग्राह्यमित्यर्थः । २ स्वस्येष्टस्य दात्री । ३ पात्रम् ।

समधीतकलः सोऽथोद्यौवनः श्रेष्ठिनन्दनः । केनचित् कर्मदोषेण दुरोदररतोऽभवत् ॥ ५२४ ॥
अतीव वल्लभत्वेन पितृभ्यामनिवारितः । स द्यूतव्यसनि जज्ञे निषिद्धो न न्यवर्तत ॥ ५२५ ॥
लक्षमूल्यमथान्येद्यू राज्ञोऽलङ्करणं गृहात । हृत्वा दत्तं सभिकस्य स्वलक्षे हारितेऽमुना ॥ ५२६ ॥
याचमाने नृपे श्रेष्ठी स्थानं यावद् व्यलोकयत् । तत्र यावद्दृष्ट्वा तद् मनस्येवमचिन्तयत् ॥ ५२७ ॥
गृहीतं पुण्यसारेण नूनमेतद् भविष्यति । अन्यस्य गूढमद्वस्तूपादाने योग्यता न हि ॥ ५२८ ॥
यदर्थं खिद्यते लोकैः यत्नश्च क्रियते महान् । तेऽपि सन्तापदा एवं दुष्पुत्रा हा ! भवन्त्यहो ! ॥ ५२९ ॥
हारितं क्वापि तेनेदं चेद् भविष्यति तद् मया । गृहाद् निर्वासनीयोऽयं पुत्ररूपेण वैरिकः ॥ ५३० ॥
एवं विचिन्त्य हट्टेऽगात श्रेष्ठी तत्राऽऽगतं सुतम् । पप्रच्छालङ्कृतेः शुद्धिं सोऽप्याऽऽचख्यौ यथातथम् ॥ ५३१
ततः प्रकुपितः श्रेष्ठी तमूचे दुष्ट ! रे त्वया । तद्भूषणमुपादाय समागम्यं गृहे मम ॥ ५३२ ॥
वचसा तर्जयित्वैवं धृत्वा च गलकन्दले । निररतस्तनयस्तेन गाढरोषवशेन सः ॥ ५३३ ॥
तदा दिनावसानत्वात् अन्यतो गन्तुमक्षमः । पुरान्निस्मृत्य न्यग्रोधकोटरं प्रविवेश सः ॥ ५३४ ॥
श्रेष्ठिन्या भणितः सोऽथ गृहं प्राप्तः पुरन्दरः । कथमद्य पुण्यसारो नायात्यद्यापि मन्दिरे ? ॥ ५३५ ॥
राजभूषणवृत्तान्तमाख्यायैवमुवाच सः । मया निर्वासितः सोऽद्य प्रिये ! शिक्षापनाकृते ॥ ५३६ ॥

१ द्यूतासक्तः । २ द्यूतकारेशस्य ।

सोचे निस्सारितो येन तनयो रजनीमुखे । स त्वं मे मुखमात्मीयं कथं दर्शयसि स्फुटम् ? ॥ ५३७ ॥
बालं नेत्रविशालं तमेकतोकं[1] त्वमात्मनः । अस्यां विकालवेलायां निरस्यन् लज्जसे न किम् ? ॥ ५३८ ॥
तद्गच्छ वल्मके तस्मिन् समानीते गृहे मम । आगन्तव्यं त्वयाऽपीति स तया निरवास्यत ॥ ५३९ ॥
गेहिनीभर्त्सितः पुत्रं स्मृत्वा सोऽपि सुदुःखितः । सर्वत्राऽन्वेषयामास नगरे निजनन्दनम् ॥ ५४० ॥
गृहं निर्मानुषं वीक्ष्य श्रेष्ठिनी सा व्यचिन्तयत् । निरासे हा! मया गेहाद् पतिः कोपपरीतया ॥ ५४१ ॥
पुत्रापायकृता पूर्वं मूर्खता श्रेष्ठिना कृता । निरस्यन्त्या स्वभर्तारं पश्चात् चक्रे मयाऽपि मा ॥ ५४२ ॥
एवं चिन्ताऽऽतुरा साऽस्रा तयोर्मार्गावलोकनम् । कुर्वाणोर्द्धतनुः साऽस्थाद् द्वाग्देशे स्ववेश्मनः ॥ ५४३ ॥
ददर्श पुण्यसारोऽथ तत्रोभे देवते निशि । स्वरोचिषा तमोहन्त्र्यौ शुश्रावेति च तद्गिरम् ॥ ५४४ ॥
एका स्माह स्वसः ! किं न स्वेच्छया भ्राम्यते भुवि ? । वर्तते यदियं रात्रिरस्मत्पक्षकृतोदया ॥ ५४५ ॥
द्वितीयोवाच किं व्यर्थं भ्रान्त्याऽऽत्मा[2] खेद्यते हले ! । दृश्यते कौतुकं क्वाऽपि यदि तत्रैव गम्यते ॥ ५४६ ॥
साऽवदत् कौतुकं तर्हि गच्छामो वलभीपुरे । श्रेष्ठी वसति यत् तत्र धनप्रवरनामकः ॥ ५४७ ॥
जाता धनवतीकुक्षिसम्भवास्तस्य कन्यकाः । सप्तैताः सन्ति चाद्याऽङ्गस्यस्तत्राऽऽद्या धर्मसुन्दरी ॥ ५४८ ॥
धनसुन्दर्यथो कामसुन्दरी मुक्तिसुन्दरी । भाग्यसौभाग्यसुन्दर्यौ सप्तमी गुणसुन्दरी ॥ ५४९ ॥

१ तोकमपत्यम् । २ तृतीयान्तम् ।

वरप्राप्तिकृते तासां श्रेष्ठिना भक्तिपूर्वकम् । आराध्य तोषितो लम्बोदरो मोदकदानतः ॥ ५५० ॥
प्रत्यक्षीभूय सोऽवोचदितः सप्तमवासरे । रात्रौ सुलग्नवेलायां संयोगे प्रगुणीकृते ॥ ५५१ ॥
सुवेषयोषायुगलपृष्ठे यः कश्चिदेष्यति । श्रेष्ठिन् ! तव सुतानां स भविष्यत्युचितो वरः ॥ ५५२ ॥
सेयं सप्तमघस्रस्य रात्रिस्तत् तत्र गम्यते । निवासपादपश्चाऽयं नीयते च महाऽऽत्मना ॥ ५५३ ॥
दध्यौ स पुण्यसारोऽथ तदाकर्ण्य मनस्यदः । अहो ! प्रासङ्गिकं मेऽपि भाति कौतूहलेक्षणम् ॥ ५५४ ॥
कीदृशी वलभी सा पूः कीदृग् लम्बोदरः स च ? । कीदृक्षाः कन्यकाश्चेति सर्वं द्रष्टाऽस्मि कौतुकम् ॥ ५५५ ॥
विधाय हुंकृतिं ताभ्यामुत्क्षिप्तो वटपादपः । उद्याने वलभीपुर्यां गत्वा तस्थौ क्षणेन सः ॥ ५५६ ॥
विधाय नायिकारूपं चेलतुर्देवते ततः । तयोरनुपदं पुण्यसारोऽपि चलति स्म सः ॥ ५५७ ॥
लम्बोदरगृहद्वारे वेदिकामण्डपे कृते । मेलितस्वजनः श्रेष्ठी यावदासीत् सुताऽन्वितः ॥ ५५८ ॥
तावत् ते देवते तस्य समीपेन प्रजग्मतुः । श्रेष्ठ्यावासे रसवत्या रसग्रहणहेतवे ॥ ५५९ ॥ (युग्मम्)
एते अनुव्रजन् पुण्यसारः श्रेष्ठिवरेण सः । ददृशे भणितश्चैवं निवेश्य प्रवराऽऽसने ॥ ५६० ॥
लम्बोदरेण भद्र ! त्वं जामाता परिकल्पितः । एता मम सुताः सप्त तत्त्वं परिणयाऽनघ ! ॥ ५६१ ॥
इत्युदित्वा सुवसने नवीने परिधापितः । लक्षमूल्यभूषणेनाऽलङ्कृतः श्रेष्ठिना च सः ॥ ५६२ ॥
ततो भवत्सु धवलमङ्गलेष्वग्निसाक्षिकम् । परिणीताः चारुकन्याः पुरन्दरसुतेन ताः ॥ ५६३ ॥

सोऽथ दध्यावदो युक्तं पित्रा निर्वासितोऽस्मि यत् । अन्यथैवं कथं पुण्यसारनाम स्फुटीभवेत् ? ॥ ५६४ ॥
इति ध्यायन् कृतोद्वाहः स वधूभिः समन्वितः । श्रेष्ठिना स्वगृहं निन्ये महोत्सवपुरस्सरम् ॥ ५६५ ॥
प्रासादस्योपरितनभूमौ नीत्वा निवेशितः । वल्लभाभिः स पर्यङ्के निविष्टास्ताश्च विष्टरे ॥ ५६६ ॥
पृच्छन्ति स्म कलाऽभ्यासस्तव नाथ ! कियानिति ? । सोऽब्रवीत् सकला मुग्धाः ! मम नेष्टतरा यतः ॥ ५६७ ॥
अत्यन्तं विदुषां नैव सुखं मूर्खनृणां न च । उपार्जयत तद् यूयं सर्वथा मध्यमां कलाम् ॥ ५६८ ॥
यावत् ता न विदन्ति स्म श्लोकस्यार्थमपि स्फुटम् । तावत् स दध्यौ वृक्षोऽसौ गमिष्यति मदैवतः ॥ ५६९ ॥
इति गन्तुमनाः सोऽथ दिशाऽऽलोकादिचेष्टया । विज्ञातो गुणसुन्दर्या तया दारकनिष्ठया ॥ ५७० ॥
किमङ्गचिन्तां कर्तुं ते शङ्काऽस्तीति तयोदितः ? । सोऽब्रवीदेवमेवेति दत्तहस्तस्तया ततः ॥ ५७१ ॥
अधोभूमौ समागत्य स्वस्य ज्ञापनहेतवे । इति श्लोकं तुलायां स सुधीः खटिकयाऽलिखत् ॥ ५७२ ॥ ( युग्मम् )
किहां गोवालो किहां वलहिपुरं किहां लम्बोदरदेव ?। लाडन आयो विहिवसि गिओ सत्तइ परिणेवि ॥ ५७३ ॥
गोपालयपुरादागां वलभ्यां नियतेर्वशात् । परिणीय वधूः सप्त पुनस्तत्र गतोऽस्म्यहम् ॥ ५७४ ॥
सार्थमग्रेतनस्याऽपि श्लोकस्याऽविदुषी तदा । लज्जमानाऽनुष्टुभं तं प्रसभं नाऽप्यवाचयत् ॥ ५७५ ॥
गृहद्वारगतः सोऽथ तामूचे गुणसुन्दरीम् । सुखेन तनुचिन्ता स्यादितिनिर्विजने मम ॥ ५७६ ॥
ततस्त्वयाऽत्र स्थातव्यमहं त्वनिकटे गतः । निराबाधो भविष्यामीत्युक्त्वा तत्र वटे ययौ ॥ ५७७ ॥

तत्कोटरप्रविष्टेऽस्मिन्नी(न्ने)यतुर्देवते अपि । तच्छक्त्योत्पाटितः सोऽथ वटः स्वस्थानमागमत् ॥ ५७८ ॥
इतः पुरन्दरः श्रेष्ठी भ्रामं भ्रामं पुरेऽखिले । निशान्तेऽतीवनिर्विण्णो यावत् तत्र वटे समाययौ ॥ ५७९ ॥
तावत् सा विगता रात्रिः प्रणष्टं क्वापि तत् तमः । ततो विभातं न्यग्रोधे गतस्येत्युच्यते जनैः ॥ ५८० ॥
निर्ययौ पुण्यसारोऽथ तदानीं वटकोटरात् । वस्त्राऽलङ्कारसाराङ्गः पितृवक्त्राम्बुजार्यमा ॥ ५८१ ॥
पुत्रमत्यद्भुतश्रीकं दृष्ट्वा श्रेष्ठी सविस्मयः । वत्स ! वत्सेति जल्पन्तमालिलिङ्ग ससंभ्रमम् ॥ ५८२ ॥
ततः स्वगेहमायातः सह तेन विलोक्य तौ । बभूव श्रेष्ठिनी हृष्टा स्पृष्टा रुच्येव शीतगोः[1] ॥ ५८३ ॥
गाढमालिङ्ग्य सस्नेहं तमुत्सङ्गे निवेश्य च । पप्रच्छ वत्स ! शोभेयं संजाता क्व तवेदृशी ? ॥ ५८४ ॥
ऊचे च जनकोऽप्येवं ततोऽसौ सकलां कथाम् । तदग्रे कथयामास महद्विस्मयकारिणीम् ॥ ५८५ ॥
तावेवमूचतुर्भाग्यमहो ! वत्सस्य कीदृशम् ? ऋद्धिर्येनेदृशी लब्धा रात्रिमध्येऽप्यचिन्तिता ॥ ५८६ ॥
बभाण जनको भूयः क्षन्तव्यं वत्स ! तत् त्वया । मया विरूपं यत् किञ्चिदुक्तं शिक्षापनाकृते ॥ ५८७ ॥
पुण्यसारोऽवदत् तात ! युष्मत्शिक्षापनैव हि । संजाता हेतुरीदृश्याः सम्पदो नियतं मम ॥ ५८८ ॥
दत्त्वाऽथ द्यूतकारस्य तदानीतं विभूषणम् । नृपसत्कं नृपस्यैवाऽर्पयामास पुरन्दरः ॥ ५८९ ॥
विदधे पुण्यसारोऽथ हट्टव्यापारमुत्तमम् । दूरं विहाय तद् द्यूतव्यसनं गुणनाशनम् ॥ ५९० ॥

१ चन्द्रस्य.

इतस्तस्मिन्ननायाते वलित्वा गुणसुन्दरी । सोदरीणां समाचख्यौ सर्वासामपि तद्गतिम् ॥ ५९१ ॥
ततस्ता नवगेहान्तर्धूमांसक इवोत्कटे । आकस्मिकेऽसुखे तस्मिन् पतिते रुरुदुर्भृशम् ॥ ५९२ ॥
आकर्ण्य रुदितं पित्रा पृष्टास्तस्य च कारणम् । कथयन्ति स्म तास्तस्य तत्पत्युर[1]पवारणम् ॥ ५९३ ॥
सोऽब्रवीदपरिज्ञातपारम्पर्यो निजः पतिः । किं न सम्भूय युष्माभिर्धृतो ज्ञात्वा तदाशयम् ? ॥ ५९४ ॥
रूपलावण्ययुक्ताभिः स्त्रीभिः सर्वोऽपि लुभ्यते । तद् भवत्यः प्रियास्तेन प्राप्ताः परिहृताः कथम् ? ॥ ५९५ ॥
यदनल्पमादाय भूषणं गतवानसौ । तद् मन्ये व्यसनी कोऽपि व्यंसको[2] वा भविष्यति ? ॥ ५९६ ॥
दत्तो लम्बोदरेणाऽपि यदेवमकरोदसौ । तद् नूनं दुष्कृतं किञ्चित् पुराचीर्णमिदं हि वः ॥ ५९७ ॥
विज्ञातं किं न युष्माभिः कुर्वतीभिः कथामिमाम् । तस्याऽभिधानं स्थानं वा स्वरूपमपरं तथा ? ॥ ५९८ ॥
गुणसुन्दर्यथोवाच दीपोद्द्योते तदाऽमुना । अस्त्यत्र लिखितं किञ्चिद् वाचितं तद् मया न तु ॥ ५९९ ॥
अथ प्रभाते संजाते श्लोके तस्मिंश्च वाचिते । सोचे गोपालयपुरे गतस्तात ! पतिः स नः ॥ ६०० ॥
केनचिद् दैवयोगेन गच्छन्ते स इहाऽऽगतः । त्वद्दत्ताः परिणीयाऽस्मान् तत्रैव हि पुनर्गतः ॥ ६०१ ॥
ततस्त्वं निजहस्तेन नरवेषं समाऽर्पय । मेलयित्वा महासार्थं यतस्तत्र व्रजाम्यहम् ॥ ६०२ ॥
ज्ञास्यामि तं निजं कान्तं तत्राऽन्विष्य कथञ्चन । षण्मासाऽभ्यन्तरे वह्निरन्यथा शरणं मम ॥ ६०३ ॥

१ वियोगम् । २ धूर्तः ।

पित्राऽर्पितनृवेशा सा महासार्थसमन्विता । ययौ गोपालयपुरे कियद्भिर्दिवसैस्ततः ॥ ६०४ ॥

गुणसुन्दराऽभिधानः कश्चित सार्थपतेः सुतः । इत्यसौ नगरे तस्मिन् मानितः पृथिवीभुजा ॥ ६०५ ॥

क्रयविक्रयादि चक्रे व्यवहारं वणिग्घितम् । समं च पुण्यसारेण मैत्रीत्वं वचनाऽऽदिभिः ॥ ६०६ ॥ ( युग्मम् )

अथोचे रत्नसारं स्वस्वसारं रत्नसुन्दरी । यद् मया परिणेतव्यस्ताताऽयं गुणसुन्दरः ॥ ६०७ ॥

विज्ञाय दुहितुर्भावं रत्नसारस्तदन्तिकम् । गत्वोवाच मम सुता भर्तारं त्वां समीहते ॥ ६०८ ॥

गुणसुन्दरोऽथो दध्यावस्या वाञ्छा निरर्थिका । द्वयोर्महिलयोर्यस्माद् गृहवासः कथं भवेत् ? ॥ ६०९ ॥

यत किञ्चिदुत्तरं कृत्वा तदेतां वारयाम्यहम् । अन्यथा या गतिर्मेऽस्ति साऽस्या अपि भविष्यति ॥ ६१० ॥

एवं विचिन्त्य मनसा साऽवदत श्रेष्ठिपुङ्गवम् । अस्मिन्नर्थे कुलीनानां पित्रोरेव प्रधानता ॥ ६११ ॥

वर्तेते तौ च मे दूरे तत त्वया निजनन्दिनी । प्रदेयाऽन्यस्य कस्याऽपि प्रत्यासन्ननिवासिनः ॥ ६१२ ॥

अभाणि रत्नसारेण मत्पुत्र्यास्त्वं हि वल्लभः । सा देया कथमन्यस्मै पुरुषाय मया यतः ? ॥ ६१३ ॥

शत्रुभिर्बन्धुरूपैः सा प्रक्षिप्ता दुःखसागरे । या दत्ता हृदयानिष्टरमणस्य कुलाङ्गना ॥ ६१४ ॥

अनुमेनेऽथ तद्वाक्यं साग्रहं साऽमुनोदिता । तयोर्विवाहश्चक्रे च श्रेष्ठिना पुण्यवासरे ॥ ६१५ ॥

पुण्यसारस्तदाकर्ण्य कुलदेव्याः पुरो गतः । शिरः क्षुरिकया छेत्तुमारेभे मानिनां वरः ॥ ६१६ ॥

साहसं किं करोष्येतदिति देवतयोदितः । स स्माह पर्यणैषीद् यद् कन्यामन्यो मयेप्सिताम् ॥ ६१७ ॥

पुनरेष तयाऽभाणि या दत्ता वत्स ! ते मया । भाविनी सा तवैवैषा मा विधा मृत्युसाहसम् ॥ ६१८ ॥
सोऽवदद् युज्यते कर्तुं परस्त्रीसंग्रहो न मे । इयं च परिणीतैव किं कर्तव्यं मया ततः ? ॥ ६१९ ॥
देवतोवाच हे वत्स ! किं बहूक्तेन संप्रति ? । एषा ते वल्लभाऽवश्यं न्यायेनैव भविष्यति ॥ ६२० ॥
तद्वाक्यमनुमेनेऽसौ सा पुनर्गुणसुन्दरी । षण्मासीमतिचक्राम पत्युर्विरहदुःखिता ॥ ६२१ ॥
अप्राप्नुवत्यसौ कान्तं रहस्यं चाऽविवृण्वती । पूर्णेऽवधौ प्रतिज्ञां स्वां संपूरयितुमुद्यता ॥ ६२२ ॥
सुकाष्ठैः कारयामास चितां तस्मात् पुराद् बहिः । चचाल वार्यमाणाऽपि प्रवेष्टुं ज्वलिताऽनले ॥ ६२३ ॥
बालोऽपि सार्थवाहोऽयं वैराग्येण हि केनचित् । मुमूर्षतीन्युदन्तोऽयं सकलेऽपि पुरेऽभवत् ॥ ६२४ ॥
तमाकर्ण्य ययौ राजा सपौरः सपुरन्दरः । रत्नसार[१]पुण्यसारसहितश्च तदन्तिकम् ॥ ६२५ ॥
राज्ञा सोऽभाणि केनाऽऽज्ञा खण्डिताऽत्र पुरे तव ? । यदर्तिलक्षणं काष्ठभक्षणं कुरुते भवान् ॥ ६२६ ॥
ऊचे च रत्नसारेण सुविचारेण किं नु ते । अपराद्धमहो ! दारैरुदारैर्भद्र ! किञ्चन ॥ ६२७ ॥
सोऽवदद् नापराद्धं मे केनाऽप्याऽऽज्ञा न खण्डिता । अहं त्विष्टवियोगार्तिकर्त्रा दैवेन खण्डिता ॥ ६२८ ॥
इति जल्पन्त्यसावन्तर्विरहाऽग्निशिखानिभान् । सुदीर्घतरनिःश्वासान् मुञ्चत्युपचितं ययौ ॥ ६२९ ॥
राज्ञोक्तमत्र यः कश्चिद् मित्रमस्य प्रवर्तते । संबोध्य रक्षणीयोऽयममुना मृत्युसाहसात् ॥ ६३० ॥

१ तृतीयान्तम् ।

नागरैः पुण्यसारोऽस्य तन्मित्रं परिकीर्तितः । राज्ञाऽऽदिष्टः स निकटे गत्वाऽथ तमभाषत ॥ ६३१ ॥
तारुण्ये वर्तमानस्य संपदाऽलङ्कृतस्य च । दुःखहेतुमनाख्याय युक्ता नो मित्र ! ते मृतिः ॥ ६३२ ॥
साऽवदद् यस्य दुःखानि कथ्यन्ते स न दृश्यते । हृदयात् कण्ठमागत्य यान्ति तत्रैव तान्यहो ! ॥ ६३३ ॥
अपरः प्राह मित्र ! त्वां तथाऽहं तर्कयामि यत् । करोष्येवंविधां चेष्टामुपहासकरीं नृणाम् ॥ ६३४ ॥
स्मित्वा तल्लिखितश्लोकमुक्त्वा चैवमुवाच सा । किमयं भवता श्लोकोऽलेखि नो वेति कथ्यताम् ? ॥ ६३५ ॥
आमेति भणिते तेन सोचे साऽहं तव प्रिया । या मुक्ता तोरणद्वारेऽभिधया गुणसुन्दरी ॥ ६३६ ॥
प्रयासोऽयं मया चक्रे हे कान्त ! तव हेतवे । तत् प्रसीद स्त्रियो वेषं ममाऽऽशु त्वं समर्पय ॥ ६३७ ॥
गृहादानाय्य तेनाऽपि दत्तः सोऽस्यै मनोहरः । प्रतिसीरान्तरात् साऽथ निर्ययौ परिधाय तम् ॥ ६३८ ॥
वधूर्वो वन्दत इति भर्त्रा निर्दिश्यमानया । नमश्चक्रेऽनया राजा श्वश्रूश्वशुरकौ तथा ॥ ६३९ ॥
किमेतदिति पृष्टश्च पुण्यसारः कथां निजाम् । कथयामास भूपस्याऽतिविस्मयविधायिनीम् ॥ ६४० ॥
विज्ञप्तो रत्नसारेण राजैवं येन मे सुता । उद्वृढा सोऽभवद् नारी तदस्या देव ! का गतिः ? ॥ ६४१ ॥
सोऽवादीदत्र प्रष्टव्यं किमु भोः साऽपि गेहिनी ? । भवतात् पुण्यसारस्योद्वृढा तत्प्रियया यतः ॥ ६४२ ॥
सा रत्नसुन्दरी तास्य वल्लभा वलभीपुरात् । आययुः पुण्यसारस्य मन्दिरे पुण्ययोगतः ॥ ६४३ ॥

१ जवनिकामध्यात् ।

एवमष्टौ कलत्राणि कृतचित्राणि शृण्वताम् । पूर्वं विहितपुण्यस्य पुण्यसारस्य जज्ञिरे ॥ ६४४ ॥
धर्मदेशनया भव्यप्राणिनः प्रतिबोधयन् । ज्ञानसागरऽभिधाऽऽचार्यस्तत्राऽन्येद्युः समाययौ ॥ ६४५ ॥
अथ तद्वन्दनाहेतोर्भक्तिभावितमानसः । ययौ पुरन्दरः श्रेष्ठी पुण्यसारसमन्वितः ॥ ६४६ ॥
सोऽथ नत्वा तमाचार्यं पप्रच्छेति कृताञ्जलिः । प्रभो ! मत्सूनुना पूर्वभवे किं सुकृतं कृतम् ? ॥ ६४७ ॥
शशंस सोऽवधिज्ञानी पुरे नीतिपुरऽभिधे । बभूव कश्चिदुच्छीर्णसन्तानः कुलपुत्रकः ॥ ६४८ ॥
संसारवासनिर्विण्णः सुधर्ममुनिसन्निधौ । जग्राह स सुधीर्दीक्षां शिक्षां च द्विविधामपि ॥ ६४९ ॥
स पञ्च समितीः सम्यक् पालयामास यत्नतः । गुप्ती चाऽपालयत् कायगुप्तौ किं तु न निश्चलः ॥ ६५० ॥
कायोत्सर्गे स्थितो दंशमशकोपद्रवे सति । पारयामास तं शीघ्रमसंपूर्णेऽवधावपि ॥ ६५१ ॥
सुधर्मसाधुनाऽभाणि किमावश्यकखण्डनम् ? । प्रकरोषि यतो दोषो व्रतभङ्गे भवेद् महान् ॥ ६५२ ॥
ततस्तद्भयभीतोऽसावसहिष्णुरिमामपि । गुप्तिं निर्वाहयामास वैयावृत्त्यं चकार च ॥ ६५३ ॥
मृत्वा समाधिना सोऽन्ते सौधर्मे त्रिदशोऽभवत् । जज्ञे तव सुतः श्रेष्ठिन् ! ततः च्युत्वाऽऽयुषः क्षये ॥ ६५४ ॥
सप्त प्रवचनमातृर्यत् सुखेनैव पालिताः । तदनेन प्रियाः सप्त परिणीताः सुखेन हि ॥ ६५५ ॥
कष्टेन पालितैका यत् प्रियाऽप्येवमभूत् ततः । अप्रमादो विधातव्यो धर्मकर्मणि सर्वथा ॥ ६५६ ॥
तच्छ्रुत्वा जातसंवेगोऽग्रहीद् दीक्षां पुरन्दरः । जग्राह श्रावकत्वं च पुण्यसारो विवेकवान् ॥ ६५७ ॥

ततः पुत्रेषु जातेषु पुण्यसारोऽपि वार्द्धके । प्रतिपद्य परिव्रज्यां मृत्वा सुगतिभागभूत् ॥ ६५८ ॥

॥ इति पुण्यसारकथानकं समाप्तम् ॥

श्रुत्वेमां पुण्यसारस्य सत्कथां विमलाऽऽशयः । जग्राह दीक्षां कनकशक्तिस्त्यक्त्वा नृपश्रियम् ॥ ६५९ ॥

समीपे विमलमत्या आर्यायास्ते च तत्प्रिये । दीक्षां गृहीत्वा संजाते सुतपःसंयमोद्यते ॥ ६६० ॥

विहरन् नगनगरे सिद्धिपर्वतनामके । गत्वा शिलोच्चये तस्थौ प्रतिमामेकरात्रिकीम् ॥ ६६१ ॥

तत्पूर्वमत्सरी तत्र हिमचूलाऽभिधः सुरः । तस्योपसर्गान् विदधे निराचक्रे स खेचरैः ॥ ६६२ ॥

प्रभाते पारयित्वा तां स आगाद् रत्नसञ्चयाम् । तत्र सूरनिपाताऽऽख्योद्याने तां प्रतिमां व्यधात् ॥ ६६३ ॥

शुक्लध्यानजुषः तस्य घातिकर्मचतुष्टये । प्रक्षीणे केवलज्ञानमुत्पेदे विश्वदीपकम् ॥ ६६४ ॥

विदधे महिमा तस्य देवविद्याधराऽसुरैः । वज्रायुधचक्रिणा च मानवैरपरैरपि ॥ ६६५ ॥

आगत्य समवासार्षीत् पुरि तस्यामथाऽन्यदा । पूर्वोत्तरदिग्विभागे क्षेमङ्करजिनेश्वरः ॥ ६६६ ॥

चक्री वर्द्धापितः पुम्भिस्तदाऽऽगत्य नियोजितैः । ततश्च सपरीवारस्तं नन्तुं द्राग् ययावसौ ॥ ६६७ ॥

प्रदक्षिणात्रयपूर्वं प्रणम्य परमेश्वरम् । निषसाद यथास्थानं शुश्रुषुर्धर्मदेशनाम् ॥ ६६८ ॥

अत्राऽन्तरे सुतस्तस्य सहस्राऽऽयुधनामकः । नमस्कृत्य जिनेन्द्रं तं पप्रच्छैवं कृताञ्जलिः ॥ ६६९ ॥

भगवन् ! पवनवेगादीनां पूर्वापरे भवाः । कथं तातेन विज्ञाता ममैतत् कौतुकं महत् ? ॥ ६७० ॥

भगवानप्यथाऽवादीदवधिज्ञानचक्षुषा । भवस्वरूपं विज्ञातं तेषां वज्रायुधेन भोः ! ॥ ६७१ ॥
पुनः पप्रच्छ स ज्ञानं कतिभेदं भवत्यदः । जिनोऽवोचत पञ्चधा तत् प्रसिद्धं ह्यस्मदागमे ॥ ६७२ ॥
मतिश्रुतावधिसंज्ञं तत्र ज्ञानत्रयं भवेत् । तुर्यं मनःपर्यवं च पञ्चमं केवलाऽभिधम् ॥ ६७३ ॥
बुद्धिः स्मृतिश्च प्रज्ञा च मतिः पर्यायवाचकाः । धीमद्भिः पुनरेतासां पृथक् भेदाः प्रकीर्तिताः ॥ ६७४ ॥
भविष्यकालविषया मतिस्तावत् प्रकीर्तिता । बुद्धिश्च वर्तमाने स्यादतीते च स्मृतिर्भवेद् ॥ ६७५ ॥
कालत्रये च विज्ञेया प्रज्ञा सा च चतुर्विधा । क्षयं गतैर्भवेज्जन्तोर्मत्यावरणकर्मभिः ॥ ६७६ ॥
औत्पत्तिकी वैनयिकी कार्मिकी पारिणामिकी । चतुर्विधा भवेद् बुद्धिः पञ्चमी नोपलभ्यते ॥ ६७७ ॥
अदृष्टाश्रुतपूर्वे या वस्तुन्युत्पद्यते क्षणात् । बुद्धिरौत्पत्तिकी नाम सा बुद्धैः परिकीर्तिता ॥ ६७८ ॥
भारते रोहको नाम शिलाप्रभृतिवस्तुषु । दृष्टो निदर्शनं तस्यां तत्कथा श्रूयतामिति ॥ ६७९ ॥

उज्जयिन्यां महापुर्यामग्निकेसरिनामकः । बुद्धिविक्रमसंपन्नो बभूव पृथिवीपतिः ॥ ६८० ॥
तस्याः पुर्याः समासन्ने महत्या शिलयाऽङ्किते । नटग्रामेऽभवद् रङ्गशूरो नाम्ना कुशीलवः ॥ ६८१ ॥
अतिमात्रकलापात्रं बुद्धिनिर्जितवाक्पतिः । बालोऽप्यबालभावोऽभूत तत्पुत्रो रोहकाह्वयः ॥ ६८२ ॥
तन्मातरि विपन्नायां रङ्गशूरस्य तस्य तु । बभूव रुक्मिणी नाम्नी प्रेयसी रूपशालिनी ॥ ६८३ ॥
सा यौवनमदोन्मत्ता भर्तृगौरवगर्विता । रोहकस्याऽङ्गसंस्कारं न चकार तथाविधम् ॥ ६८४ ॥

सोऽवदद् कुपितो यत् त्वं शुश्रूषाँ न करोषि मे । भविष्यति ततोऽवश्यं हे मातः ! ते न सुन्दरम् ॥ ६८५ ॥
साऽब्रवीद् रे शिशो ! यत् त्वं निग्रहानुग्रहाक्षमः । स त्वं रुष्टोऽथवा तुष्टः करिष्यसि ममाऽत्र किम् ?॥ ६८६ ॥
रोहकः चिन्तयामासोत्पाद्य मन्तुं कमप्यहम् । तथा करिष्ये तातस्याऽनिष्टेयं जायते यथा ॥ ६८७ ॥
विचिन्त्यैवं स यामिन्यामुत्थाय सहसाऽब्रवीत् । यात्येष पुरुषः कोऽपि निःसृत्य गृहमध्यतः ॥ ६८८ ॥
तद् निशम्य पिता तस्य शयानोऽथ गृहाजिरे । उत्थायोवाच रे ! दुष्टं तं दर्शय नरं मम ॥ ६८९ ॥
रोहकोऽप्यवदत् तात ! स उत्प्लुत्य गतः क्षणात् । गङ्गोऽपि हि विरागार्हस्ततोऽभूद् गेहिनीं प्रति ॥६९०॥
आः ! किमन्यनराऽऽसक्ता जातेयमथवा भवेत् । किमिदं दुर्घटं येन भवन्त्येवंविधाः स्त्रियः ॥ ६९१ ॥
पृथक्शय्याविधानेन ततोऽसौ तेन धीमता । अशस्त्रवधवद्दुःखभागिनी विदधे स्फुटम् ॥ ६९२ ॥
साऽपि दध्यौ मया नापराद्धं किमपि भर्तरि । नूनमेतेन बालेन कोपितोऽयं पतिर्मम ॥ ६९३ ॥
करोम्यस्यैव तद्भक्तिं भर्तृतोषविधित्सया । येनैवाऽऽरोपितं दुःखं स एवापनयत्वरम्[1] ॥ ६९४ ॥
ततः सा प्रार्थयामास रोहकं भक्तिपूर्वकम् । वत्स ! मेऽभिमुखं कान्तं कुरु दास्यस्मि ते स्फुटम् ॥ ६९५ ॥
विधाय स सुधीरेवं तामात्मवशवर्तिनीम् । पुना रात्रौ सचन्द्रायां प्रोवाच जनकं प्रति ॥ ६९६ ॥
उत्तिष्ठोत्तिष्ठ हे तात ! यात्यद्याऽप्यसकौ नरः । अथाऽस्य पृच्छतोऽदर्शि तेन छाया शरीरजा ॥ ६९७ ॥

१ अरं शीघ्रम् ।

त्वच्छायेयमिति प्रोक्ते पित्रा प्रोवाच रोहकः । अग्रेऽप्येवंविधो दृष्टस्तर्हि तात ! मया नरः ॥ ६९८ ॥
रङ्गशूरस्ततो दध्यौ हा ! मया वचनात् शिशोः । अपमानपदं चक्रे पत्नी दोषाऽभिशङ्कया ॥ ६९९ ॥
ततः सा रुक्मिणी भर्तुः पूर्ववद् वल्लभाऽभवत् । रोहकस्य सदा भक्तिं कुरुते स्म च सादरम् ॥ ७०० ॥
स पित्रा सह भुङ्क्ते स्म तथाऽपि कुशलाऽऽशयः । स्वजनन्या अपि प्रायो बुद्धिमान् न हि विश्वसेत् ॥ ७०१ ॥
अन्यदा सह तातेन स गत्वोज्जयिनीं पुरीम् । सर्वमालोकयामास पुरे देवकुलाऽऽदिकम् ॥ ७०५ ॥
गते ताते पुरीमध्ये स सिप्रासैकतेऽन्यदा । पुरीं रेणुमयीं कृत्वा तस्थौ तद्रक्षणे स्वयम् ॥ ७०३ ॥
अथाऽल्पभृत्योऽश्वाऽऽरूढस्तेनागच्छन् पथा नृपः । सहसा रोहकेणोचे सावष्टम्भमिदं वचः ॥ ७०४ ॥
पुरः प्रासादचैत्याढ्यां राजपुत्र ! पुरीमिमाम् । किं त्वं भङ्क्ताऽसि येनाऽश्वं निवर्तयसि नान्यतः ? ॥ ७०५ ॥
तस्य बुद्ध्या गिरा चैव प्रहृष्टः पृथिवीपतिः । कस्याऽयं सूनुरित्येवं पप्रच्छाऽनुचरान् निजान् ? ॥ ७०६ ॥
तेऽवोचन् रङ्गशूरस्य सुतोऽयं देव ! रोहकः । विज्ञानवचनाभ्यां यो जातस्त्वच्चित्तमोहकः ॥ ७०७ ॥
मन्त्रिपञ्चशतान्यासन् तस्य राज्ञः परं नरम् । प्रकृष्टं मार्गयामास स विधातुं महत्तमम् ॥ ७०८ ॥
ततोऽसौ रोहकप्रज्ञापरीक्षणकृतेऽन्यदा । पुरुषं प्रेषयित्वा स्वं ग्रामीणानिदमादिशत् ॥ ७०९ ॥
अस्मद्योग्य इह ग्रामे प्रासादः कार्यतां परम् । द्रव्यव्ययेन बहुनाऽप्येकद्रव्यविनिर्मितः ॥ ७१० ॥
संभूय ग्रामवृद्धास्ते रङ्गशूरनटश्च सः । चिरमालोचयामासुस्तद् विधातुमनीश्वराः ॥ ७११ ॥

विना तातमभुञ्जानो रोहकोऽथ रुदन् गृहात् । आगत्याऽऽकारयामास भोजनायैनमादरात् ॥ ७१२ ॥
सोऽवदद् वत्स ! दत्तोऽद्य क्षुद्राऽऽदेशो महीभुजा । एकस्तम्भेन केनाऽपि प्रासादः कार्यतामिति ॥ ७१३ ॥
तन्निर्णयमकृत्वैव भोजनं क्रियते कथम् ? । आज्ञा बलवतां यस्माद् लङ्घिता न शुभावहा ॥ ७१४ ॥
रोहकोऽप्यवदत् तावत् भोजनं क्रियतां ननु । पश्चात् सर्वं भणिष्यामि चिन्तनीयं किमत्र भोः ? ॥ ७१५ ॥
भोजनोर्ध्वमभाषिष्ट स सुधी राजपूरुषम् । इयमुच्चतरा दीर्घाऽऽयामयुक्ताऽस्ति या शिला ॥ ७१६ ॥
तयैव कारयिष्यामः प्रासादं नृपचिन्तितम् । पूरणीयं नृपेणैव पुनः शिल्पिधनाऽऽदिकम् ॥ ७१७ ॥
इत्यर्थे कथिते तेन पुना राज्ञा परेद्यवि । ग्रामस्था इत्यभाष्यन्त वस्तमुद्दिश्य पुंगिरा ॥ ७१८ ॥
पोषणीयः प्रतिदिनं बस्तोऽसौ चारिवारिभिः । अहीनाऽधिकमेदास्तु पुनः प्रेष्योऽस्मदन्तिकम् ॥ ७१९ ॥
कथितं रोहकस्यैव ततस्तेनाऽपि धीमता । तृणाऽऽदिपोषितस्याऽस्य दर्श्यते प्रत्यहं वृकः ॥ ७२० ॥
तथाकृतेऽमुना राज्ञा प्रेषितः कुक्कुटोऽन्यदा । एकोऽपि योधनीयोऽयं दत्ताऽऽज्ञा चेदृशी तथा ॥ ७२१ ॥
संक्रान्तप्रतिबिम्बोऽसावादर्शे योधितश्चिरम् । तिलानां शकटान् प्रेष्य भाणितं भूभुजा पुनः ॥ ७२२ ॥
यन्त्रे हि पीडयित्वाऽमून् तैलं कार्यं परं तिलाः । मीयन्ते येन मानेन मेयं तेनैव तैलकम् ॥ ७२३ ॥
रोहको मापयामास पृथ्व्यादर्शतलेन तान् । भूयस्तेनैव तैलं च बुद्धेः किं नाम दुष्करम् ? ॥ ७२४ ॥

१ मेषम्.

अन्यदाऽकारयद् वेर्तिं नृपतिर्वालुकामयीम् । अनया गोपयिष्यन्ते शालीनां किल तन्दुलाः ॥ ७२५ ॥
रोहकोऽप्यवदद् राजकार्यं कार्यं यथातथम् । परं प्रमाणं नैतस्या जानीमोऽकृतपूर्विणः ॥ ७२६ ॥
ततस्तस्याः पुरातन्याः खण्डमेकं प्रदर्श्यताम् । यतस्तेन प्रमाणेन सा नव्या क्रियते बहुः ॥ ७२७ ॥
अन्यदा च जरद्धस्ती प्रेषितस्तत्र भूभुजा । कथितं च यथा यत्नात् पाल्योऽयं मम वारणः ॥ ७२८ ॥
संस्थितस्याऽस्य मे वार्ता कथनीया यथा तथा। मृत इत्यक्षरद्वन्द्वं नोच्चार्यं तु पुरो मम ॥ ७२९ ॥
ज्ञापितो रोहकेणेति मृते तस्मिन् महीपतिः । यद् देव ! न चरत्यद्य करी पिबति वा न च ॥ ७३० ॥
चक्रे नोच्छ्वासनिःश्वासौ राज्ञोचे तर्हि किं मृतः ?। सोऽवदद् वेद्मि नैवाऽहं देवो जानाति कारणम् ॥ ७३१ ॥
राज्ञा पुनः समादिष्टं ग्रामलोकस्य तस्य तु । यद् भोः ! स्वादुजलाऽऽपूर्णः स्वकूपः प्रेष्यतामिह ॥ ७३२ ॥
प्रत्यूचे रोहकोऽप्येवं पुरस्था काऽपि कूपिका । देवाऽऽदौ प्रेष्यतामत्र यतः सार्द्धं तयैत्ययम् ॥ ७३३ ॥
हृष्टो राजाऽभ्यभाषिष्ट युक्तमेतेन जल्पितम् । कार्यस्याऽघटमानस्याऽघटमानमिहोत्तरम् ॥ ७३४ ॥
प्रदत्ताऽऽज्ञा पुना राज्ञा यदुदीच्यां वनं दिशि । दक्षिणस्यां दिशि ग्रामात् तत् कथं क्रियते वद ॥ ७३५ ॥
रोहकोऽप्यवदद् ग्रामनिवेशः क्रियतेऽन्यतः । तेनैव विधिना ग्रामाद् भवेद् दक्षिणतो वनम् ॥ ७३६ ॥
राजाऽऽदेशात् स चाऽन्येद्युः पायसं पावकं विना । पपाचावकरस्यान्तः स्थालीं विन्यस्य यत्नतः ॥ ७३७ ॥

१ रज्जुम्.

समीपे भूपतिः स्वस्याऽऽकारयामास रोहकम् । व्यवस्थयाऽनयाऽन्येद्युरन्योऽन्यस्य विरुद्धया ॥ ७३८ ॥
नागम्यं मलिनाङ्गेन कार्यं स्नानं न च त्वया । यानाऽऽरूढेन चाऽऽगम्यं पद्भ्यां नाऽस्पृशता भुवम् ॥ ७३९ ॥
नोत्पथेन न मार्गेण न रात्रौ न च वासरे । न कृष्णे नोज्ज्वले पक्षे न च्छायायां न चाऽऽतपे ॥ ७४० ॥
नोपदापाणिना नैव रिक्तहस्तेन वा त्वया । आगन्तव्यं त्वयाऽऽभ्यासे[1] शेमुषीशालिना ध्रुवम् ॥ ७४१ ॥
ततश्चैडकिकाऽऽरूढः[2] स्पृशन् पद्भ्यां धरातलम् । प्रक्षालिताङ्गस्तोयेन सन्ध्याकाले कुहूदिने ॥ ७४२ ॥
धृतचालनकः शीर्षे चक्ररेखान्तरालगः । मृदुपायनपाणिश्च स ययौ नृपपर्षदि ॥ ७४३ ॥
कृत्वा प्रणामं भूपस्य समीपे निषसाद च । ढौकयामास चामुष्य प्राभृतं मृत्तिकामयम् ॥ ७४४ ॥
किमेतदिति राज्ञोक्ते कथयित्वाऽऽत्मनः कथाम् । सोऽवदद् देव ! गुर्वीयं जगन्मातेव मृत्तिका ॥ ७४५ ॥
ततश्च स्वाऽऽगतप्रश्नद्रव्यदानाऽऽदिना नृपः । संमान्यैनं सभामध्ये प्रशशंस सविस्मयः ॥ ७४६ ॥
अहो ! अस्य महापुंसो विलोक्य मतिवैभवम् । वयं मन्यामहे रूढं सत्यमेतत् सुभाषितम् ॥ ७४७ ॥
वाजिवारणलोहानां काष्ठपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ७४८ ॥
अथाऽङ्गरक्षकत्वे तं निवेश्य निशि भूपतिः । सुष्वाप शयने तस्मिन् रोहकोऽपि महामतिः ॥ ७४९ ॥
यामिन्याः प्रथमे यामे जातनिद्राक्षयोऽथ सः । विबोध्य रोहकं स्माऽऽह सुप्तो जागर्ति वा भवान् ? ॥ ७५० ॥

---

१ समीपे । २ मेषारूढः ।

सोऽवदद् नैव सुप्तोऽस्मि देव ! चिन्तां करोम्यहम् । अजिकालिण्डिकाः को नु करोत्येवंविधा इति ? ॥ ७५१ ॥
भूपपृष्टेन तेनैव कृतस्तन्निर्णयो यथा । वातप्राबल्यतस्तासां जायन्ते तास्तथाविधाः ॥ ७५२ ॥
द्वितीयप्रहरेऽप्येवं पृष्टो राज्ञा जजल्प सः । यथा पिप्पलपर्णानामादिरन्तोऽथवा गुरुः ॥ ७५३ ॥
तेनैव निर्णयश्चक्रे द्वावप्येतौ समाविति । तृतीयप्रहरे खाडिहलादेहस्य चिन्तनम् ॥ ७५४ ॥
निर्णीतमिति तेनैव समत्वं देहपुच्छयोः । यावती श्वेतता तावत् कृष्णत्वमपि तत्तनौ ॥ ७५५ ॥
चतुर्थप्रहरे विद्धः कण्टकेन महीभुजा । जगाद रोहको देव ! चिन्ता त्वत्तातजा मम ॥ ७५६ ॥
कीदृशीति नृपेणोक्ते सोऽवदद् राजगुह्यकौ । निर्णेजकालिमातङ्गाश्चेति ते जनकाः स्फुटम् ॥ ७५७ ॥
राजोचे किमसंबद्धं ब्रूषे जानासि वा कथम् ? । सोऽप्यवोचत जानामि भूपते ! तव चेष्टया ॥ ७५८ ॥
न्यायेन पालयस्युर्वीं येन तेन नृपाऽऽत्मजः । तुष्टो ददासि यद् भूरि धनं तद् धनदात्मजः ॥ ७५९ ॥
कोपं करोषि यद् गाढं तत् त्वं चण्डालनन्दनः । रुष्टो हरसि सर्वस्वं येन तद् रजकाऽऽत्मजः ॥ ७६० ॥
विद्धः कण्टिकया यस्माद् दूनोऽहमलिदंशवत् । तेन जानाम्यहं राजन् ! वृश्चिकोऽपि पिता तव ॥ ७६१ ॥
इत्यर्थे संशयश्चेत्ते जननीं पृच्छ तन्निजाम् । तयाऽप्यनुमतं ह्येतदतिनिर्बन्धपृष्टया ॥ ७६२ ॥
वीक्ष्याऽभिलषिता एते यदृतुस्नातया मया । तेन पञ्चाऽप्यमी वत्स ! पितृभावं भजन्ति ते ॥ ७६३ ॥
ततोऽसौ रोहको नामाऽनन्यसामान्यधीधनः । पञ्चमन्त्रिशतस्वामी कृतस्तुष्टेन भूभुजा ॥ ७६४ ॥

तस्य बुद्धिप्रभावेण दृप्ता अपि महीभुजः । अरिकेसरिभूपस्य बभूवुर्वशवर्तिनः ॥ ७६५ ॥

॥ इति रोहककथानकं समाप्तम् ॥

बुद्धिर्वैनयिकी सा या विनयेन भवेद् गुरोः । अधीतेऽपि निमित्ताऽऽदिशास्त्रे चारुविचारकृत् ॥ ७६६ ॥
घटचित्राऽऽदिकारणशिल्पिनां लेखकस्य च । भवेत् कर्मसमुत्था या सा बुद्धिः कार्मिकी स्फुटम् ॥ ७६७ ॥
परिणामवशात् सर्ववस्तुनः कृतनिश्चया । स्यात् पारिणामिकी बुद्धिः प्रतिबोधविधायिनी ॥ ७६८ ॥
सर्वासामपि बुद्धीनां दृष्टान्ता आगमोदिताः । अनेके सन्ति ते ग्रन्थगौरवादिह नोदिताः ॥ ७६९ ॥
बुद्धिश्चतुर्विधाऽप्येषा मतिज्ञानमिहोच्यते । सति यस्मिन् श्रुतमपि प्रादुर्भवति देहिनाम् ॥ ७७० ॥
त्रिकालविषयं वस्तु येनाऽधीतेन विद्यते । तत् सिद्धमातृकामुख्यं श्रुतज्ञानं प्रकीर्तितम् ॥ ७७१ ॥
कियन्तोऽपि भवा येन विज्ञायन्ते शरीरिणाम् । प्रोक्तं तदवधिज्ञानं सर्वदिक्षु कृतावधि ॥ ७७२ ॥
भावा मनोगता येन ज्ञायन्ते संज्ञिदेहिनाम् । मनःपर्यवसंज्ञं तच्चतुर्थं ज्ञानमुच्यते ॥ ७७३ ॥
सर्वत्र सर्वदा यस्य स्खलना न कथञ्चन । तद्भवे केवलज्ञानं पञ्चमं सिद्धिसौख्यकृत् ॥ ७७४ ॥
अथोत्थाय जिनं नत्वा गृहे गत्वा च चक्रभृत् । राज्ये न्यवेशयत् पुत्रं स सहस्राऽऽयुधाऽभिधम् ॥ ७७५ ॥
चतुःसहस्रै राज्ञीनां तत्संख्यैः पार्थिवैस्तथा । सप्तपुत्रशतैः सार्द्धं स श्रामण्यं ततोऽग्रहीत् ॥ ७७६ ॥
गृहीत्वा द्विविधां शिक्षां गीतार्थो विहरन् भुवि । ययौ सोऽपि गिरिवरं सिद्धिपर्वतसंज्ञकम् ॥ ७७७ ॥

तत्र वैरोचने स्तम्भे रमणीये शिलातले । स सांवत्सरिकीं तस्थौ प्रतिमां मेरुनिश्चलः ॥ ७७८ ॥
इतोऽश्वग्रीवतनयौ मणिकुम्भमणिध्वजौ । भवं भ्रान्त्वा सुरत्वेन समुत्पन्नौ तदा हि तौ ॥ ७७९ ॥
तत्प्रदेशं समायातौ भगवन्तं निरीक्ष्य तम् । उत्पन्नमत्सरौ तस्योपसर्गानिति चक्रतुः ॥ ७८० ॥
तीक्ष्णदंष्ट्राकरालाऽऽस्यं दीर्घलाङ्गूलमादितः । तौ सिंहव्याघ्रयो रूपं मुक्तनादं वितेनतुः ॥ ७८१ ॥
ततश्च रूपमास्थाय करेण्वोरतिभीषणम् । क्रुद्धौ विदधतुः तस्य दन्तघाताऽऽद्युपद्रवम् ॥ ७८२ ॥
भूत्वाऽथ सर्पसर्पिण्यौ फटाटोपभयङ्करौ । ततः पिशाचराक्षस्यावुपदुद्रुवतुश्च तम् ॥ ७८३ ॥
रम्भातिलोत्तमानाम्न्यौ शक्रस्याऽग्रप्रिये तदा । वज्रायुधमुनीन्द्रं तं नमस्कर्तुमुपेयतुः ॥ ७८४ ॥
ते विलोक्य समायान्त्यौ त्वरितं तौ प्रणेशतुः । ताभ्यां भर्तर्क्षितौ गाढं वचनैर्भयकारिभिः ॥ ७८५ ॥
साङ्गहारं सविलासं हावभावरसोत्तरम् । रम्भा नृत्यं स्वयं चक्रे वज्रायुधमुनेः पुरः ॥ ७८६ ॥
सप्तस्वरसमायुक्तं ग्रामत्रयपवित्रितम् । तिलोत्तमाऽपि सपरीवारा गीतं व्यधाद् वरम् ॥ ७८७ ॥
विधायैवंविधां भक्तिं मुनीन्द्रं तं प्रणम्य च । रम्भातिलोत्तमे देव्यौ जग्मतुः स्थानमात्मनः ॥ ७८८ ॥
वार्षिकीं पारयित्वा तां प्रतिमामतिदुष्कराम् । विजहार महीपीठे वज्रायुधमहामुनिः ॥ ७८९ ॥
क्षेमङ्करे गते मोक्षं गणभृत् पिहिताश्रवः । आययौ नगरेऽन्येद्युः महस्रायुधभूपतेः ॥ ७९० ॥

१ तिरस्कृतौ ।

धर्मं तदन्तिके श्रुत्वा प्रतिबुद्धः सकोऽपि हि । राज्ये शतबलं पुत्रं निवेश्य व्रतमाददे ॥ ७९१ ॥
गीतार्थो मिलितः सोऽथ तातसाधोस्ततश्च तौ । भूम्यां विहरतः स्मोमौ कुर्वन्तौ विविधं तपः ॥ ७९२ ॥
ईषत् प्राग्भारसंज्ञेऽथ समारुह्य महीधरे । संतस्थतुः कृतप्रायौ पादपोपगमेन तौ ॥ ७९३ ॥
त्यक्त्वा देहमिदं मलाञ्चितमुभौ तौ देवलोकोत्तरं संप्राप्तौ नवमं गतावमुमथ ग्रैवेयकाग्रेयकम् ।
इत्थं शान्तिजिनेश्वरस्य चरिते त र यैववर्याष्टमः प्रोक्तोऽयं मयका भवः सनवमः मह्यस्य कुर्याच्छिवम् ॥७९४॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते अष्टमनवम-
भववर्णनो नाम चतुर्थः प्रस्तावः

## पञ्चमः प्रस्तावः

इतोऽस्य जम्बूद्वीपस्य प्राग्विदेहस्य भूषणे । विजये पुष्कलावत्यामस्ति पूः पुण्डरीकिणी ॥ १ ॥
नीतिकीर्तिजयश्रीणां स्त्रीणां पङ्केतमन्दिरम् । अभूत् तीर्थङ्करस्तत्र राजा घनरथाऽभिधः ॥ २ ॥
रूपलावण्यसंयुक्ते तस्याऽभूतामुभे प्रिये । आद्या प्रीतिमतीनाम्नी द्वितीया च मनोहरी ॥ ३ ॥
वज्रायुधस्य जीवोऽथैकत्रिंशत्सागरस्थितेः । तस्मात् सर्वोत्तमग्रैवेयकादायुःक्षये च्युतः ॥ ४ ॥
तत्पूर्वप्रेयसीकुक्षिशुक्तौ मुक्तामणिप्रभः । समुत्पेदे सुतत्वेन मेघस्वप्नोपसूचितः ॥ ५ ॥ (युग्मम्)
सहस्रायुधजीवोऽथ ततश्च्युत्वोदरेऽभवत् । राज्ञः पत्न्या द्वितीयस्याः सुरथस्वप्नशंसितः ॥ ६ ॥
पूर्णकालेऽथ ते देव्यौ प्रसूते शुभलक्षणौ । मेघरथदृढरथनामानौ वरनन्दनौ ॥ ७ ॥
अतिक्रान्तशिशुत्वौ तौ कलाचार्यस्य सन्निधौ । सुविनीतौ महाप्राज्ञौ पेठतुः सत्कला इति ॥ ८ ॥
लेख्यं गणितमालेख्यं नाट्यं गीतं च वादितम् । स्वरपुष्करगतं समतालं चेति तत् त्रिधा ॥ ९ ॥
अष्टापदं नालिका जनवादं तथैव च । त्रिधा द्यूतं चाऽन्नपानविधिः शयनसंयुतः ॥ १० ॥
आभरणविधिश्चाऽऽर्या गाथा गीतिः प्रहेलिका । श्लोकश्च गन्धयुक्तश्च[1] तरुणीनां प्रसाधनम् ॥ ११ ॥
नगरस्त्रीहयहस्तीनां लक्षणानि गवां तथा । लक्षणं ताम्रचूडस्य तथा मेंढ्रस्य लक्षणम् ॥ १२ ॥

१ षण्डस्य इत्यपि पाठः ।

चक्रच्छत्रमणिदण्डकाकिणीखड्गचर्मणाम् । प्रत्येकं लक्षणानीह ज्ञातव्यानि कलाविदा ॥ १३ ॥
चन्द्रसूरग्रहगहुचरितं सूपकारता । विद्याकारो मन्त्रगतं रहस्यगतमेव च ॥ १४ ॥
व्यूहं चाऽपि प्रतिव्यूहं चारं च प्रतिचारकम् । स्कन्धावारप्रमाणं च मानं च पुरवास्तुनोः ॥ १५ ॥
स्कन्धावारपुरवास्तुनिवेशं चाऽश्वशिक्षणम् । हस्तिशिक्षा तत्त्ववादं नीतिशास्त्रं सविस्तरम् ॥ १६ ॥
धनुर्वेदमणिस्वर्णधातुवादं तथैव च । बाहुयुद्धं दण्डयुद्धं दृष्टिमुष्टयोर्युधं तथा ॥ १७ ॥
नियुद्धं वाग्युधं मर्पवह्नयपां स्तम्भनं तथा । पत्रच्छेदं वैद्यकं च कृषिर्वाणिज्यकर्म च ॥ १८ ॥
विज्ञेयो वलिपलितनाशः पक्षिरुतं तथा । कला द्विसप्ततिश्चैता विद्वद्भिः परिकीर्तिताः ॥ १९ ॥
कलाकलापसम्पूर्णौ रूपनिर्जितमन्मथौ । क्रमेण यौवनं प्राप्तौ कुमारौ तौ बभूवतुः ॥ २० ॥
सुमन्दिरपुराधीशनिहतारिनृपाऽऽत्मजे । उपयेमे मेघरथः प्रियमित्रामनोरमे ॥ २१ ॥
तस्यैव भूपतेः पुत्री कनिष्ठा रूपसंयुता । पुत्री दृढरथस्याऽपि जज्ञे सुमतिसंज्ञिका ॥ २२ ॥
नन्दिषेणमेघसेनाऽभिधानौ वरनन्दनौ । जातौ मेघरथस्याऽथ पत्नीद्वितयसंभवौ ॥ २३ ॥
पुत्रो दृढरथस्यैको रथसेनाऽभिधोऽभवत् । ते त्रयोऽपि कलाऽभ्यासं समये चक्रिरेऽखिलम् ॥ २४ ॥
राजा घनरथोऽन्येद्युः पुत्रपौत्रसमन्वितः । सिंहासननिविष्टोऽधितष्ठावास्थानमण्डपम् ॥ २५ ॥
प्रोक्ता मेघरथेनाथ नवाधीता निजात्मजाः । वत्साः ! प्रज्ञाप्रकाशाऽर्थं ब्रूत प्रश्नोत्तराणि च ॥ २६ ॥

ततस्तद्वचनाऽनन्तरमेव एकेन कनिष्ठेन पठितम्—

कथं संबोध्यते ब्रह्मा दानार्थो धातुरत्र कः ?। कः पर्यायश्च योग्यानां को वाऽलङ्करणं नृणाम् ? ॥ २७ ॥

विचिन्त्य द्वितीयेनोक्तम्—'कलाऽभ्यासः' इति ।

स च पठितवान्—

दन्डनीतिः कथं पूर्वं महाखेदे क उच्यते ? । काऽबलानां गतिर्लोकपालः कः पञ्चमो मतः ? ॥ २८ ॥

ज्येष्ठेन तस्योत्तरं दत्तम्—'महीपतिरिति'

ततश्च स पपाठ—

किमाशीर्वचनं राज्ञां का शम्भोस्तनुमण्डनम् ? । कः कर्ता सुखदुःखानां पात्रं (मूलं) च सुकृतस्य कः ? ॥ २९ ॥

अन्येषु अजानत्सु मेघरथेन तस्योत्तरमदायि—'जीवरक्षाविधिरिति' ।

स्वयं च भणितवान्—

सुखदा का शशाङ्कस्य मध्ये च भुवनस्य कः ? । निषेधवाचकः को वा का संसारविनाशिनी ? ॥ ३० ॥

राज्ञोक्तम्—'भावनेति' ।

तत्रैका गणिका तत्रोपविश्य नृपमब्रवीत् ! जीयते देव ! नान्येन कृकवाकुरयं मम[1] ॥ ३१ ॥

१ कुक्कुटः

यदि काऽन्यस्य कस्याऽपि गर्वोऽस्ति चरणायुधात् । स पादमूले भवत्समानयत्वात्मकुक्कुटम् ॥ ३२ ॥
जेष्यते कुक्कुटो मे चेत् ताम्रचूडेन कस्यचित् । तत् तस्मै संप्रदास्यामि द्रव्यलक्षमहं स्फुटम् ॥ ३३ ॥
राज्ञी मनोरमा तस्याः समाकर्ण्याथ तद्वचः । दास्या राजाज्ञया तत्राऽऽनाययद् निजकुक्कुटम् ॥ ३४ ॥
मुक्तस्तेन पणेनाऽसौ ततस्तौ नृपतेः पुरः । योद्धुं प्रवृत्तावन्योऽन्यं चञ्चूघातकृतक्षतौ ॥ ३५ ॥
चञ्चुपादप्रहारैस्तौ युध्यन्तावरुणेक्षणौ । राजसभ्यजनकृतां प्रशंसां समवापतुः ॥ ३६ ॥
तीर्थङ्करत्वादागर्भवासाद् ज्ञानत्रयाऽन्वितः । अत्रान्तरे मेघरथं राजा घनरथोऽब्रवीत् ॥ ३७ ॥
चिरं युद्धाऽनयोर्मध्याद् वत्स ! नैकोऽपि जेष्यति । पृष्टोऽथ कारणं तेन पुनरेवं जगाद सः ॥ ३८ ॥
इहैव भरतक्षेत्रेऽभूतां रत्नपुरे पुरे । धनदसुदत्तसंज्ञौ वणिजौ मित्रतां गतौ ॥ ३९ ॥
वाहयन्तौ बलीवर्दौ क्षुत्तृष्णाभरपीडितौ । व्यवहारं सदा गत्वा चक्रतुः सममेव तौ ॥ ४० ॥
मिथ्यात्वमोहितौ कूटतुलामानविधानतः । अर्जयामासतुर्वित्तं तौ चाल्पं परवञ्चकौ ॥ ४१ ॥
अन्यदा कलहायन्तौ तौ प्रहृत्य परस्परम् । विपद्य चार्तध्यानेन संजातौ वनदन्तिनौ ॥ ४२ ॥
कूले सुवर्णकूलाया वर्द्धमानौ बभूवतुः । काञ्चनताम्रकलशाऽभिधानौ यूथनायकौ ॥ ४३ ॥
तौ च यूथस्य लोभेन युद्ध्वा मृत्वा बभूवतुः । सैरिभौ पुर्ययोध्यायां नन्दिमित्रस्य मन्दिरे ॥ ४४ ॥
गृहीत्वा राजपुत्राभ्यां योधितौ तौ परस्परम् । विपद्य पुरि तत्रैव संजातौ मेषकौ दृढौ ॥ ४५ ॥

मिथः शृङ्गाऽग्रघातेन भिन्नशीर्षौ सविस्मयम् । मृत्वेमौ कुक्कुटौ जातौ रोषाऽरुणविलोचनौ ॥ ४६ ॥
ततश्च नैतयोर्मध्याद् वत्सैकोऽपि विजेष्यते । इति श्रुत्वा मेघरथोऽवधिज्ञानी शशंस च ॥ ४७ ॥
न केवलमिमौ तात ! मत्सरावेष्टितौ दृढम् । खेचराधिष्ठितौ चाऽत्र कारणं कथयामि वः ॥ ४८ ॥
अस्त्यत्र भरतक्षेत्रे वैताढ्यवरपर्वते । सुवर्णनाभं नगरमुत्तरश्रेणिभूषणम् ॥ ४९ ॥
तत्राऽऽसीद् गुरुडवेगाऽभिधानः खेचरेश्वरः । तस्य पुत्रौ चन्द्रसूरतिलकाऽऽख्यौ नभश्चरौ ॥ ५० ॥
अन्यदा तौ नमस्कर्तुं प्रतिमाः शाश्वतार्हताम् । जग्मतुर्मेरुशिखरे जिनस्नात्रपवित्रिते ॥ ५१ ॥
तत्र सागरचन्द्राऽऽख्यं चारणश्रमणं वरम् । दृष्ट्वा प्रणेमतुः स्वर्णशिलाऽऽसीनमिमौ मुदा ॥ ५२ ॥
पृष्टो मुनिवरस्ताभ्यां निजपूर्वभवस्थितिम् । सोऽपि ज्ञानेन विज्ञाय कथयामास ताविति ॥ ५३ ॥
अस्तीह धातकीखण्डद्वीपस्यैरवते पुरम् । नाम्ना वज्रपुरं तत्राऽभयघोषोऽभवद् नृपः ॥ ५४ ॥
सुवर्णतिलका तस्य राज्ञी तत्कुक्षिसम्भवौ । अभूतां जयविजयाऽभिधानौ वरनन्दनौ ॥ ५५ ॥
इतः सुवर्णनगरस्वामिनः शङ्खभूपतेः । पृथ्वीदेवीभवा पृथ्वीसेना नाम्नी सुकन्यका ॥ ५६ ॥
भूपस्याऽभयघोषस्य समायाता स्वयंवरा । परिणीताऽतिहर्षेण तेनासौ मृगलोचना ॥ ५७ ॥
अन्यदाऽथ वसन्ततौं सुपुष्पवनबन्धुरे । ययौ क्रीडितुमुद्याने राजा राज्ञीशतान्वितः ॥ ५८ ॥
भ्रमन्त्या तत्र तत्पत्न्या पृथ्वीसेनाऽभिधानया । अदर्शि दान्तदमनाऽभिधानो मुनिपुङ्गवः ॥ ५९ ॥

तत्पार्श्वे धर्ममाकर्ण्य तथा च प्रतिबुद्धया । अनुज्ञाप्य महीपालं प्रव्रज्यां प्रत्यपद्यत ॥ ६० ॥
राजाऽप्युद्यानलक्ष्मीं तामनुभूय ययौ पुरम् । प्राप्तश्च तद्गृहेऽन्येद्युश्छद्मस्थोऽनन्ततीर्थकृत् ॥ ६१ ॥
प्राशु(सु)कैरन्नपानैश्च स तेन प्रतिलाभितः । चक्रिरे पञ्च दिव्यानि तद्गृहे च दिवौकसः ॥ ६२ ॥
उत्पन्नकेवलस्याऽस्य समीपे स महीपतिः । तनयाभ्यां समं ताभ्यां प्रव्रज्यां प्रतिपन्नवान् ॥ ६३ ॥
विंशतिस्थानकैस्तीर्थकरकर्म निबध्य सः । कृत्वा कालं ससुतोऽप्यच्युतकल्पे सुरोऽभवत् ॥ ६४ ॥
ततश्च्युतोऽभयघोषजीवः स्वस्याऽऽयुषः क्षये । राजा घनरथो जज्ञे हेमाङ्गदनृपाऽऽत्मजः ॥ ६५ ॥
जीवौ जयविजययोः सञ्जातौ वां दिवश्च्युतौ । इति तेनाऽनगारेण तयोस्तात ! निवेदितम् ॥ ६६ ॥
ततस्तौ द्रष्टुमुत्कौ त्वामिहाऽऽयातौ नभश्चरौ । अपश्यतां युध्यमानौ कौतुकात् कुर्कुटाविमौ ॥ ६७ ॥
ताभ्यामधिष्ठितावेतौ विद्यया तस्थतुश्च तौ । इहैव गोपयित्वा स्वं स्वविद्यायाः प्रभावतः ॥ ६८ ॥
वाक्यं मेघरथस्येदं श्रुत्वा तौ खेचरावुभौ । राज्ञो घनरथस्यांह्री प्रकटीभूय नेमतुः ॥ ६९ ॥
तौ पूर्वभवतातस्य तस्य नत्वा क्रमद्वयम् । क्षणं स्थित्वा निजं स्थानं पुनरेव प्रजग्मतुः ॥ ७० ॥
ततो दीक्षां गृहीत्वा तौ तपस्तप्त्वा सुदुश्चरम् । उत्पन्नकेवलज्ञानौ सनातनपदं गतौ ॥ ७१ ॥
अथ तौ कुर्कुटौ सर्वां श्रुत्वा पूर्वभवस्थितिम् । महापापविधातारं मनसा स्वं निनिन्दतुः ॥ ७२ ॥

१ कुक्कुटकुर्कुटशब्दयोः पर्यायत्वात् केषुचित् पुस्तकेषु कुक्कुटशब्दस्य केषुचन च कुर्कुटस्योल्लेखः ।

प्रणम्य चरणद्वन्द्वं राज्ञो घनरथस्य तौ । स्वभाषयोचतुश्चैवमावां किं कुर्वहे प्रभो ! ? ॥ ७३ ॥
ततो राज्ञा समभ्यक्तो धर्मोऽहिंसाऽऽदिलक्षणः । तयोर्निवेदितस्ताभ्यां भावमार्गं प्रतीप्सितः ॥ ७४ ॥
प्रायं कृत्वा विपन्नौ तौ देवयोनी बभूवतुः । ताम्रचूलस्वर्णचूलौ भूतौ भूताऽटव्यां गतौ ॥ ७५ ॥
ततो विमानमारुह्याऽऽगत्य नत्वा महीपतिम् । कृतोपकारं तं प्राशंसतां विरचिताञ्जली ॥ ७६ ॥
राजानं समनुज्ञाप्य जग्मतुस्तौ स्वमाश्रयम् । राजाऽपि पालयामास राजलक्ष्मीमसौ चिरम् ॥ ७७ ॥
एत्य लोकान्तिकैर्देवै राजा घनरथोऽन्यदा । तीर्थं प्रवर्तयेत्युक्त्वा दीक्षाकालं विबोधितः ॥ ७८ ॥
दत्त्वा सांवत्सरं दानं राज्ये मेघरथं सुतम् । स्थापयित्वा स जगृहे दीक्षां देवेन्द्रवन्दितः ॥ ७९ ॥
उत्पाद्य केवलज्ञानं भविकान् प्रतिबोधयन् । विजहार महीपीठे श्रीमान् घनरथो जिनः ॥ ८० ॥
युक्तो दृढरथेनाऽथ युवराजेन मत्प्रियः । उद्याने देवरमणे ययौ मेघरथोऽन्यदा ॥ ८१ ॥
तत्राऽशोकतरोर्मूले निविष्टस्याऽस्य भूपतेः । पुरोभूतैः समारब्धा कैश्चित् प्रेक्षणकक्रिया ॥ ८२ ॥
नानाशस्त्रधराः कृत्तिवाससो भूतिमण्डिताः । तेऽतीव विस्मयकरं नृत्यं विदधिरे क्षणम् ॥ ८३ ॥
तेषु नृत्यं प्रकुर्वत्सु किङ्किणीकेतुमालितम् । विमानमेकमाकाशादाययौ नृपमभितो ॥ ८४ ॥
तन्मध्ये सुन्दराऽऽकारं नारीपुरुषयोर्युगम् । दृष्ट्वा पप्रच्छ कावेताविति देवी महीपतिम् ॥ ८५ ॥
राजा प्रोवाच हे देवि ! शृणु वैताढ्यपर्वते । उत्तरस्यां वरश्रेण्यां नगरी विद्यतेऽलका ॥ ८६ ॥

विद्युद्रथखेचरेन्द्रपुत्रस्तत्र महाभुजः । अयं सिंहरथो नाम्ना सर्वविद्याधरेश्वरः ॥ ८७ ॥
इयं वेगवतीनाम्नी भार्याऽस्य सहितोऽनया । गतोऽभूद् धातकीखण्डद्वीपेऽसौ वन्दितुं जिनम् ॥ ८८ ॥
ततो निवर्तमानोऽसौ यावदागादिह प्रिये ! । प्रतिघातो गतेस्तावदस्याऽभूत् सहसैव हि ॥ ८९ ॥
मां दृष्ट्वाऽचिन्तयदसौ सामान्योऽयं नृपो न हि । यत्प्रभावेण सञ्जाता विमानस्खलना मम ॥ ९० ॥
ततोऽनेन प्रहृष्टेन भूतरूपाण्यनेकशः । कृत्वा मम पुरश्चक्रे प्रिये ! प्रेक्षणकौतुकम् ॥ ९१ ॥
पप्रच्छैवं पुनर्देवी किमनेन पुराभवे ? । सुकृतं विहितं येन जाता नाथर्द्धिरीदृशी ॥ ९२ ॥
राजोवाच प्रिये ! पूर्वं पुरे सङ्खपुराऽभिधे । राजगुप्ताऽभिधः कश्चिद् बभूव कुलपुत्रकः ॥ ९३ ॥
शङ्खिका नाम तद्भार्या निर्धनत्वेन पीडितौ । तौ कृत्वाऽन्यगृहे कर्म प्राणवृत्तिं वितेनतुः ॥ ९४ ॥
काष्ठाद्यर्थमथान्येद्युर्गताभ्यां काननान्तरे । दृष्ट्वा भक्तिवशात् ताभ्यां साधुरेको नमस्कृतः ॥ ९५ ॥
उपदिष्टस्तयोरग्रे तेन धर्मो जिनोदितः । विधिनाऽऽराधितश्चिन्तामणिकल्पद्रुमोपमः ॥ ९६ ॥
जन्मान्तरोपार्जितानां पापानामन्तकारकम् । आदिष्टं च तपो द्वात्रिंशत्कल्याणाऽभिधं वरम् ॥ ९७ ॥
त्रिरात्रद्वितयं तत्र भवेच्चातुर्थिकानि च । द्वात्रिंशदिति ताभ्यां तद् विदधे भक्तिपूर्वकम् ॥ ९८ ॥
तस्य पारणके ताभ्यां मुनिरेको गृहागतः । प्रणम्य प्रासुकैर्भक्तपानाद्यैः प्रतिलाभितः ॥ ९९ ॥
प्रतिपन्नाऽथ कालेन ताभ्यामप्यनगारता । राजगुप्तः स चाऽऽचाम्लवर्धमानं तपोऽकरोत् ॥ १०० ॥

आयुःक्षये विपन्नोऽसौ ब्रह्मलोके सुरोऽभवत् । ततश्च्युतः सिंहरथाऽभिधोऽयं ममभून् प्रिये ! ॥ १०१ ॥
शङ्खिका च तपः कृत्वा कल्पे गत्वा च पञ्चमे । इयं वेगवतीनाम्नी जज्ञेऽस्यैव हि वल्लभा ॥ १०२ ॥
इति मेघरथप्रोक्तमाकर्ण्य चरितं निजम् । प्रतिबुद्धः सिंहरथो गतो निजगृहं ततः ॥ १०३ ॥
निवेश्य तनयं राज्ये प्रियया सहितस्तथा । श्रीघनरथतीर्थेशपादान्ते व्रतमग्रहीत् ॥ १०४ ॥
घोरं कृत्वा तपःकर्माऽवाप्य केवलमुत्तमम् । धौतकर्ममलः सिद्धिं ययौ सिंहरथो मुनिः ॥ १०५ ॥
वनाद् गेहं समायातो राजा मेघरथोऽन्यदा । मुक्ताऽलङ्करणाऽऽरम्भो विदधे पौषधव्रतम् ॥ १०६ ॥
मध्ये पौषधशालायाः स्थितो योगाऽऽसने सुधीः । पुरः समस्तभूपानां विदधे धर्मदेशनाम् ॥ १०७ ॥
अत्रान्तरे कम्पमानशरीरस्तरलेक्षणः । संवृत्तोऽस्मि महाराज ! तवाऽहं शरणाऽऽगतः ॥ १०८ ॥
इति जल्पन् मनुष्योक्त्या कुतोऽप्येत्य भयद्रुतः । पपात भूपतेः क्रोडे पक्षी पारापताऽभिधः ॥ १०९ ॥ ( युग्मम् )
भयभीतममुं दृष्ट्वा दयालुः स महीपतिः । प्रोचे त्वं भद्र ! मा भैषीः कुतोऽपि मम सन्निधौ ॥ ११० ॥
एवमाभाषितो राज्ञा निर्भयः समभूदसौ । तावत् तत्र समायातः क्रूरः श्येनाऽभिधो द्विजः ॥ १११ ॥
सोऽवदत् शृणु राजेन्द्र ! त्वदुत्सङ्गगतोऽस्ति यः । पारापतः स मे भक्ष्यं तं मुञ्च क्षुधितोऽस्म्यहम् ॥ ११२ ॥
जजल्प भूपतिर्भद्र ! ममाऽयं शरणाऽऽगतः । युक्तो नाऽर्पयितुं येन पठन्त्येवं मनीषिणः ॥ ११३ ॥
शूरस्य शरणाऽऽयातोऽहेर्मणिश्च सटा हरेः । गृह्यन्ते जीवतां नैतेऽमीषां मत्या उरस्तथा ॥ ११४ ॥

परप्राणैर्निजप्राणपोषणं पुण्यशोषणम् । तत्राऽपि नोचितं स्वर्गत्यागं श्वभ्रकारणम् ॥ ११५ ॥
छिद्यमानेऽप्येकपिच्छे यथा ते जायते व्यथा। तथाऽन्येषामपि भवेदिदं चित्ते विभावय ॥ ११६ ॥
भाविनी ते क्षणं तृप्तिः पललेऽप्यस्य भक्षिते । सर्वप्राणविनाशोऽस्येति चित्ते परिभावय ॥ ११७ ॥
पञ्चेन्द्रियाणां जीवानां वधं कृत्वा दुराशयाः । गच्छन्ति नरकं जीवा इदं चित्ते विभावय ॥ ११८ ॥
श्रूयते जीवहिंसावान् निषादो नरकं गतः । दयाऽऽदिगुणयुक्ता च वानरी त्रिदिवं गता ॥ ११९ ॥
इहाऽऽसीदमरावत्याः शाखानगरसन्निभा । शाखामृगशताऽऽकीर्णा हरिकान्ताऽभिधा पुरी ॥ १२० ॥
तत्राऽभूत् पृथिवीपालो हरिपालाऽभिधः सुधीः। हरीणां पालनत्वेन यदाख्या सत्यतां गता ॥ १२१ ॥
तस्यामेव पुरि क्रूरो यमकिङ्करसन्निभः । कृतघ्नो निर्दयश्चाऽभूद् निषादो नाम घातकः ॥ १२२ ॥
स पापर्द्धिरतः पापो गत्वा नित्यं वनान्तरे । जघानाऽनेकशो जीवान् वराहहरिणादिकान् ॥ १२३ ॥
इतस्तस्मिन् पुरासन्ने वनेऽनेकद्रुमाकुले । भूपप्रसादबलिनो वसन्ति स्म वलीमुखाः[1] ॥ १२४ ॥
तन्मध्ये वानरी काऽपि कापेयविरता[2] सदा । हरिप्रियाऽभिधानाऽभूद् दयादाक्षिण्यशालिनी ॥ १२५ ॥
एकदा च निषादोऽयं नृशंसः शस्त्रपाणिकः । अपश्यत् पुरतो घोरं मृगारिं मृगयापरः ॥ १२६ ॥
सप्राणो[3]ऽपि ततः प्राणभयभीतो द्रुतं द्रुतम् । नंष्ट्वा क्वापि समासन्नेऽधिरूढो जगतीरुहे[4] ॥ १२७ ॥

१ वानराः । २ कपिकर्मणा चापल्येन रहिता । ३ पराक्रमसहितः। ४ वृक्षे ।

समारोहन्नसौ तत्र पादपे समलोकयत् । विवृतास्यां भयात् तस्य पूर्वारूढां हरिप्रियाम् ॥ १२८ ॥
यस्य बाणप्रहारेण मातङ्गोऽपि विपद्यते । सोऽस्या अपि तदा भीतो यद् भयी भयमीक्षते ॥ १२९ ॥
व्याघ्रात् त्रस्तं तमुद्वीक्ष्य वानरी सा झटित्यपि । प्रविहायाऽऽत्मनः क्षोभं प्रसन्नवदनाऽभवत् ॥ १३० ॥
विश्वस्तोऽभूद् निषादोऽथ निषण्णश्च तदन्तिके । मा तस्य शिरसः केशान् व्यावृणोद् बन्धुवत्सला॥ १३१ ॥
तदुत्सङ्गे शिरः कृत्वा सुप्तोऽसौ विटपाश्रितः । वीक्ष्य निद्रायमाणं तं व्याघ्रः प्रोवाच वानरीम् ॥ १३२ ॥
भद्रे ! नोपकृतिं वेत्ति सर्वः कोऽपि महीतले । मनुष्यस्तु विशेषेणाऽस्मिन्नर्थे श्रूयतां कथा ॥ १३३ ॥
एकस्मिन् सन्निवेशेऽभूत् शिवस्वामीति स द्विजः । स्वतीर्थवन्दनाहेतोर्निरगान्निजमन्दिरात् ॥ १३४ ॥
एकस्यां पतितोऽटव्यां तृष्णार्तोऽन्वेषयन् जलम् । पुराणकूपमद्राक्षीद् गूढं तरुलतादिभिः ॥ १३५ ॥
कृत्वा दाम तृणैस्तेन बद्ध्वा च करपत्रकम् । कूपान्तः क्षेपयामास जलार्थं मोऽजडाशयः ॥ १३६ ॥
रज्ज्वा तत्र विलग्यैको निर्ययौ कूपकात् कपिः । सफलोऽयं ममारम्भ इति दध्यौ द्विजोऽपि हि ॥ १३७ ॥
पुनर्द्वितीयवेलायां व्याघ्रसर्पौ विनिर्गतौ । ब्राह्मणस्यांह्रियुग्मं ते प्रणेमुः प्राणदायिनः ॥ १३८ ॥
मतिमान् वानरस्तेषु जातिस्मरणपण्डितः । द्विजातिं ज्ञापयामास लिखित्वेत्यक्षरावलिम् ॥ १३९ ॥
वसामो मथुरोपान्ते वयं तत्र त्वयाऽपि हि । समागम्यं ततः किञ्चित् स्वागतं ते करिष्यते ॥ १४० ॥
कूपेऽमुष्मिन्मनुष्योऽपि पतितोऽस्ति परं त्वया । नह्युत्तार्यो यतः सोऽयं कृतघ्नः किं करिष्यति ? ॥ १४१ ॥

इत्युदीर्य ययुस्तेऽथ चिन्तयामास स द्विजः। कथमेष मनुष्योऽपि वराको न हि कृष्यते ? ॥ १४२ ॥
सर्वस्याऽप्युपकारो हि विधातव्यः स्वशक्तितः। मनुष्यजन्मनः सारमेतदेव निगद्यते ॥ १४३ ॥
कूपे क्षिप्त्वा ततो रज्जुं सोऽप्याऽऽकृष्टो द्विजन्मना। कोऽसि त्वं कुत्र वास्तव्य इति पृष्टो जगाद च ॥ १४४ ॥
अहं हि मथुरावासी स्वर्णकारोऽत्र केनचित्। कारणेनाऽऽगतः कूपे पतितः तृष्णयाऽर्दितः ॥ १४५ ॥
कूपान्तरप्ररूढस्य शाखामालम्ब्य शाखिनः। यावदस्थामहं तावत्ते पेतुर्वानरादयः ॥ १४६ ॥
समानव्यसनत्वाच्च त्यक्तवैराः परस्परम्। परोपकाररसिक ! त्वया जीवापिता वयम् ॥ १४७ ॥
मथुरायां समागच्छेरित्युदित्वा ययौ च सः। द्विजश्च क्रमयोगेण तत्र प्राप्तो भुवि भ्रमन् ॥ १४८ ॥
ततोऽसौ वानरो दक्षस्तमुद्वीक्ष्योपलक्ष्य च। हृष्टः सन्मानयामास तत्कालं पेशलैः फलैः ॥ १४९ ॥
व्याघ्रोऽपि तस्य सन्मानं विधातुं वाटिकां गतः। जघान चाऽविवेकित्वात् तत्र राजसुतं बलात् ॥ १५० ॥
तस्याऽऽभरणमादाय बहुमूल्यं सुखेन सः। ब्राह्मणाय ददौ तस्मै जीवितव्यप्रदायिने ॥ १५१ ॥
कृतप्रमाणं दीर्घायुर्भवेत्याशीर्गिरा स तम्। तुष्टस्तुष्टाव किं कोऽपि नोपकारेण तुष्यति ? ॥ १५२ ॥
ततश्च ब्राह्मणो नत्वा मथुरायां जनार्दनम्। पृच्छन् पृच्छन् पुरीमध्ये स्वर्णकारगृहं ययौ ॥ १५३ ॥
सलोभो लोलुपो दूरादीषद् दृष्ट्वयाऽवलोकय तम्। अधोदृष्टिस्तथैवाऽस्थाद् रचयन् भूषणादिकम् ॥ १५४ ॥
ब्राह्मणः स्माह भोः ! किं नु नाडिन्धम ! न वेत्सि माम् ?। सम्यग् नाहं विजानामीत्युक्ते तेनाऽवदत् पुनः ॥ १५५

येन त्वमटवीमध्ये पुरा कूपात् समुद्धृतः । सोऽस्मि द्विजो महाभागाऽऽगतः प्राघुर्णिकस्तव ॥ १५६ ॥
ततोऽसावुपविष्टः सन्नीपन्नप्रो ननाम तम् । ढौकयित्वाऽऽसनं किं ते करोमीति जगाद च ? ॥ १५७ ॥
भूषणं दर्शयित्वाऽथ विप्रः प्रोवाच मुंष्टिकम् । दक्षिणायामिदं लब्धं मया क्वापि कुतोऽपि हि ॥ १५८ ॥
अस्य मूल्यविधौ धीमांस्त्वमेवाऽसि महाशय ! । तद्गृहीत्वा यथायोग्यं मूलं मह्यं प्रयच्छ मे ॥ १५९ ॥
इति तस्याऽर्पयित्वा तन्नद्यां स्नातुं ययौ द्विजः । शुश्राव स्वर्णकारश्च पटहोद्घोषणामिमाम् ॥ १६० ॥
हत्वाऽद्य राजतनयं केनाऽप्यात्तं विभूषणम । यस्तं वेत्ति स आख्यातु वध्योऽसौ भूपतेर्यतः ॥ १६१ ॥
इत्याऽऽकर्ण्य कलादोऽपि वितर्काऽऽकुलितोऽभवत् । मयैव घटितं ह्येतदिति सम्यग् विवेद च ॥ १६२ ॥
दध्यौ चासंस्तुतो[2] मेऽयं श्रोत्रियो गोत्रिकश्च न । तत्कथं युज्यते कर्तुमस्याऽर्थेऽनर्थमात्मनः ? ॥ १६३ ॥
ततश्च पटहं धृत्वा गत्वा दत्त्वा च भूषणम् । राज्ञे तदपहर्तारं ब्राह्मणं तं न्यवेदयत् ॥ १६४ ॥
राज्ञाऽऽज्ञाप्य निजान् पत्तीन् स बद्ध्वाऽऽनायितस्ततः । पृष्टाः पौराणिकाः किं भोः ! युज्यतेऽत्र ममेत्यथ ? १६५
तेऽप्योचन् वेदवेदाङ्गपारगोऽपि द्विजोत्तमः । महाहत्याकरो राज्ञा वध्यो नास्त्यत्र पातकम् ॥ १६६ ॥
रासभारोपितं कृत्वा राजाऽऽदेशात् पदातयः । रक्तचन्दनलिप्तं च तं निन्युर्वध्यभूमिकाम् ॥ १६७ ॥
नीयमानो महात्माऽसौ चिन्तयामास चेतसि । अहो ! मे दैवदोषेण कीदृशी दुर्दशाऽभवत् ? ॥ १६८ ॥

१ स्वर्णकारं । २ अपरिचितः ।

अहो! दुष्टस्य धृष्टस्य मुष्टिकस्य कृतघ्नता। व्याघ्रवानरयोः पश्य कीदृशी च कृतज्ञता? ॥ १६९ ॥
स्मृत्वा तदुदितं वाक्यमात्मनश्चाज्ञतां पुनः। पश्चात्तापाऽभितप्ताङ्गः श्लोकयुग्मं पपाठ सः ॥ १७० ॥
व्याघ्रवानरसर्पाणां यन्मया न कृतं वचः। तेनाहं दुर्विनीतेन कलादेन विनाशितः ॥ १७१ ॥
वेश्याऽक्षकुक्कुराश्चौरनीरमार्जारमर्कटाः। जातवेदाः कलादश्च न विश्वास्या इमे क्वचित् ॥ १७२ ॥
इदं पुनः पुनस्तेन पठ्यमानं निशम्य सः। तं च विज्ञाय तत्रस्थो भुजगोऽचिन्तयच्चिदम् ॥ १७३ ॥
वयं येनोद्धृताः कूपात् पुराऽरण्ये महात्मना। स एवाऽद्य महीदेवो व्यसने पतितो हहा। ॥ १७४ ॥
उक्तश्च—
उपकारिणि विश्रब्धे साधुजने यः समाचरति पापम्। तं जनमसत्यसन्धं भगवति! वसुधे! कथं वहसि? १७५
इयत्यपि गते सोऽहं कृत्वा किञ्चिद्विधानकम्। यास्याम्यस्योपकारस्यानृण्यं बुद्धिवशाद् द्रुतम् ॥ १७६ ॥
ततश्च वाटिकां गत्वा क्रीडन्तीं सममालिभिः। लतागुल्मान्तरीभूय सोऽदशद् राजनन्दिनीम् ॥ १७७ ॥
निराधारा लतेवैषा मूर्च्छिताङ्ग्यपतद्भुवि। सख्यस्तूर्णं तदाचख्युः पूत्कुर्वत्यो महीपतेः ॥ १७८ ॥
राजा च तत् समाकर्ण्य स्फूर्जथुप्रतिमं वचः। महाशोकाकुलः काममाबाधाविधुरोऽवदत् ॥ १७९ ॥
यावन्नैकस्य दुःखस्य पारमामाद्यते मया। द्वितीयं ढौकितं तावच्छिद्रेऽनर्था भवन्त्यहो! ॥ १८० ॥

१ अग्निः। २ ब्राह्मणः। ३ उपायम्। ४ वज्रघातोपमं।

मान्त्रिकास्तान्त्रिकाश्चैव समाहूता महीभुजा। चिकित्सा च समारब्धा तत्रैको मान्त्रिकोऽवदत् ॥ १८१ ॥
ममास्ति निर्मलज्ञानं तेन जानामि भूपते ! । योऽसौ व्यापाद्यते विप्रस्तमवेहि निरागसम् ॥ १८२ ॥
अनेन किल कान्तारे पुरा कूपात् समुद्धृताः । व्यालवानरशार्दूलाः कलादश्च चतुर्थकः ॥ १८३ ॥
सोऽयमत्राऽऽगतोऽपूजि वानरेण फलादिभिः। अस्य पूजाकृते राजन् ! हतो व्याघ्रेण ते सुतः ॥ १८४ ॥
व्याघ्रदत्तं तमादायाऽलङ्कारमृजुधीरयम् । पार्श्वे कृतोपकारस्य कलादस्य समागतः ॥ १८५ ॥
कलादवचसा देव ! भवता हन्तुमादरात् । समादिष्टोऽथ दष्टश्च भोगिना तेन सोऽध्वनि ॥ १८६ ॥
ततश्च तद्विमोक्षार्थं दष्टा युष्मत्सुताऽमुना । यद्येष मुच्यते विप्रस्तदा जीवत्यसावपि ॥ १८७ ॥
अत्रार्थे प्रत्ययः कश्चिदित्युक्ते भूभुजाऽथ सः । तत्रावतारयामास मान्त्रिकस्तं महोरगम् ॥ १८८ ॥
तेनाप्यनुमतं सर्वं यदुक्तं मन्त्रवादिना । संजातप्रत्ययो राजा ततश्चाऽमोचयद् द्विजम् ॥ १८९ ॥
मुक्तं दृष्ट्वा द्विजन्मानमुरगो गौरवान्वितम् । प्रत्याजहार गरलमात्मीयं दंशधावनात् ॥ १९० ॥
अथ सा राजतनया कौमुदीवोदयं ययौ । राजलोकस्तदा सर्वो बभूव कुमुदोपमः ॥ १९१ ॥
तस्य द्विजन्मनश्चाऽग्रे कथयामास मान्त्रिकः । यत्ते दत्तं जीवदानं पन्नगेनाऽमुना खलु ॥ १९२ ॥
विप्रोऽवोचदहो ! रम्यं चरित्रं देहिनामिह । क्रूरा अपि कृतज्ञत्वं दधत्यन्ये कृतघ्नताम् ॥ १९३ ॥
दधात्यसौ भूतधात्री द्वावेव पुरुषौ सदा । उपकारे मतिर्यस्य यश्च नोपकृतं हरेत् ॥ १९४ ॥


॥ १०१ ॥

ततश्च विस्मयाद्राज्ञा पृष्टः कथयति स्म सः । समारभ्य प्रवासादिबन्धनान्तां निजां कथाम् ॥ १९५ ॥
पुनः स्माह महाराज ! सुखदुःखकृतौ कृती । ध्रुवं कृतान्त एवैकः सर्वेषामिह देहिनाम् ॥ १९६ ॥
तत्कथाश्रवणाद् गाढं तुष्टेनाऽथ महीभुजा । शिवस्वामी कृतः स्वामी विषयस्य गरीयसः ॥ १९७ ॥
शिवस्वाम्यपि देशे स्वे कृतज्ञैकशिरोमणिः । प्रावर्तयन्नागपूजाविधाने नागपञ्चमीम् ॥ १९८ ॥
कथयित्वा कथामेतां पुनर्व्याघ्रोऽब्रवीदिदम् । हरिप्रिये ! यथा तेन सरलेन द्विजन्मना ॥ १९९ ॥
कलादाद्विपदः प्राप्ता निषादोऽयं तथैव हि । विधाता ते महानर्थं तन्मुञ्चैनं ममाऽशनम् ॥ २०० ॥ ( युग्मम् )
एवमुक्ताऽपि नाऽमुञ्चत् साधुप्रकृतिवानरी । यावत्तावत् स आसीनो व्याघ्रस्तस्य तरोरधः ॥ २०१ ॥
इति व्यचिन्तयदहो ! तिरश्चामपि चेतसि । मैत्र्यादिर्दृश्यते बुद्धिर्दुर्लभा या तु योगिनाम् ॥ २०२ ॥
प्रबुद्धस्याऽथ दुष्टस्य निषादस्य दुरात्मनः । अस्वपद् वानरी साऽपि निवेश्याऽङ्के निजं शिरः ॥ २०३ ॥
व्याघ्रोऽप्यभ्यासमागत्य तं जगाद निषादकम् । मित्रं मामनया कृत्वा निर्भयो भव सर्वतः ॥ २०४ ॥
सप्ताहक्षुधितस्यैनां समर्पय न चेद्थ । प्रभृतेनाऽपि कालेन स्वगृहं न गमी ततः ॥ २०५ ॥
अपरं च न सङ्गोऽस्याः शुभोदर्काय ते ध्रुवम् । नाश्रौषीस्त्वं पुरा किं वा वानरेण हतो नृपः ?॥ २०६ ॥
इत्यर्थे श्रूयतां भद्र ! प्रथयामि कथामहम् । महर्षेः स निषादोऽपि प्राहाऽऽख्याहि शृणोम्यहम् ॥ २०७ ॥

१ समीपं ।

पुरे नागपुरे भूपः स्वरूपजितमन्मथः । शत्रुवंशवजस्यासीद्दावाभः पावकाह्वयः ॥ २०८ ॥
वाहकेल्यां शूकलेन वाजिना काननेऽन्यदा । बलान्नीतो नृपो दूरमध्वानं प्रतिलङ्घ्य सः ॥ २०९ ॥
एकाकिनो वने तस्मिन् भ्रमतो नृपनेस्तदा । क्षुधितस्य तृषार्तस्य मिलितः कोऽपि वानरः ॥ २१० ॥
फलान्यानीय रम्याणि तेन दत्तानि भूभुजे । दर्शितं शुचिपानीयपूर्णं चापि सरोवरम् ॥ २११ ॥
फलान्यास्वाद्य पीत्वा च वारि हारि धरापतिः । आससाद परां प्रीतिं मनसस्तावदागतम् ॥ २१२ ॥
तत्सैन्यं मन्त्रिसामन्तवाजिवारणबन्धुरम् । नीतोऽसौ वानरो राज्ञा कृतज्ञेन निजं पुरम् ॥ २१३ ॥
बुभुजे सोऽथ पक्वान्नं मोदकादि मुहुर्मुहुः । फलानि कदलीचूतप्रमुखानि नृपाऽऽज्ञया ॥ २१४ ॥
स्मरन्नुपकृतिं तां च तं सदा निजपार्श्वगम् । चकार नृपतिश्चैषा प्रकृतिः पौरुषी यतः ॥ २१५ ॥
वसन्ते सङ्गतेऽन्येद्युः कामिनां चित्तशालिनाम् । ऋतौ पुष्पफलाकीर्णे कानने कामिवाञ्छिते ॥ २१६ ॥
अन्दोलजलकेल्यादि प्रक्रीड्य कदलीगृहे । सुष्वाप श्रमनाशाय प्लवगे त्वङ्गरक्षके ॥ २१७ ॥ ( युग्मम् )
कुधिया कपिना तेन स्वामिभक्तत्वमानिना । भ्रमरव्याजतो राज्ञः कृत्ता खड्गेन कन्धरा ॥ २१८ ॥
यथा तेन क्षितीशेन हितादपि हि वानरात् । प्राप्तं तु मरणं तस्मात्तदिदं श्रेयसे न ते ॥ २१९ ॥
इत्याकर्ण्य कथा तेन व्याधेनाऽऽशु हरिप्रिया । पातिनाऽस्य मृगारातेः पुरः प्रोवाच तामसौ ॥ २२० ॥

१ स्वादु ।

न धार्यं हृदये दुःखं भद्रे ! प्राप्ता त्वया ननु । तादृशी फलसम्प्राप्तिर्यादृशः सेवितो नरः ॥ २२१ ॥
प्रत्युत्पन्नमतिः साऽथ व्याघ्रं स्माह स्वसंज्ञया । रक्षणीया त्वया नाऽहं भक्षणीयैव केवलम् ॥ २२२ ॥
हितं ते वच्म्यदो वाक्यं वानराणां मृगाधिप !। प्राणा वसन्ति लाङ्गूले ग्राह्यास्तत्रैव तत्त्वया॥ २२३ ॥
तथैव कृतवान् व्याघ्रः सहसा साऽपि वानरी। वृक्षे त्वरितमारूढा पुच्छं मुक्त्वा मुखेऽस्य तत् ॥ २२४ ॥
विलक्षवदनो व्याघ्रो व्याघुट्याऽगाददृश्यताम् । उत्ततार ततो वृक्षात् सनिषादा च वानरी ॥ २२५ ॥
अग्रे भूत्वा तथा निन्ये स स्वावासे लताश्रये। तस्याः शिशवस्तत्राऽसंस्तेषां पार्श्वे निवेश्य तम्॥ २२६ ॥
विधातुं स्वागतं तस्य सा त्वनालस्यशालिनी । वनमध्ये ययौ स्वादुफलानयनहेतवे ॥ २२७ ॥ (युग्मम्)
जिघत्सुना निषादेन तदपत्यानि तान्यपि । खादितानि कुतः कृत्याकृत्यवेदो दुरात्मनाम् ? ॥ २२८ ॥
फलान्यादाय स्वादूनि वानरी यावदाययौ । तावत्सुप्तं निषादं तमपश्यन्न च तान् शिशून् ॥ २२९ ॥
तथाऽप्युत्थाप्य यत्नेन दत्त्वा चाऽस्मै फलानि सा । अपत्याऽन्वेषणं कर्तुं सार्धं तेन प्रचक्रमे ॥ २३० ॥
पातिताऽपि पुरा वृक्षादपत्येष्वशिनेष्वपि । प्रतिपन्नमगर्भेऽस्मिन् नाशशङ्के तथाऽप्यसौ ॥ २३१ ॥
दध्यौ चित्ते निषादोऽपि विषादाकुलितो भृशम्। अहो ! मेऽद्य समस्तोऽपि व्यापारोऽभून्निरर्थकः॥ २३२ ॥
रिक्त एव कथं गेहे यास्यामीति विचिन्त्य सः ?। [1]यष्ट्या चाहत्य हतवान् हीनस्तामेव वानरीम् ॥२३३ ॥

१ व्यापाद्य वानरीं स्कन्धे निधाय प्रचचाल सः ॥ २३३ ॥ यावत्प्रयात्यसौ गेहं प्रति तावद्ददर्श च । इति पाठान्तरं साधु.

तां च कान्ताकृतौ क्षिप्त्वा नीयमानां निरीक्ष्य सः । आविर्भूयाऽवदद् व्याघ्रः किमिदं रे कृतं त्वया ? ॥२३४॥
यथा त्वं पुत्रवत् पाप ! पालितो लालितश्चिरम् । तस्याः प्रकुर्वतो घातं किं न ते शंटितौ करौ ? ॥ २३५ ॥
रे पापिष्ठ ! निकृष्टाङ्ग ! कृतघ्नाभव्य ! दुर्मते ! । प्रयाहि मेऽप्यवध्योऽसि त्वन्मुखं वीक्ष्यते कथम् ? ॥ २३६ ॥
निषादश्चाऽऽगतो गेहं ज्ञात्वा तद्वृत्तमादितः । राज्ञा चाज्ञापितो वध्यो बद्ध्वाऽसौ बन्धनैर्दृढम् ॥ २३७ ॥
राजादिष्टैर्नरैर्यावत् स नीतो वध्यभूमिकाम् । तावद् व्याघ्रोऽवदद्युक्तमहो ! नैतस्य मारणम् ॥ २३८ ॥
अथ तैर्विस्मयापन्नैः कथितं तन्महीभुजे । स्वयं राजाऽपि तत्राऽऽगात कौतुकोत्तानमानसः ॥ ३३९ ॥
तथैव व्याजहाराऽसौ मृगराजो महीपते ! । पापिनोऽस्य वधान्मा भूस्त्वमप्यंशहरोऽंहसः ॥ २४० ॥
स्वयमेव पतन्त्येव विपत्तौ पापजन्तवः । निमज्जति यथा तूर्णं सम्पूर्णः कलशोऽम्भसि ॥ २४१ ॥
राजा प्रोवाच हे व्याघ्र ! तिरश्चोऽपि कथं नु ते । प्रकृष्टा मानवी भाषा विवेकित्वं तथेदृशम् ? ॥ २४२ ॥
व्याघ्रोऽप्येवमभाषिष्ट विशिष्टज्ञानसंयुतः । उद्याने सूरिरत्राऽस्ति स सर्वं कथयिष्यति ॥ २४३ ॥
इत्युदित्वा ययौ सोऽथ तं निषादं महीपतिः । पुर्य्या निष्कासयामाम सुरेन्द्र इव सङ्गमम् ॥ २४४ ॥
ततश्च वनखण्डान्तर्मूर्तं धर्ममिवाऽग्रतः । ददर्शाऽयं परिवृतं सूरिं भूरितपोधनैः ॥ २४५ ॥
नमस्कृत्य गुरोः पादावनुज्येष्ठं मुनीनपि । उपविश्य च गुर्वन्ते पप्रच्छैवं कृताञ्जलिः ॥ २४६ ॥

१ त्रुटितौ । २ पापस्य ।

प्रभो ! सर्वं विजानामि निर्मलज्ञानचक्षुषा। तेन पृच्छामि सा मृत्वा कां गतिं वानरी ययौ? ॥ २४७ ॥
गुरुः प्रोवाच भूपाल ! मरालधवलाशया । धर्मध्यानपरा धन्या सुरलोकमियाय सा ॥ २४८ ॥
यतः—
तपःसंयमदानोपकारेषु निरतः सदा । गुरुवाक्यरुचिर्जीवो दयावांश्च दिवं गमी ॥ २४९ ॥
अपृच्छद्भूपतिर्भूयो भूयः पापपरायणः। जात्या च क्रियया चाऽपि निषादाख्यः क्व यास्यति? ॥ २५० ॥
सूरिश्च कथयामास सर्वस्याऽपि स्फुटं ह्यदः ! यद्य(द)स्य पापिनः स्थानं किमन्यन्नरकं विना ॥ २५१ ॥
जीवहिंसामृषावादस्तेनान्यस्त्रीनिषेवणैः । परिग्रहकषायैश्च विषयैर्विषयीकृतः ॥ २५२ ॥
कृतघ्नो निर्दयः पापी परद्रोहविधायकः । रौद्रध्यानपरः क्रूरो नरो नरकभाग् भवेत् ॥ २५३ ॥ ( युग्मम् )
॥ प्रस्तावादपरगतिद्वयलक्षणमपि शृणु ॥
[1]पिशुनो गोर्मतिश्चैव मित्रे शाठ्यरतः सदा। आर्तध्यानेन जीवोऽयं तिर्यग्गतिमवाप्नुयात् ॥ २५४ ॥
मार्दवार्जवसम्पन्नो गतदोषकषायकः । न्यायवान् गुणगृह्यश्च मनुष्यगतिभाग् भवेत् ॥ २५५ ॥
पृच्छति स्म पुनर्भूपः कथं व्याघ्रो मनुष्यवाक्? । निषादसूदनाद् येन वारितोऽहं प्रभो ! बलात् ॥ २५६ ॥
जगाद पुनराचार्यो भूपते ! शृणु कारणम् । सौधर्मे देवलोकेऽस्ति शक्रसामानिकः सुरः ॥ २५७ ॥

१ पिशुनो दुर्विनीतश्चेति पाठान्तरम् । २ गोः पशोरिव मतिर्यस्य । ३ सूदनं नाशः ।

तस्य प्राणप्रिया देवी श्रुत्वा क्वापि मनुष्यभूत्। रक्षपालाः सुरास्तस्या अपृच्छंस्तत्प्रियं सुरम् ॥ २५८ ॥
स्वामिन्नस्मिन् विमाने का भविता देवता न वा ?। तेन सा वानरी तेषां भाविनी देवतोदिता ॥ २५९ ॥
व्याघ्ररूपधरो भूत्वा तत्परीक्षार्थमागतः। एको देवस्ततो राजंस्तस्य वाग् मानुषी वरा ॥ २६० ॥
हरिप्रियानिषादाभ्यां सह तेन विनिर्ममे। विवादो बहुधा मायाशृगालाऽनुचरेण च ॥ २६१ ॥
प्रतिबुद्धस्ततो राजा राज्यं न्यस्य सुते निजे। तेषामेव मुनीन्द्राणां पार्श्वे जातो महाव्रती ॥ २६२ ॥
हरिपालाख्यराजर्षिः पालयित्वा व्रतं चिरम्। सुरलक्ष्मीमवापोच्चैस्तस्मिन्नेव सुरालये ॥ २६३ ॥

इति निषादवानरी कथा।

यथाऽसौ नरकं प्राप्तो निषादो जीवहिंसया। तथाऽन्योऽपि भवेत्तस्मात्त्याज्येयं सर्वथा त्वया ॥ २६४ ॥
श्रुत्वा मेघरथस्योक्तिं श्येनोऽवोचन्महीपते !। धर्माधर्मविचारं त्वं करोष्येवं सुखी यतः ॥ २६५ ॥
पारापतोऽयं मद्भीतः शरणं त्वां समाश्रितः। बुभुक्षाराक्षसीग्रस्तः शरणं कं श्रयाम्यहम् ? ॥ २६६ ॥
राजन् ! मत्पुरुषोऽस्मि त्वं दुःखं कस्याऽपि नेच्छसि। रक्ष रक्ष कृपाशूर ! तदेनमिव मामपि ॥ २६७ ॥
कृत्याकृत्यं स्वयं वेद्मि किन्त्वेकं कथयामि ते। मादृशे क्षुधिते क्षुद्रे कीदृशी धर्मवासना ! ॥ २६८ ॥
विवेको ह्रीर्दया धर्मो विद्या स्नेहश्च सौम्यता। सत्त्वं च जायते नैव क्षुधार्तस्य शरीरिणः ॥ २६९ ॥
प्रतिपन्नमपि प्रायो लुप्यते क्षुत्पिपीडितैः। इत्यर्थे नीतिशास्त्रोक्तो दृष्टान्तः श्रूयतां प्रभो ! ॥ २७० ॥

करीरवनसंकीर्णे निर्जले मरुमण्डले । आवात्सीत् कूपके क्वापि द्विजिह्वः[1] प्रियदर्शनः ॥ २७१ ॥
नीरासन्नबिलस्यान्तः सुखेन निवसन्नसौ । विदधे सर्वदाऽऽहारं भेकादिजलजन्तुभिः ॥ २७२ ॥
सुखप्राप्तिकृते तेषामेकेन हरिणा[2] सह । गङ्गदत्ताऽभिधानेन स मैत्रीत्वं प्रपन्नवान् ॥ २७३ ॥
कूपान्तरकृतावासा चित्रलेखा च सारिका । बभूव मधुरालापा तस्य सर्पस्य वल्लभा ॥ २७४ ॥
एवं गच्छति कालेऽस्याऽन्यदा द्वादशवार्षिकी । अनावृष्टिरभूत्तेन कूपे तत्राऽम्बु निष्ठितम् ॥ २७५ ॥
तस्मिंश्च निष्ठिते सर्वे जलजीवाः क्षयं गताः । तदाऽऽहारस्य तस्याहेर्वृत्तिच्छेदोऽभवत्ततः ॥ २७६ ॥
गङ्गदत्तस्तु शालूरः[3] पङ्कशेषकृताशनः । जीवन्नन्येद्युरित्यूचे सर्पेणाऽयं गृहःस्थितः ॥ २७७ ॥
भद्राऽहं क्षुधितोऽत्यन्तं त्वज्जातिकृतभक्षणः । सा त्वनावृष्टिदोषेण विगता किं करोम्यहम् ? ॥ २७८ ॥
सोऽथ दध्यावयं क्रूरो निहन्तुं मां समीहते । रक्षामि स्वं ततोऽमुष्मात् कृत्वोपायं हि कश्चन ॥ २७९ ॥
इति ध्यात्वाऽवदत् स्वामिन् ! गत्वा सिन्धुह्रदादिषु । निजजातिं विलोभ्याहमानेष्यामि कृते तव ॥ २८० ॥
धृत्वा चञ्चुपुटे चित्रलेखा नेष्यति तत्र माम् । ततस्ते प्रचुरा नित्यं प्राणयात्रा भविष्यति ॥ २८१ ॥
अथाऽनेन समादिष्टा तदर्थं पक्षिणी सका । चञ्च्वा कृत्वा मुमोचैनं नीत्वा क्वापि महाह्रदे ॥ २८२ ॥
नीरमध्यप्रविष्टोऽसौ संजातः सुखभाजनम् । तदाशयमजानत्या भणितश्चित्रलेखया ॥ २८३ ॥

१ सर्पः । २ भेकेन । ३ भेकः ।

एह्येहि भद्र ! शीघ्रं त्वं विधाय स्वममीहितम् । कष्टेन वर्तते स्वामी सोऽथ तामित्यभाषत ॥ २८४ ॥

आख्याहि भद्रे ! प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपम् ।
बुभुक्षितः किं न करोति पापं ? क्षीणा नरा निष्करुणा भवन्ति ॥ २८५ ॥

इत्यात्मचिन्तितं तस्या आख्याय पुनरब्रवीत् । त्वयाऽपि तस्य विश्वासो न कर्तव्यः कथञ्चन ॥ २८६ ॥

एवं राजन्! क्षुधार्तः सन् कृत्याऽकृत्यं न वेद्म्यहम् । तदाशु प्रीणय त्वं मां यावत् प्राणा न यान्त्यमी॥ २८७ ॥

एवं श्येनेन भणिते प्रोवाच जगतीपतिः । यच्छामि ते वराऽऽहारं भद्र ! त्वं क्षुधितो यदि ॥ २८८ ॥

पक्ष्यूचे नान्य आहारोऽस्माकमिष्टो विनाऽऽमिषम् । तदप्यानीय शूनाया दास्यामीति नृपोऽवदत् ॥ २८९ ॥

पश्यतो मेऽङ्गिनो मांसं छित्त्वा चेद्दीयते ततः । तृप्तिर्भवेदिति पुनर्वदति स्म स नीडजः ॥ २९० ॥

राजोचे यत्प्रमाणोऽयं भवेत् पक्षी तुलाधृतः । तावन्मात्रं निजं मांसं यच्छामि किमु ते वद ? ॥ २९१ ॥

एवमस्त्विति तेनोक्ते तुलामानाययन्नृपः । न्यवेशयच्च तत्रैकपार्श्वे पारापतं द्विजम् ॥ २९२ ॥

उत्कृत्योत्कृत्य देहं स्वं तीक्ष्णक्षुरिकयाऽक्षिपत । द्वितीयपार्श्वे मांसं च करुणारससागरः ॥ २९३ ॥

छित्त्वा निजकमांसानि स चिक्षेप यथा यथा । पारापतोऽधिकतरमवर्धिष्ट तथा तथा ॥ २९४ ॥

गुरुभारममुं ज्ञात्वा स्वर्गं साहसिकाग्रणीः । तुलायामारुरोहाऽस्यां स्वयमेव महीपतिः ॥ २९५ ॥

१ प्राणिवधध्यानात् । २ पक्षी । ३ पक्षिणम् । ४ छित्त्वा छित्त्वा ।

तुलारूढं नृपं दृष्ट्वा सकलोऽपि परिग्रहः । हाहाकारं प्रकुर्वाणः सविषादमदोऽवदत् ॥ २९६ ॥
हा ! नाथ ! जीवितत्यागसाहमं किं करोष्यदः ? । एकस्य पक्षिणोऽस्यार्थे किमस्मांश्चाऽवमन्यसे ? ॥ २९७ ॥
इदमौत्पातिकं किञ्चित् प्रभो ! सम्भाव्यते यतः । भवेन्नैतादृशो भारः क्षुद्रकायस्य पक्षिणः ॥ २९८ ॥
परोपकारकरणरसिकः सरलाशयः । तथोपयोगं भूपोऽसौ न ददौ ज्ञानवानपि ॥ २९९ ॥
इदं च चिन्तयामास धन्यास्ते धरिणीतले । निर्वाहयन्ति ये श्रेयःकार्यमङ्गीकृतं खलु ॥ ३०० ॥
सर्वोऽपि स्वार्थलुब्धोऽयं चलस्नेहः परिग्रहः । कृतघ्नमशुचेर्गेहं देहं चापि विनश्वरम् ॥ ३०१ ॥
अपेक्षयाऽनयोः सोऽहं स्वार्थभ्रंशं करोमि किम् ? । स्वसन्धां पूरयिष्यामि यद्वा तद्वा भवत्वहो ! ॥ ३०२ ॥
अत्रान्तरे चलत्स्वर्णकुण्डलालङ्कृतश्रुतिः[1] । किरीटहारकटकधारी कश्चिन सुरो वरः ॥ ३०३ ॥
आविर्भूय जगादैवं धन्योऽसि त्वं महीपते ! । तव धीर ! दयावीर ! सफले जन्मजीविते ॥ ३०४ ॥
येनाऽद्य त्वद्गुणग्रामं शशाङ्करनिर्मलम् । ईशानेन्द्रः सभामध्ये प्रशशंस सविस्मयः ॥ ३०५ ॥
अश्रद्दधानस्तमहं त्वत्परीक्षार्थमागतः । अधिष्ठितौ मया ह्येतौ पूर्वमन्मरिणौ खगौ ॥ ३०६ ॥
अथाऽपृच्छन्नृपो वैरं कथं देवाऽनयोरभूत् ? । इत्याख्याहि यतोऽस्माकं वर्तते कौतुकं महत् ॥ ३०७ ॥
आख्यच्च त्रिदशोऽत्रैव नगरे समभूत्पुरा । वणिक् सागरदत्तो विजयसेना च तत्प्रिया ॥ ३०८ ॥

१ श्रुतिः कर्णः ।

युगलेन समुत्पन्नौ वणिज्यकलयाऽन्वितौ । धननन्दननामानावभूतां नन्दनौ तयोः ॥ ३०९ ॥
पितरौ समनुज्ञाप्य सार्थेन सममन्यदा । जग्मतुस्तौ वणिज्यार्थं पुरं नागपुराऽभिधम् ॥ ३१० ॥
व्यवहारं प्रकुर्वद्भ्यां ताभ्यामेकमुपार्जितम् । बहुमूल्यं तत्र रत्नं कथञ्चिद्दैवयोगतः ॥ ३११ ॥
ततस्तौ तस्य लोभेनाऽन्योन्यघाताभिलाषिणौ । मज्जन्तावन्यदा नद्यां विवादमिति चक्रतुः ॥ ३१२ ॥
एकोऽवोचन्मयैवेदं चारु रत्नमुपार्जितम् । द्वितीयः स्माह मयका त्वं लोभं कुरुषे वृथा ॥ ३१३ ॥
इत्यन्योन्यं रुषाक्रान्तौ तौ युद्ध्वाऽरुणलोचनौ । पतितौ निम्नगानीरे चाऽऽर्तध्यानेन संस्थितौ ॥ ३१४ ॥
संजातौ पक्षिणावेतौ वनमध्ये ततोऽधुना । मिलितौ कलहायन्तौ मया भोः ! समधिष्ठितौ ॥ ३१५ ॥
इत्युक्त्वा निर्जरः सोऽथ जगाम त्रिदशालयम् । पप्रच्छुर्विस्मयापन्नाः सभ्या मेघरथं नृपम् ॥ ३१६ ॥
नृनाथ ! त्रिदशः कोऽयं येन यूयं निरागसः । विधाय बहुधा मायां पातिताः प्राणसंशये ? ॥ ३१७ ॥
ततो मेघरथो राजा जगाद यदि कौतुकम् । भवतामस्ति तन्मावधानाः शृणुत मद्वचः ॥ ३१८ ॥
इतो भवादतिक्रान्ते पञ्चमेऽहं भवेऽभवम् । अग्रजोऽनन्तवीर्यस्य बलदेवोऽपराजितः ॥ ३१९ ॥
तदाऽऽवयोरभूच्छत्रुर्दमितारिर्महाभुजः । अपहृत्य सुतां तस्य स आवाभ्यां निपातितः ॥ ३२० ॥
भ्रान्त्वा संसारकान्तारमिहैव भरतार्धके । अष्टापदगिरेर्मूले सोऽभवत्तापसात्मजः ॥ ३२१ ॥

---

१ मृतौ । २ देवः ।

कृत्वा बालतपो मृत्वा सुरूपाख्योऽमृताशनः । ईशानकल्पे जातोऽयं तदेन्द्रः प्रशशंस माम् ॥ ३२२ ॥
अश्रद्दधत्प्रशंसां तामिहायाऽतस्ततः परम् । यज्जातं भवतां तद्धि प्रत्यक्षं सर्वमेव भोः ! ॥ ३२३ ॥
स्ववृत्तं देववृत्तं च तावाकर्ण्य विहायसौ । संजातजातिस्मरणौ स्ववाचैवं जजल्पतुः ॥ ३२४ ॥
इदं स्वचरितं स्वामिन् ! श्रुत्वा संवेग आवयोः । संजातोऽतिगुरुश्चित्ते यत कर्तव्यं तदादिश ॥ ३२५ ॥
राज्ञोक्तं भोः ! सुदृष्टित्वं प्रतिपद्य महाशयौ ! । भावमारं विदधीथोऽनशनं पापनाशनम् ॥ ३२६ ॥
ततस्तौ विहितप्रायौ स्मृतपञ्चनमस्कृती । मृत्वा धन्यौ समुत्पन्नौ देवौ भुवनवासिषु ॥ ३२७ ॥
पौषधं पारयित्वा तं विधिना कृत्वा च पारणम् । भोगानभुङ्क्त भूयोऽपि राजा मेघरथः सुधीः ॥ ३२८ ॥
परीषहोपमर्गेभ्योऽभीनः संवेगवामितः । सोऽन्यदाऽष्टमभक्तेन तस्थौ प्रतिमया स्थिरः ॥ ३२९ ॥
अष्टाविंशतिलक्षाणां विमानानामधीशिना । अत्रान्तरे भक्तिवशादीशानेन्द्रेण जल्पितम् ॥ ३३० ॥
माहात्म्यनिर्जिताऽशेषत्रैलोक्य ! गतकल्मष ! । भविष्यदर्हते तुभ्यं महासत्त्व ! नमो नमः ॥ ३३१ ॥
तमाकर्ण्य समीपस्थाः पृच्छन्ति स्मेति तत्प्रियाः।स्वामिन्!कस्य नमस्कारो युष्माभिर्विहितोऽधुना?॥३३२॥
सोऽवदत शृणु त्रैलोक्यसुन्दरि ! क्षितिमण्डले । नगर्यां पुण्डरीकिण्यां राजा मेघरथाऽभिधः॥ ३३३ ॥
कृताऽष्टमतपःकर्मा स्थिरप्रतिमया स्थितः । वर्तमानः शुभध्याने मया भक्त्या नमस्कृतः ॥ ३३४ ॥ ( युग्मम् )
एवंविधशुभध्यानाद् धर्मे तल्लीनमानसम् । शक्ताश्चालयितुं नैनं सेन्द्रा अपि दिवौकसः ॥ ३३५ ॥

इत्याकर्ण्य सुरूपातिरूपे तद्वल्लभे उभे । क्षोभनार्थं नृपस्याऽस्य समीपे समुपेयतुः ॥ ३३६ ॥
उत्कृष्टरूपलावण्यकान्तियुक्ते सविभ्रमे । सुभृङ्गारे पुरो भूत्वा तस्यैवं ते जजल्पतुः ॥ ३३७ ॥
आवां देवाङ्गने स्वामिंस्त्वयि स्नेहविमोहिते । इहाऽऽयाते ततो वाञ्छां पूरय त्वं प्रियाऽऽवयोः ॥ ३३८ ॥
विमुच्य त्रिदशाधीशं स्वाधीनं निजकं पतिम् । आवामिहागते लुब्धे त्वद्रूपगुणयौवनैः ॥ ३३९ ॥
इत्यादिरागजननपेशलैर्वचनैस्तयोः । हावभावैश्च विविधैर्न लुब्धं तस्य मानसम् ॥ ३४० ॥
अनुकूलोपसर्गांस्ते विधाय सकलां निशाम् । प्रशान्तविक्रिये प्रातरेवं संस्तुवतः स्म तम् ॥ ३४१ ॥
सरागं हृदयं चक्रेऽरागेणापि त्वयाऽऽवयोः । अहो ! चित्रं न रक्तोऽसि प्रक्षिप्तोऽप्यत्र सुन्दर! ॥३४२॥
विलीयते नरो लोहमयोऽप्यस्मद्विचेष्टया । न स्तोकमपि ते धीर ! चचाल हृदयं तया ॥ ३४३ ॥
क्षमयित्वाऽपराधं स्वं नमस्कृत्याथ तं नृपम् । कुर्वत्यौ तद्गुणश्लाघां जग्मतुस्ते निजाऽऽश्रयम् ॥ ३४४ ॥
प्रतिमां पारयामास पौषधं च यथाविधि । राजा मेघरथः प्रातर्विदधे पारणं ततः ॥ ३४५ ॥
अन्यदाऽऽस्थानमासीनः समासन्तः स भूपतिः । उद्यानपालकेनैवं भणितो भक्तिपूर्वकम् ॥ ३४६ ॥
स्वामिन् ! संवर्ध्यसे दिष्ट्या यदद्य नगरे तव । जनकः समवासार्षीज्जिनो घनरथः प्रभुः ॥ ३४७ ॥
ततो दानं हिरण्यादि दत्त्वाऽस्मै पारितोषिकम् । कुमारसंयुतो राजा ययौ नन्तुं जिनेश्वरम् ॥ ३४८ ॥
वन्दित्वा भगवन्तं तं शेषानपि तपोधनान् । निषसाद यथास्थानं भक्तिभावितमानसः ॥ ३४९ ॥

अत्रान्तरे जिनः सर्वभाषानुगगिरा वराम् । जन्तूनां प्रतिबोधार्थं विदधे धर्मदेशनाम् ॥ ३५० ॥
भो भव्या ! इह कर्तव्यो जिनार्चननमस्कृतौ । अपूर्वपाठश्रवणे चाऽप्रमादो निरन्तरम् ॥ ३५१ ॥
पुण्यात्मा यो भवेज्जीवोऽप्रमत्तो धर्मकर्मणि । तस्याऽऽपदपि सौख्याय शूरस्येव प्रजायते ॥ ३५२ ॥
प्रस्तावेऽत्र गणधरो जिनं नत्वा व्यजिज्ञपत । प्रभो ! कः शूरनामाऽसौ योऽप्रमत्तो वृषेऽभवत् ? ॥ ३५३ ॥
अथावादीज्जिनो भद्र ! यदि ते श्रुतिकौतुकम् । तदाऽस्याऽऽख्यानकं सम्यग् कथ्यमानं मया शृणु ॥ ३५४ ॥
अस्त्यस्य जम्बूद्वीपस्य मध्यखण्डे हि भारते । क्षितिप्रतिष्ठितं नाम पुरं पुरगुणाश्रितम् ॥ ३५५ ॥
तं पुरं पालयामासाऽशेषसामन्तवन्दितः । लोकावनैकरसिको वीरसेनाऽभिधो नृपः ॥ ३५६ ॥
तस्यासीद्धारिणी देवी देवीव धरणीगता । ददर्श साऽन्यदा स्वप्ने पुरो शान्तं सुरेश्वरम् ॥ ३५७ ॥
पत्युः शशंस सा स्वप्नं सोऽवादीद्भविता सुतः । चलेन्द्रदर्शनात्सोऽपि भावी किञ्चिचलाचलः ॥ ३५८ ॥
जज्ञे च समये पुत्रोऽभिधानदिवसेऽस्य च । देवराज इति नाम चक्रे स्वप्नानुसारतः ॥ ३५९ ॥
तस्मिन् प्रवर्धमानेऽपि स्वप्ने राज्यान्यदैक्षत । शङ्खोज्ज्वलं पुष्टदेहं निजोत्सङ्गगतं वृषम् ॥ ३६० ॥
तस्मिंश्च कथिते राज्ञा भणितं देवि ! ते सुतः । भविष्यति महाबाहू राज्यभारधुरन्धरः ॥ ३६१ ॥
जातस्य समये तस्याऽप्यकारि जगतीभुजा । वत्सराज इति स्वप्नानुसारेणाऽभिधा वरा ॥ ३६२ ॥

१ धर्मे । २ अवनं रक्षणं ।

क्रमेण वर्धमानोऽसावष्टवर्षोऽखिलाः कलाः । अधीते स्म महाप्राज्ञः कलाचार्यस्य सन्निधौ ॥ ३६३ ॥
अन्यदा ज्वरदाघा(हा)दिरोगग्रस्तशरीरकः । आयुष्पर्यन्तकालत्वाद्भभूत्र पृथिवीपतिः ॥ ३६४ ॥
दृष्ट्वा रोगार्दितं भूपं दुःखितोऽभूत् परिग्रहः । लोकाः सम्भूय सर्वेऽपि मन्त्रयाञ्चक्रिरे मिथः ॥ ३६५ ॥
अयं हि वयसा ज्येष्ठो देवराजोऽस्ति यद्यपि। तथाऽपि हि गुणज्येष्ठो वत्सराजोऽस्त्वसौ नृपः ॥ ३६६ ॥
जनवादममुं श्रुत्वा सहालोच्यैकमन्त्रिणा । स्वीचक्रे देवराजेन सैन्यं वाजिगजादिकम् ॥ ३६७ ॥
तं नियुक्तकृतं श्रुत्वाऽऽरवं किमिति भूपतिः १। पप्रच्छ कथयामास सर्वं परिजनोऽस्य तत् ॥ ३६८ ॥
ततश्च स जगादैवं व्याध्याधिभ्यां निपीडितः । अहो अयुक्तं विदधे कार्यमेतद्धि मन्त्रिणा ॥ ३६९ ॥
वत्सराजकुमारोऽयं योग्यो राज्यस्य नापरः । परमेतदवस्थोऽहमशक्तः किं करोमि भोः ! १ ॥ ३७० ॥
इत्युक्त्वा संस्थितः सोऽथ देवराजोऽभवन्नृपः । विना जनानुरागेण राज्यं पालयति स्म सः ॥ ३७१ ॥
चकार वत्सराजोऽपि प्रणिपातादिसत्क्रियाम् । पितृवद्देवराजस्य स्वभावविनयान्वितः ॥ ३७२ ॥
अनुरागपरं तस्मिन् विज्ञाय सकलं जनम् । दध्यौ मन्त्री वर्धमानो राज्यमेष हरिष्यति ॥ ३७३ ॥
तदस्मिन्नहिते स्वस्य नोपेक्षा युज्यते खलु । कोमलोऽपि रिपुच्छेद्यो व्याधिवद् बुद्धिशालिना ॥ ३७४ ॥
विचिन्त्येदमसौ मन्त्री ज्ञापयामास भूपतिम्। सोऽवदन्ननु भो मन्त्रिन् ! किमत्र क्रियतामिति ॥ ३७५ ॥

१ मृतः ।

खड्गमाकृष्य रे रण्डे ! प्रचण्डे ! किं करोष्यदः ?। इत्युक्ता वत्सराजेन मोत्पपात नभस्तले ॥ ५३७ ॥
मोत्पतन्ती परिधानचीवरे जगृहेऽमुना । तद्विमुच्य करे तस्य क्षणात् क्वाऽपि ययावसौ ॥ ५३८ ॥
अत्रान्तरे घनरथं जिनं पप्रच्छ कश्चन । भगवन् ! कामिनी काऽसौ चक्रे कर्म किमीदृशम् ? ॥ ५३९ ॥
भगवानप्यथोवाच सा पापा दुष्टदेवता । करोत्येवंविधं कर्म च्छलनार्थं नृणामहो ! ॥ ५४० ॥
भूयः पृष्टोऽमुना स्वामी किं नु खादन्ति देवताः । मांमं नेति जगादासौ क्रीडा तासामियं पुनः ॥ ५४१ ॥
वत्सराजोऽथ तद्वस्त्रमादाय स्वगृहं गतः । तावच्छयितवान् यावदुदियाय दिवाकरः ॥ ५४२ ॥
ततस्तद्वस्त्रमादाय राज्ञः पार्श्वे ययावसौ । प्रणिपातं विधायाऽस्य निषसाद यथास्थिति ॥ ५४३ ॥
पृष्टोऽथ रात्रिवृत्तान्तः प्रस्तावे जगतीभुजा । तेनाऽप्यस्य स निःशेषो यथा वृत्तो निवेदितः ॥ ५४४ ॥
तद्देवतानिवसनमर्पितं च महीपतेः। वररत्नमण्डितं तु तद्दृष्ट्वा स विसिष्मिये ॥ ५४५ ॥
राज्याः पार्श्वे निविष्टाया राज्ञा तद्वस्त्रमर्पितम्। तस्मिन् परिहिते तस्याः शोभते स्म न कञ्चुकः ॥ ५४६ ॥
ततः मोचेऽमुना तुल्यो न कूर्पासः सुवाससा । यदि स्यादेष संयोगस्तदा प्राणेश ! सुन्दरम् ॥ ५४७ ॥
ततो वृत्तान्तमाख्यायानीय तं वरकञ्चुकम् । वत्सराजकुमारोऽप्यावर्पयामास भूपतेः ॥ ५४८ ॥
राजा समर्पयामास तं देव्याः साऽपि साञ्जसम् । सद्यः परिदधाति स्म प्रहृष्टवदनाम्बुजा । ॥ ५४९ ॥
तयोरननुरूपं चोत्तरीयं प्रेक्ष्य सा पुनः । कुरुते स्माऽधृतिं लोभो लाभे सति विवर्धते ॥ ५५० ॥

राजा प्रोवाच हे देवि ! कञ्चुकेऽपि समर्पिते । किं त्वं श्याममुखी साऽथ स्वाऽभिप्रायं शशंस तम् ॥ ५५१ ॥
तच्छ्रुत्वा भूपतिर्दध्यावसन्तुष्टा अहो ! स्त्रियः । तृप्यन्ति न कदाप्येता वस्त्रालङ्करणादिषु ॥ ५५२ ॥
ऊचे च लोभं हे देवि ! मा विधेहि निरर्थकम् । वस्तुनोऽविद्यमानस्य कृते त्वमविवेकिनि ! ॥ ५५३ ॥
प्रच्छादनं यदा लप्स्ये शाटिकाचोलयोः समम् । तदा भोक्ष्येऽहमित्युक्त्वा साऽविशत् कोपमन्दिरे ॥ ५५४ ॥
ततो राज्ञा वत्सराजः प्रोक्तः साहसिक ! त्वया । दिव्यवस्त्रे समानीयाऽनर्थोऽयं विहितः खलु ॥ ५५५ ॥
इमां मातृष्वसारं स्वां कथञ्चिदपि तोषय । त्वां विना नापरः कश्चिदस्य व्याधेश्चिकित्सकः ॥ ५५६ ॥
प्रोक्ताऽपि तेन साऽमुञ्चत स्त्रीस्वभावेन नाऽऽग्रहम् । ततो राज्ञः पुरश्चक्रे प्रतिज्ञेयं सुदुस्तरा ॥ ५५७ ॥
देव्या समीहितं वस्त्रं षण्मासाऽभ्यन्तरे यदि । नाऽऽनयामि ततो वह्नौ प्रविशामि न संशयः ॥ ५५८ ॥
प्रोचेऽथ भूपतिर्भद्र ! प्रतिज्ञां मेदृशीं विधाः । सम्यक् कृतान्तपाशानां पातो न ज्ञायते यतः ॥ ५५९ ॥
सोऽवदत् त्वत्प्रसादेन सर्वं साधु भविष्यति । किन्तु मां विसृज क्षिप्रं यामि देशान्तरं यतः ॥ ५६० ॥
स्वहस्तगतताम्बूलं दत्त्वाऽसौ तेन साञ्जसम् । विसृष्टः स्वगृहं गत्वा जनन्योस्तं न्यवेदयत् ॥ ५६१ ॥
अनिच्छन्त्यपि तच्चित्ते पुत्राऽपायाऽभिशङ्किनी । भयात ते विजया वत्सेन्यूचे मा बुद्धिशालिनी ॥ ५६२ ॥
किञ्चित्पाथेयमादायोपानद्गूढपदद्वयः । खड्गखेटकसंयुक्तो नगर्या निर्ययावसौ ॥ ५६३ ॥
दक्षिणां दिशमाश्रित्य बहुग्रामपुराकुलाम् । पश्यन् वसुमतीमेकामासमादाऽटवीमसौ ॥ ५६४ ॥

तुङ्गप्राकारमद्राक्षीत तत्रैकं लघुपत्तनम् । विलोक्य विजनं तच्च वत्सराजो व्यचिन्तयत् ॥ ५६५ ॥
किमिदं हन्त ! भूतानां पुरं वा यक्षरक्षसाम् । अनया चिन्तया किं वा प्रविश्याऽऽलोकयाम्यहम् ॥ ५६६ ॥
प्रविशंश्च ददर्शाऽसौ तन्मध्ये तुङ्गमन्दिरम् । तत्पार्श्वे लघुगेहानि ततस्तत्र विवेश सः ॥ ५६७ ॥
दृष्ट्वाऽऽसनोपविष्टं च तत्रैकं पुरुषं वरम् । परिवाररतं तस्य वत्सः सम्प्रच्छ कश्चन ॥ ५६८ ॥
किंनामेदं पुरं भद्र ! किंनामाऽयं महीपतिः । सोऽवादीद् नगरं नैतद् न चायं पृथिवीपतिः ॥ ५६९ ॥
किन्त्वितो नातिदूरेऽस्ति पुरं भूतिलकाभिधम् । वैरसिंहो नृपस्तत्र श्रेष्ठी दत्ताभिधस्तथा ॥ ५७० ॥
श्रीदेवीनामधेयाया भार्यायाः कुक्षिसम्भवा । रूपलावण्यसंयुक्ता श्रीदत्ता तस्य नन्दिनी ॥ ५७१ ॥
साऽभवद् यौवनप्राप्ता दोषग्रस्तशरीरका । तस्याः प्राहरिको रात्रौ यो भवेद् म्रियते हि सः ॥ ५७२ ॥
यदि प्राहरिको नास्या भवेत तत्सन्त पूरुषाः । विपद्यन्ते ततो राज्ञा स श्रेष्ठ्येवं प्रजल्पितः ॥ ५७३ ॥
श्रेष्ठिन् ! त्वं नगरं मुक्त्वा गच्छाऽटव्यां ममाऽऽज्ञया । त्वत्सुतादोषजनितः किल लोकक्षयोऽस्तु मा ॥ ५७४ ॥
सोऽयं श्रेष्ठी समेतोऽत्र स्वपरीवारसंयुतः । चक्रे च चौररक्षार्थं सप्राकारमिदं गृहम् ॥ ५७५ ॥
अनेन गोलकाबद्धाः कृता यामिकपूरुषाः । प्रभूतधनलोभेन ते च सन्त्यस्य सन्निधौ ॥ ५७६ ॥
तेषां मध्यादथैकैको म्रियते च दिने दिने । तान् मुक्त्वा नापरः कश्चिदिह स्थाने वसत्यहो ! ॥ ५७७ ॥
ततस्त्वमपि हे पान्थ ! याह्यन्यत्र बिभेषि चेत । इति श्रुत्वा कुमारोऽपि ययौ दत्तस्य सन्निधौ ॥ ५७८ ॥

दत्तोऽप्यासनमंतस्मै समम्भ्रममदापयत् । ततस्तत्रोपविष्टाय ताम्बूलं प्रददौ स्वयम् ॥ ५७९ ॥
पृच्छति स्माऽऽदरेणैवं वत्स ! त्वं कुत आगतः ? । सोऽथाऽवादीदुज्जयिन्याः कारणेनाऽहमागतः ॥ ५८० ॥
एवं यावज्जजल्पाऽसौ कुमारः श्रेष्ठिना सह । तत्रैकस्तावदायातः पुमान् शृङ्गारशोभितः ॥ ५८१ ॥
विमनस्कममुं दृष्ट्वा कुमारः श्रेष्ठिनं प्रति । जगाद किमयं तात ! विच्छायो दृश्यते पुमान् ? ॥ ५८२ ॥
ततो दीर्घं विनिःश्वस्य श्रेष्ठ्यूचे तव सुन्दर ! । अत्यन्तगोपनीयोऽपि वृत्तान्तोऽयं निवेद्यते ॥ ५८३ ॥
अस्ति मे तनया तस्या रात्रौ यो यामिको भवेत् । अतिप्रचण्डदोषेण सोऽवश्यं वत्स ! हन्यते ॥ ५८४ ॥
बभूव पुरुषस्याऽस्य यामिकत्वेऽद्य वारकः । तेनाऽयं विमना मृत्योः कस्य वा न भयं भवेत् ? ॥ ५८५ ॥
वत्सराजस्ततोऽवादीत् तिष्ठत्वेष यथासुखम् । अहमद्य भविष्यामि तस्याः प्राहरिको निशि ॥ ५८६ ॥
श्रेष्ठी जगाद वत्स ! त्वमद्य प्राघुर्णको मम । भुक्तं च न त्वया किञ्चित् किमङ्गीकुरुषे मृतिम् ? ॥ ५८७ ॥
वत्सराजोऽवदत् तात ! कार्यमेतन्मया ध्रुवम् । परोपकाररसिकैर्यदिदं पठ्यते बुधैः ॥ ५८८ ॥
कृतोपकारः सर्वोऽपि करोत्युपकृतिं जनः । विनोपकारं यस्त्राता विपदः सोऽत्र सज्जनः ॥ ५८९ ॥
आवासस्योपरितनभूमौ सोऽथ कुमारकः । आरोहति स्म यत्राऽऽसीत श्रीदत्तश्रेष्ठिनः सुता ॥ ५९० ॥
साऽपि दध्यौ विलोक्यैनमहो ! रूपमहो ! प्रभा । शरीरं पुरुषस्याऽस्य किं तद्यन्न मनोहरम् ॥ ५९१ ॥
हा दैव ! निर्मिताऽहं तु नारी मारीव किं त्वया । ईदृग्मनुष्यरत्नानां जीवितान्तविधायिनी ॥ ५९२ ॥

तदाऽभ्रस्थशय्यायामासीनोऽथ महामतिः । आललाप कुमारस्तां मधुरालापपण्डितः ॥ ५९३ ॥
तथा कथञ्चित्तेनेयं रञ्जिताऽचिन्तयद्यथा । आत्मानमपि हत्वाऽहं रक्षाम्येतस्य जीवितम् ॥ ५९४ ॥
एवं विचिन्तयन्ती सा तत्क्षणायातनिद्रया । जीवितार्थमिवैतस्य बभूव गतचेतना ॥ ५९५ ॥
कुमारोऽथ गवाक्षेणोत्तीर्याऽधो भूमिकागतम् । काष्ठमेकमुपादाय तेनैवाऽऽरोहति स्म सः ॥ ५९६ ॥
काष्ठं निवेश्य शय्यायां विकोशतरवारियुक् । तस्थौ दीपस्य च्छायायामीक्षमाणो दिशोऽखिलाः ॥ ५९७ ॥
वातायनविवरेणाऽत्रान्तरे मुखमेककम् । प्रविशन्तममौ दृष्ट्वाऽप्रमत्तोऽभूद्विशेषतः ॥ ५९८ ॥
मुखेन तेन तस्मिंस्तु वासगेहे निरीक्षिते । प्रविवेश ततो हस्तः समुद्रालङ्कृताङ्गुलिः ॥ ५९९ ॥
औषधीवलयाभ्यां स मण्डितश्च तदेकतः । निर्ययौ फूत्कृतो धूमस्तेन व्याप्तं च तद् गृहम् ॥ ६०० ॥
प्रविश्य स करो यावत् शय्यां पस्पर्श यामिकीम् । जघान वत्सराजोऽपि तं तावन्निशितासिना ॥ ६०१ ॥
देवतायाः प्रभावेण स हस्तो नाऽपतद्भुवि । पपात चौषधिद्वन्द्वं वेदनार्त्तात्ततः क्षणात् ॥ ६०२ ॥
धृमौषधीमंरोहिण्यौ कुमारः सोऽग्रहीदिमे । देवतायाः करः सोऽथ निर्ययौ वासमन्दिरात् ॥ ६०३ ॥
वत्स ! हा वञ्चितास्मीति शब्दं श्रुत्वाऽथ दैवतम् । हे दासि ! कुत्र यासीति जल्पंस्तां किञ्चिदन्वगात् ॥ ६०४ ॥
ततश्चोद्गीर्णखड्गं तं दृष्ट्वा पुण्येन संयुतम् । देवता नश्यति स्माऽस्याऽपकारं कर्त्तुमक्षमा ॥ ६०५ ॥

वलित्वा वन्सराजोऽपि काष्ठमुत्सार्य तल्पतः । तत्र यावदुपाविक्षत्तमी तावत् क्षयं ययौ ॥ ६०६ ॥
सूरोऽपि तस्य शूरस्य प्रतापमिव वीक्षितुम् । तूर्णमारोहति स्मोच्चैरुदयाचलमूर्धनि ॥ ६०७ ॥
अत्रान्तरे कुमारी सा जजागार ददर्श च । कुमारमक्षताङ्गं तं ततो हृष्टा व्यचिन्तयत् ॥ ६०८ ॥
नूनं कोऽपि प्रभावोऽस्य पुंरत्नस्य भविष्यति । यदयं संस्थितो नो मेऽथवा भाग्यानि जाग्रति॥ ६०९ ॥
यद्यसौ मम भर्ता स्याद्भोगान् भुञ्जे ततो ध्रुवम् । अन्यथा विषयाणां मे निवृत्तिरिह जन्मनि ॥ ६१० ॥
विचिन्त्यैवमभाषिष्ट सा पिकीमधुरस्वरा । कथं त्वं व्यसनान्नाथ ! मुक्तोऽस्मीति निवेदय ? ॥ ६११ ॥
तेनापि कथितं तस्यै रात्रिवृत्तं यथातथम् । तच्छ्रुत्वा जातरोमाञ्चकञ्चुका सा मुदं दधौ ॥ ६१२ ॥
इति संलापपरयोस्तयोर्दासी समागता । तस्या मुखक्षालनार्थं जलमादाय निर्मलम् ॥ ६१३ ॥
कुमारमक्षताङ्गं सा दृष्ट्वा हर्षेण पूरिता । श्रेष्ठिनं वर्धयामास तत्क्षेमकथया द्रुतम् ॥ ६१४ ॥
स्खलद्गतिप्रचारोऽथ दत्तः श्रेष्ठी ससम्भ्रमः । तयोः समीपमायातो हर्षास्रैः पूरितेक्षणः । ६१५ ॥
श्रीदत्तोऽपि समुत्थाय ददौ तस्मै शुभासनम् । सोऽपि तत्र समासीनः कुमारं समभाषत ॥ ६१६ ॥
कथं वीर ! त्वया रात्रौ निस्तीर्णो व्यसनार्णवः। कुमारेणाऽपि सर्वोऽपि वृत्तान्तोऽस्य निवेदितः॥ ६१७ ॥
स ऊचे ते मया दत्ता पुत्रीयं प्राणवल्लभा । कल्प इत्यन्यथा लब्धा स्वयमेव त्वया गुणैः ॥ ६१८ ॥

१ रात्रि· । २ मृतः ।

कुमारोऽवोचदज्ञातकुलस्य मम कन्यकाम् । कथं ददासि श्रेष्ठ्यूचे ज्ञातं तव गुणैः कुलम् ॥ ६१९ ॥
पुनरुक्तं कुमारेण कारणेन गरीयसा । गन्तव्यमस्ति मे दूरं करिष्ये चलितस्त्विदम् ॥ ६२० ॥
इमां परिणयेदानीं पश्चाद्गच्छेर्यथारुचि । इत्युक्ते श्रेष्ठिना भूयोऽङ्गीकृतं तेन तद्वचः ॥ ६२१ ॥
तस्मिन्नेव दिने श्रेष्ठी पाणिग्रहणमेतयोः । अकारयन्निशामेकामुषितोऽसौ तया सह ॥ ६२२ ॥
द्वितीयेऽहनि गत्यर्थमापृष्टा तेन साऽवदत् । हे कान्त ! किं न जानासि स्वरूपं रागिणामदः ॥ ६२३ ॥
विरहो वसन्तमासो नवस्नेहो नवं वयः । पञ्चमस्य ध्वनिश्चेति मह्याः पञ्चाग्नयः कथम् ? ॥ ६२४ ॥
वत्सोऽवादीत् कुरङ्गाक्षि ! यामि देशान्तरं न चेत् । तन्मे वह्निप्रवेशः स्यादित्यर्थे नास्ति संशयः ॥ ६२५ ॥
साऽवोचद्वेणिदण्डोऽयं त्वत्परो विहितो मया । स्थास्याम्यत्र शरीरेण हृदैष्यामि त्वया सह ॥ ६२६ ॥
कुङ्कुमं कज्जलं चैव कुसुमाभरणानि च । लगिष्यन्ति शरीरे मे त्वयि कान्त ! समागते ॥ ६२७ ॥
इत्थं कृतप्रतिज्ञां तां मुक्त्वा सोऽश्रुमुखीं प्रियाम् । श्रेष्ठिनं समनुज्ञाप्य वत्सराजोऽग्रतोऽचलत् ॥ ६२८ ॥
ददर्शाऽग्रेऽटवीमध्ये पल्लीं भिल्लसमाकुलाम् । बहूंश्च पर्वतांस्तुङ्गान् रम्याश्च गिरिनिम्नगाः ॥ ६२९ ॥
असावेवंविधाऽटव्यां स्थाने चैकत्र सुन्दरे । पश्यति स्म पुरीमेकामभ्रंलिहगृहाश्रिताम् ॥ ६३० ॥
बहिः सरोवरे तस्याः प्रक्षाल्य चरणानने । कृत्वा पर्यस्तिकां सेतावुपविष्टस्तरोस्तले ॥ ६३१ ॥

---
१ आसनम् ।

नारीसार्थेन पानीयमुह्यमानं ददर्श सः । पप्रच्छ चैकां तन्मध्यात् केयं पूः कोऽत्र भूपतिः ? ॥ ६३२ ॥
साऽवदत् पूरियं भद्र ! कृता व्यन्तरजातिभिः । देवताभिः क्रीडनार्थं नाऽन्यः कोऽप्यत्र भूपतिः ॥ ६३३ ॥
वत्सराजः पुनः प्रोचे तर्ह्येतत्प्रचुरं जलम् । किमर्थमुह्यते भद्रे ! ततश्चैवं शशंस सा ॥ ६३४ ॥
याऽस्माकं स्वामिनी देवी स्थाने क्वापि गता सती । पुंसा केनाऽपि सा बाहौ प्रहृता पीडिता ततः ॥ ६३५ ॥
एतत्पीडानिरासार्थं जलसेको विधीयते । तेनेदमुह्यते नीरं सा त्वद्याऽपि न शाम्यति ॥ ६३६ ॥
अङ्गपीडापहारे किं नेश्वरी देवताप्यहो ! । पृष्टेति वत्सराजेन पुनरेवं जगाद सा ॥ ६३७ ॥
प्रहारदायकस्याऽङ्गरक्षिका देवताधिका । तत्प्रभावेण नैतस्या वेदनोपशमो भवेत् ॥ ६३८ ॥
औषधीद्वितयं चास्याः करेऽभूत् सप्रभावकम् । दत्तमत्यन्ततुष्टेन व्यन्तरेन्द्रेण यत्किल ॥ ६३९ ॥
धूमेन मोहयन्त्येकाऽपरा घातार्तिनाशिनी । ते पुनः पतिते तत्र यत्र खड्गेन ताडिता ॥ ६४० ॥
वत्सराजस्ततोऽवादीन्मानुषो भिषगस्म्यहम् । मह्यं ददातु सा किं नु वेदनां शमयामि चेत् ? ॥ ६४१ ॥
सा स्माह लभसे तत् त्वं ध्रुवं यद्भद्र ! याचसे । तिष्ठ तावत् परं यावत् स्वामिन्याः कथयाम्यदः ॥ ६४२ ॥
ततो गत्वा तयाऽऽचख्ये तत्तस्यै साऽपि तत्क्षणात् । तं तयाऽऽनाययामास साऽपि तस्मै शशंस च ॥ ६४३ ॥
प्रसन्नास्या यदा भद्र ! स्वामिनी मार्गयेस्तदा । प्रासादस्योपरितनभूमिस्थं कन्यकायुगम् ॥ ६४४ ॥
अश्वरूपं तथा यक्षं पर्यङ्कं कामितप्रदम् । एवं करिष्यामीत्युक्त्वा स ययौ देवतान्तिकम् ॥ ६४५ ॥

दत्तामनोपविष्टोऽसौ तया प्रोक्तः सगौरवम् । जानासि वैद्यकं चेत्त्वं भद्र ! पीडां निवारय ॥ ६४६ ॥
विधाय वत्सराजोऽथ वाचा वैद्यकविस्तरम् । धूमौषध्या महाधूममहरत्तान्यया व्यथाम् ॥ ६४७ ॥
वेदनाऽपहृता यावद्भुजा जाता पुनर्नवा । तावत् प्रोचे तया भद्र ! घातदाता त्वमेव मे ॥ ६४८ ॥
आमेति भणिते तेन साऽवादीत्तोषनिर्भरा । याचस्व स्वेच्छया भद्र ! तुष्टाऽहं साहसेन ते ॥ ६४९ ॥
ततश्च याचितं तेन तत्कन्यायुगलं वरम् । यक्षस्तुरङ्गरूपस्तु पर्यङ्कः कामितप्रदः ॥ ६५० ॥
सञ्जातो गृहमेदोऽयमिति ध्यात्वा जजल्प मा । दत्तमेतत् परं त्वस्य शृणुत्प्रवृत्ति त्वमादितः ॥ ६५१ ॥
आसीच्चमरचञ्चायां पुर्यां वैताढ्यपर्वते । गन्धवाहगतिर्नाम्ना विद्याधरनरेश्वरः ॥ ६५२ ॥
सुवेगामदनवेगे तस्याऽभूतामुभे प्रिये । रत्नचूलास्वर्णचूले तयोश्च क्रमजे सुते ॥ ६५३ ॥
विवाहचिन्तया पुत्र्योराकुलस्याऽन्यदा गृहे । खेचरेन्द्रस्य तस्याऽगादेको विद्याधरो मुनिः ॥ ६५४ ॥
आसयित्वाऽऽसने रम्ये नमस्कृत्य च भक्तितः । पृष्टस्तेन मुनिः पुत्र्योर्भर्त्ता कोऽत्र भविष्यति ? ॥ ६५५ ॥
आचख्यौ ज्ञानवानेष वत्सराजो नृपात्मजः । भविष्यत्यनयोर्भर्त्ता गुणवान् भूमिगोचरः ॥ ६५६ ॥
न तु त्वत्सन्निधौ भावि पाणिग्रहणमेतयोः । मासशेषं महाराज ! तवायुर्वर्तते यतः ॥ ६५७ ॥
तर्हि किं कार्यमित्युक्ते भूभुजा सोऽवदत् पुनः । शृणु राजन् ! कुमारोऽसौ भावी भर्त्ता यथाऽनयोः ॥ ६५८ ॥
आसीत्त्वद्भगिनी पूर्वं भूमिगोचरभूपतेः । पित्रा शूराऽभिधानस्य या दत्ता सख्युरात्मनः ॥ ६५९ ॥

तस्य चाऽभूच्छुभाकाराऽपरा कान्ता नृपात्मजा । तस्यां प्रेमप्रकर्षोऽस्याऽनिष्टा सा भगिनी तव ॥ ६६० ॥
सा विद्वेषं गता तस्यां कृत्वा बालतपो मृता । समुत्पन्नास्मि हे राजन्! व्यन्तरी देवता वरा ॥ ६६१ ॥
तस्याः सपत्नी सा कृत्वा धर्मदानादिकं वरम् । मृत्वा च श्रेष्ठिनः पुत्री सञ्जाता दत्तसंज्ञिनः ॥ ६६२ ॥
पूर्वमत्सरिणी देवी सा तस्या यामिकं नरम् । हन्त्यद्याऽपि ततस्तत्र वर्तते पुरुषक्षयः ॥ ६६३ ॥
देवतायास्तदेतस्या राजन्! पुत्र्यौ समर्पय । तत्पार्श्वे स्थितयोर्भर्त्ता समेष्यत्यनयोः स्वयम् ॥ ६६४ ॥
क्रियमाणं देवतया तं निवार्य नरक्षयम् । परिणेष्यति तां वत्सराजः श्रेष्ठिसुतामपि ॥ ६६५ ॥
इति सर्वं समाख्याय ययौ सोऽन्यत्र संयतः । खेचरेन्द्रेण पुत्र्यौ मे तेनेहैत्य समर्पिते ॥ ६६६ ॥
सोऽथ किञ्चित्तपः कृत्वा मृत्वाऽभूद् व्यन्तराधिपः । तेनाऽश्वरूपभृद्यक्षः किंकरो मे समर्पितः ॥ ६६७ ॥
सर्वकामितपर्यङ्कश्चौषधिद्वितयं तथा । तत्सर्वमपि ते भद्र ! प्रदत्तं तुष्टया मया ॥ ६६८ ॥
परिणीते ततश्चैते वत्सराजेन कन्यके । बुभुजे च समं ताभ्यां तत्र भोगानसौ स्थितः ॥ ६६९ ॥
अन्यदा (ते) रत्नचूलास्वर्णचूले निजे प्रिये । ज्ञापिते वत्सराजेन प्रतिज्ञाकारणं निजम् ॥ ६७० ॥
ताभ्यां च ज्ञापिता देवी सा च विज्ञाय कारणम् । व्यसृजत् प्रेयसीयुक्तं तद्वियोगासहाऽपि तम् ॥ ६७१ ॥
ततः पर्यङ्कमारुह्य वत्सराजः सवल्लभः । आययौ नभसा शीघ्रं श्रीदत्तावासमन्दिरम् ॥ ६७२ ॥
सुप्तोत्थिता प्रभातेऽथ श्रेष्ठिपुत्री ददर्श तम् । पर्यङ्कं तं तुरङ्गं च किमेतदिति विस्मिता ॥ ६७३ ॥

दध्यौ च हेतुना केन पर्यङ्कोऽयमिहाऽऽगतः । कथं वाऽयं ममारूढो वाजी सप्तमभूमिकाम् ॥ ६७४ ॥
सम्यग्विलोकयामास यावत्तावद्ददर्श सा । शय्यागतं निजं कान्तं कान्ताद्वयसमन्वितम् ॥ ६७५ ॥
ततो हर्षपूरिताङ्गी गत्वा तातस्य सन्निधौ । माऽऽख्यद् गेहोपरितनभूमौ मत्पतिरागतः ॥ ६७६ ॥
श्रेष्ठ्यूचे समभूद्वत्से ! कथमेवं तदागतिः ? । ततः शय्याऽवलोकादिवार्त्ताऽऽचख्ये तयाऽखिला ॥ ६७७ ॥
अत्यद्भुतं तदाऽऽकर्ण्य सोऽगात्तत्र ससम्भ्रमः । उत्थाय वत्सराजोऽथ सप्रियः प्रणनाम तम् ॥ ६७८ ॥
पृष्टोऽथ श्रेष्ठिना वत्सः स्ववृत्तान्तं न्यवेदयत् । विस्मितस्तच्चरित्रेण शिरो धूनयति स्म सः ॥ ६७९ ॥
तद्दिनं समतिक्रम्याऽनुज्ञाप्य श्रेष्ठिनं ततः । निजस्थानं स सम्प्राप्तः शय्यामारुह्य सप्रियः ॥ ६८० ॥
कुर्वत्यौ पुत्रशय्यायाः सदा नीराजनाविधिम् । धारिणीविमले तस्यां तथास्थं तमपश्यताम् ॥ ६८१ ॥
अपनीय ततो वस्त्रं दृष्ट्वा पुत्रं च सप्रियम् । किञ्चिद् ह्रीशङ्कया तस्याऽपक्रान्ते ते शनैः शनैः ॥ ६८२ ॥
क्षणान्तरेण संप्राप्ते ते विलोक्य समुत्थितः । नमश्चक्रे तयोः पादान् वत्सराजः प्रियान्वितः ॥ ६८३ ॥
कथयामास वार्त्तां च निजां विस्मयकारिणीम् । उत्तरीयं ययाचे च पर्यङ्कं सार्वकामिकम् ॥ ६८४ ॥
गत्वा च भूपतेः पार्श्वे विधाय च नमस्कृतिम् । तद्वस्त्रमर्पयामास तत्पत्न्याः कमलश्रियः ॥ ६८५ ॥
चिरायुर्वत्स ! भूयास्त्वमित्यूचे सा प्रमोदिनी । चक्रे राजाऽपि सत्कारमेतस्याऽऽभरणादिभिः ॥ ६८६ ॥
कुत्र चीरं त्वया प्राप्तं क वा भ्रान्तोऽसि सुन्दर ! । पप्रच्छ चेति भूपालो वत्सराजं सविस्मयः ॥ ६८७ ॥

पर्यङ्कतुरगलाभं विना वार्त्तां निजामसौ । राज्ञो न्यवेदयद्वस्त्रं दत्तं देवतयेति च ॥ ६८८ ॥
अथाऽन्येद्युः कमलश्रीः परलोकमियाय सा । तद्वियोगे नरेन्द्रोऽसौ महाशोकाकुलोऽभवत् ॥ ६८९ ॥
वत्सराजोऽभ्यधाद् राजन्! अनित्याऽखिलवास्तवे । भवे विवेकिनां शोकः कर्तुं क्वाऽपि न युज्यते ॥ ६९० ॥
सर्वज्ञभिषगादिष्टं कोष्ठशुद्धिविधायकम् । शोकावेशरुजः शान्त्यै कार्यं धर्मौषधं बुधैः ॥ ६९१ ॥
इत्यादिवचनैस्तस्य परिषिक्तोऽमृतैरिव । सच्छायः सुमनोवांश्चाऽशोकोऽभूत् स महीपतिः ॥ ६९२ ॥
वत्सोऽथ मन्त्रयामास प्रेयसीभिः सहाऽन्यदा । स्वगृहे भोजयाम्यद्य भूपं वः प्रतिभाति चेत् ॥ ६९३ ॥
ताभिः प्रोचे न ते युक्तं नृपस्याऽऽनयनं गृहे । देहि तत्रैव तत्तस्मै दित्साऽस्ति यदि हे प्रिय! ॥ ६९४ ॥
सोऽवदद् गौरवं कान्ताः! भवेन्नैवं कृते सति । यदीहाऽऽनीयते राजा तन्मे भवति निर्वृतिः ॥ ६९५ ॥
जगदुः पुनरप्येता यद्ययं निश्चयस्तव । तदाऽऽनय नृपं तस्य दर्शनीया वयं न तु ॥ ६९६ ॥
ततोऽसौ सपरीवारं गत्वा भूपं न्यमन्त्रयत् । भोजनायोपरोधेन तस्य मेने नृपोऽपि तत् ॥ ६९७ ॥
निमन्त्र्य पार्थिवं वत्सराजः प्राप्तो निजं गृहम् । वल्लभाभिः सहाऽक्रीडत् तत्रोपरितनावनौ ॥ ६९८ ॥
कियान् रसवतीपाको वर्त्ततेऽस्य निकेतने । इति ज्ञातुं प्रतीहारं प्रैषीत्तत्र महीपतिः ॥ ६९९ ॥
प्रतीहारोऽपि तद्गेहे गत्वा यावद् व्यलोकयत् । तावद्रसवतीपाकं तत्र कञ्चिद् ददर्श न ॥ ७०० ॥
तेनाऽऽगत्य महीभर्तुस्तदाऽऽचख्ये ततोऽपरम् । नरं संप्रेषयामास तदीक्षणकृते नृपः ॥ ७०१ ॥

धान्यपाकादिसामग्रीं तद्गृहेऽन्यगृहेषु च । अदृष्ट्वाऽकथयत् सोऽपि तत्सर्वं जगतीपतेः ॥ ७०२ ॥
भोजनाऽवसरे वत्सराजोऽभ्येत्य महीपतिम् । भोक्तुमाकारयामास राजाऽप्येवमभाषत ॥ ७०३ ॥
उपहासपदं किं नु वयं वर्त्तामहे तव ? । विनाऽपि येन सामग्रीमाकारयसि नो गृहे ॥ ७०४ ॥
वत्सराजोऽवदद् देव ! पूज्योऽसि मम सर्वथा । स्वामिन्नुपहासपदमित्यादेशं ददासि किम् ? ॥ ७०५ ॥
रसवत्यस्ति नो वेति का ते चिन्ता महीपते ! । मय्यप्यसम्भावनां त्वं किं विभावयसि प्रभो ! ? ॥ ७०६ ॥
तद्वाक्योत्साहितो राजा स्वपरीवारसंयुतः । तद्वेश्मनि गतोऽपश्यत्तत्र रम्यं जनाश्रयम् ॥ ७०७ ॥
तं दृष्ट्वाऽचिन्तयच्चैवमस्य वृत्तमलौकिकम् । येनाऽयं मण्डपश्चारुरधुनैव विनिर्मितः ॥ ७०८ ॥
यथायोग्यं कल्पितेषु तत्र रम्याऽऽसनेषु ते । निर्दिष्टेष्वमुनैवाऽथ निषेदुः पार्थिवादयः ॥ ७०९ ॥
स्वर्णरूप्यरत्नमयान्युरुस्थालानि तत्क्षणात् । ढौकितानि पुरस्तेषां वत्सराजस्य मानुषैः ॥ ७१० ॥
दत्ता कल्पद्रुमेणैव दिव्या रसवती तदा । सुशालिभक्तप्रमुखा मनोज्ञा परिवेषिता ॥ ७११ ॥
सुस्निग्धमधुरास्वादा मोदकाः सिंहकेसराः । मण्डिकाः खाद्यकादीनि पक्वान्नान्यपराणि च ॥ ७१२ ॥
रसानामग्रिमं सद्यस्तापितं शुभगन्धयुक् । भोजनस्य विधेः सारं प्रक्षिप्तं प्रचुरं घृतम् ॥ ७१३ ॥
लपनश्रीघृतपूरगोरसव्यञ्जनादिका । रसवत्यऽखिला तत्र व्यापृताऽतिमनोहरा ॥ ७१४ ॥

---

१ मंडपम् ।

भुञ्जानेऽथ महीपाले वत्सराजो व्यचिन्तयत् । उत्सवः सकलोऽप्येष विना पत्नीर्न शोभते ॥ ७१५ ॥
एवं विचिन्त्य भणितास्तेनेदं निजवल्लभाः । प्रकटीभूय भूभर्तुर्गौरवं कुरुताऽनघाः ! ॥ ७१६ ॥
यद्दर्शयति नो तस्यं हितं नाऽऽर्यसुतस्य तत् । एवं मिथो वदन्त्यस्तास्तदादेशं वितेनिरे ॥ ७१७ ॥
रत्नचूला-स्वर्णचूला-श्रीदत्तानां मनोहरम् । रूपं दृष्ट्वा महीपालो जज्ञे कामवशंवदः ॥ ७१८ ॥
दध्यौ च धन्य एवाऽयं यस्यैताः प्रवरा गृहाः । विष्टपत्रितयस्याऽपि वर्णिनीवर्णिका इव ॥ ७१९ ॥
भोजनोर्ध्वं सुताम्बूलवस्त्राद्यैः परिपूजितः । भूपतिः सपरीवारोऽप्याययौ निजवेश्मनि ॥ ७२० ॥
तत्राऽप्यरतिमापन्नस्तासां सङ्गमलालसः । स्वकार्यसाधनोपायं सोऽपृच्छद् मन्त्रिमण्डलम् ॥ ७२१ ॥
आलोच्य मन्त्रिणोऽप्येवं शशंसुः पृथिवीपतेः । जीवत्यदो वत्सराजे कार्यं राजन् ! न सेत्स्यति ॥ ७२२ ॥
ततः केनाऽप्युपायेन वत्सोऽयं देव ! हन्यते । सोऽब्रवीदिति कृत्वाऽपि कार्यं मम समीहितम् ॥ ७२३ ॥
अन्येद्युर्मारणार्थं स सिंहस्य जगतीपतेः । स्थाने निवेशितोऽमात्यैर्महाराजस्य संसदि ॥ ७२४ ॥
कुमारो यावदास्थानादभीतः स निरीयिवान् । अमुं व्यापादयेत्युक्तस्तावत्सिंहो नियोगिभिः ॥ ७२५ ॥
सिंहोऽपि निजगादैनं सिंहद्वाराद्विनिर्गतः । अतिधृष्टोपविष्टोऽसि किमरे ! मम विष्टरे ? ॥ ७२६ ॥
युद्धायोपस्थितः सोऽथ कुमारेण महौजसा । क्षिप्तो दूरेण पतितो भ्रमयित्वा शिरो निजम् ॥ ७२७ ॥

१ भूपस्य।

वत्सस्य वाञ्छिते मृत्यौ सिंहस्यैव बभूव सः। चिन्त्यते यत्परस्येह गृहमायाति तद् ध्रुवम् ॥ ७२८ ॥
सहसैव हते तस्मिंस्तत्सैन्यं हतशक्तिकम् । भूपतिं शरणं प्राप को बिभेति न घातकात् ? ॥ ७२९ ॥
प्रियाभ्यां खेचरीभ्यां स वत्सः प्रोक्तो गृहागतः। अस्मद्विद्याप्रभावेन नाथ ! सिंहो हतस्त्वया ॥ ७३० ॥
अनर्थोऽयं कृतो राज्ञा करिष्यत्यपरं च सः। गृहप्राप्तस्य तस्यार्य ! यत्त्वया दर्शिता वयम् ॥ ७३१ ॥
मन्त्रिभिः सममालोच्य भूभुजा सोऽपरेद्यवि। व्याघ्रीदुग्धेन नः कार्यं किञ्चिदस्तीति जल्पितः ॥ ७३२ ॥
अन्यच्च त्वयि सख्यौ मे नास्ति किञ्चित सुदुर्लभम्। लहर्यः सुलभास्तस्य यस्य मित्रं महोदधिः ॥ ७३३ ॥
आदाय भर्त्तुरादेशं स स्वगेहमुपागतः । अन्तश्चिन्ताभरग्लानमुखो दारैर्निरीक्षितः ॥ ७३४ ॥
उक्तश्च नाथ ! सम्प्राप्ते क्षुद्रादेशे महीपतेः। किं त्वं चिन्तातुरो येन चलस्नेहा भवन्त्यमी ॥ ७३५ ॥
कथं यूयमदो विन्थेत्युदिते तेन ताः पुनः । जगदुर्यत्त्वया सार्धं चरामोऽन्तरिताः सदा ॥ ७३६ ॥
दैवताश्वं समारुह्य याहि भीमाटवीं प्रिय ! ! अस्मन्मातुर्देवतायाः सखी तत्राऽस्ति देवता ॥ ७३७ ॥
तुरङ्गं सा विलोक्यैनं त्वां ज्ञास्यति ततश्च ताम् ।व्याघ्रीरूपां समानीय महीभर्तुः समर्पयेः ॥ ७३८ ॥
इत्यादिष्टः स्वपत्नीभिर्गत्वा तत्र क्रमेण सः। व्याघ्रीरूपां देवतां तां कर्णे धृत्वा समानयत् ॥ ७३९ ॥
ऊचे च नवसूतेयं गृह्यतां दुह्यतां नृप !। क्रियतां चेप्सितं स्वस्येत्युक्त्वा कर्णान्मुमोच ताम् ॥ ७४० ॥
ततः सा व्यन्तरी व्याघ्री तदानयनधीप्रदान्। मन्त्रिणो भक्षयामास ततो भीतोऽवदन्नृपः ॥ ७४१ ॥

हा वत्स! वत्स! मा कार्षीः कर्म हिंस्रं त्वमीदृशम् । गृहाणेमां जनं यावत् क्षयं नयति नाखिलम् ॥ ७४२ ॥
स्वगृहे वत्सराजोऽथ कर्णे धृत्वा निनाय ताम् । गाढाभ्यर्थनया राज्ञः सर्वपौरजनस्य च ॥ ७४३ ॥
पत्नीभिरर्चिता तस्य स्थित्वा तत्र क्षणान्तरम् । विसृष्टा वत्सराजेन निजं स्थानमियाय सा ॥ ७४४ ॥
पुनरन्येद्युरुर्वीशस्तत्पत्नीसङ्गमस्पृहः । उपदेशादमात्यानां वत्सराजमदोऽवदत् ॥ ७४५ ॥
स्थानात् कुतोऽपि भो भद्र! जल्पनीरं ममानय । येन मे जायते देहं बहुरोगविवर्जितम् ॥ ७४६ ॥
इदं क्वास्तीति तेनोक्ते कथितं तस्य मन्त्रिभिः । विन्ध्याटव्यां द्वयोरद्र्योर्मध्यकूपेऽस्ति तज्जलम् ॥ ७४७ ॥
कुरुतः सर्वदाऽप्येतौ सङ्गमापगमौ गिरी । मीलनोन्मीलने नित्यं स्वभावेनेव लोचने ॥ ७४८ ॥
प्रविश्य त्वं मिलित्वापक्रान्तयोरन्तरे तयोः । शीघ्रमेवातिदक्षत्वाद् भद्र! पानीयमानयेः ॥ ७४९ ॥
तमप्यादेशमादाय वत्सराजो गतो गृहे । कथयामास पत्नीनामुपायनिचयौकसाम् ॥ ७५० ॥
ताभिः प्रोचेऽश्वमारुह्य गच्छ त्वं तत्र हे प्रिय! । सखी नोऽस्ति शकुनिकारूपभृद्देवता वरा ॥ ७५१ ॥
ततस्तत्र जगामाऽसौ ज्ञात्वा शकुनिकाऽपि तम् । पूरयित्वाऽम्बुनालाबु तस्य हस्ते समार्पयत् ॥ ७५२ ॥
स्वपुरीं स समागत्य नृपस्याम्बु तदार्पयत् । देवतायाः प्रभावेण जजल्पैवं तदुच्चकैः ॥ ७५३ ॥
राजंस्त्वामथवामात्यान् प्रधानं वा परं नरम् । तत्र दुर्बुद्धिदातारं कमहं भक्षयाम्यहो! ॥ ७५४ ॥
इति नीरवचः श्रुत्वोपविष्टो नृपपर्षदि । विसिष्मिये जनोऽपूर्णकामो मम्लौ च पार्थिवः ॥ ७५५ ॥

कृत्वा तथाऽपि वदनविकाशं सोऽब्रवीदहो ! । असाध्यं किञ्चनाऽप्यस्य विद्यते नाऽवनीतले ॥ ७५६ ॥
विसृज्यैनं गृहे सोऽथाऽमन्त्रयन्मन्त्रिभिः सह । अस्य व्यापादनोपायः कोऽप्यन्यः सूत्र्यतामिति ॥ ७५७ ॥
आलोच्य मन्त्रिणः प्रोचुः चत्वारः पृथिवीपतिम् । देव ! श्रीसुन्दरीकन्याविवाहव्यपदेशतः ॥ ७५८ ॥
कारयित्वा यमगृहं दक्षिणस्यां पुरो दिशि । वत्सः प्रवेश्यतां तत्र निमन्त्रणकृते हरेः ॥ ७५९ ॥ ( युग्मम् )
साधु माध्विति राजा तान् प्राशंसत्ते च दक्षिणे । दिग्भागे कारयन्ति स्म गर्तामिन्धनपूरिताम् ॥ ७६० ॥
ज्वालयित्वा च तत्राग्निं ज्ञापयन्ति स्म ते नृपम् । राजाऽप्याज्ञापयामास भटान् यमनिमन्त्रणे ॥ ७६१ ॥
कार्ये तस्मिन्ननिष्पद्यमानेऽन्यैर्जगतीभुजा । आदिष्टो वत्सराजोऽथ तदप्यङ्गीचकार सः ॥ ७६२ ॥
दर्शयन्तीभिरग्नेहं कृतयत्नं च भूपतेः । भार्याभिर्भणितोऽप्येष कार्यान्न व्यरमत्तदा ॥ ७६३ ॥
गोपयित्वा गृहे कान्तं तद्रूपः सोऽथ किङ्करः । यक्षस्ताभिः समादिष्टो गतः सोऽपि नृपान्तिकम् ॥ ७६४ ॥
मासेन त्वमिहाऽऽगच्छेरित्यादिष्टो नृपेण सः । तस्य पश्यत एवाऽथ प्रविवेश हुताशने ॥ ७६५ ॥
वत्सराजः प्रविष्टोऽग्नावित्यशेषपुरीजनः । प्राविशत स्पर्धयेवाऽस्य तीव्रशोकहुताशने ॥ ७६६ ॥
जगाद च नरेन्द्रोऽयमहो ! निर्दयमानसः । येनाऽनेकगुणस्थानं कुमारोऽयं निपातितः ॥ ७६७ ॥
कुमारशोकनिद्रायां सुप्ते सत्यखिले जने । बभूव मुदितो राजा निशायामिव कौशिकः ॥ ७६८ ॥
सोऽवोचन्मन्त्रिणो हंहो ! पत्न्योऽस्याऽऽनीयतामिह । तेऽवदन् विद्यतेऽग्रेऽपि विरक्ता त्वां प्रति राजा ॥७६९॥

एवं कृते विशेषेण विरागं त्वयि यास्यति । विना जनानुरागं हि न सम्पदपि भाविनी ॥ ७७० ॥
मासं यावत् प्रतीक्षस्व ततस्त्वमपि भूपते ! । उत्तालानां न पच्यन्ते उदुम्बरफलानि यत् ॥ ७७१ ॥
गते मासे कुमारस्य प्रिया आनयितुं पुनः । आदिष्टा मन्त्रिणो राज्ञा चत्वारश्चतुरोक्तयः ॥ ७७२ ॥
इतः कुमारपत्नीभ्यां देवीभूतो निजः पिता । यक्षं संप्रेष्य पातालादाहूतो व्यन्तरेश्वरः ॥ ७७३ ॥
तस्याऽऽभरणसन्दोहैर्भूषितोऽथ पतिर्निजः । तेनाऽग्रगामिना प्रैषि वाज्यारूढो नृपान्तिकम् ॥ ७७४ ॥
तं दृष्ट्वा भूपतिर्दध्यौ व्यलीकं विहितं खलु । अमुना वीरपुरुषेणेदं किल सुभाषितम् ॥ ७७५ ॥
पुनर्दिवा पुना रात्रिः पुनः सूर्यः पुनः शशी । पुनः संजायते सर्वं न कोऽप्येति पुनर्मृतः ॥ ७७६ ॥
पप्रच्छ चैवं किं वत्स ! क्षेमवान् वर्तते यमः ? । सोऽवदत् कुशली देव ! कालोऽस्ति भवतः सखा ॥ ७७७ ॥
ममाऽप्राक्षीदसावेवं बहुकालात् स्मृतोऽस्मि किम् । वत्सराज ! त्वदीशेन वर्तमानोऽपि सौहृदे ? ॥ ७७८ ॥
तव भृत्योऽप्यहं तेन भक्त्या गौरवितः प्रभो ! । इदं मदङ्गलग्नं यत्तद्दत्तं भूषणं वरम् ॥ ७७९ ॥
भवतां प्रत्ययार्थं च द्वाःस्थोऽयं प्रेषितोऽमुना । दृष्ट्वाऽनिमेषनेत्रं तं सत्यं मेने नृपोऽपि तत् ॥ ७८० ॥
व्यन्तरेन्द्रोऽप्युवाचैवं प्रोक्तं दण्डधरेण यत् । मम पार्श्वे सदा राजन् ! प्रेषितव्या नरा निजाः ॥ ७८१ ॥
इन्द्रादेशेन नास्माकमस्तीहाऽऽगमनं नृप ! । मिलनाय ततो मित्र ! त्वयाऽऽगम्यं कथञ्चन ॥ ७८२ ॥
इत्युक्ते राजलोकास्ते तत्र गन्तुं समुत्सकाः । प्रतीहारेण भणिता आगच्छथ मया सह ॥ ७८३ ॥

ततो यमगृहस्याऽन्ते जग्मुस्ते पार्थिवादयः । तेषां च पश्यतामादौ तत्र दौवारिकोऽविशत् ॥ ७८४ ॥
तत्पृष्ठे भृभुजादिष्टाश्चत्वारो मन्त्रिणोऽविशन् । देवतामोहितात्मानो भस्मीभूताः क्षणेन ते ॥ ७८५ ॥
ततस्तत्र नरेन्द्रोऽपि झम्पां दातुं समुद्यतः । वत्सराजकुमारेण बाहौ धृत्वा निवारितः ॥ ७८६ ॥
भणितश्च यथा राजन् ! सर्वस्य विदितं ह्यदः । म्रियते तत्क्षणादेव प्रविष्टो ज्वलने यतः ॥ ७८७ ॥
देवतायाः प्रभावेण जीवितोऽहं महीपते ! । तयैव मोहयित्वाऽमी निहता मम शत्रवः ॥ ७८८ ॥
यतो मन्मारणोपायस्तवाऽमीभिर्निवेदितः । ततो हता मयैते यत्कार्यं प्रतिकृतं कृते ॥ ७८९ ॥
तस्य भक्त्या च शक्त्या च प्रसन्नः पृथिवीपतिः । किञ्चिच्च विफलारम्भो ह्रीमांश्चागान्निजं गृहम् ॥ ७९० ॥
दध्यौ चेति मया पापस्य दारिरंसया । बहूपार्जितमात्मा च लोकमध्ये लघूकृतः ॥ ७९१ ॥
ध्यात्वेति सुन्दरीं कन्यां दत्त्वा तस्मै स भूपतिः । राज्यं च लोकमन्मत्या तापसः समजायत ॥ ७९२ ॥
साधयित्वा बहून् देशान् पुण्यवान् दृढविक्रमः । महाराजपदं प्राप्तो वीरसेननृपात्मजः ॥ ७९३ ॥
अथाऽन्येद्युः पुमानेकः प्रणम्य जगतीपतिम् । इति विज्ञपयामास लेखढौकनपूर्वकम् ॥ ७९४ ॥
क्षितिप्रतिष्ठिताद् देव ! नगरादागतोऽस्म्यहम् । भवद्विज्ञप्तिकालेखस्तत्पौरैः प्रेषितो ह्ययम् ॥ ७९५ ॥
लेखं समर्पयामास स्वपारिग्रहिकस्य तम् । उन्मुद्र्य वाचयामास सोऽप्येवं नृपतेः पुरः ॥ ७९६ ॥

तद्यथा—

स्वस्तिपुर्यामुज्जयिन्यां वत्सराजं महीभुजम् । क्षितिप्रतिष्ठितात् पौरा नत्वा विज्ञपयन्त्यदः ॥ ७९७ ॥
यथा ग्रीष्मार्दितो मेघं शीतार्तोऽग्निं जनः स्मरेत् । पीडिता देवराजेन स्मरामस्त्वां तथा वयम् ॥ ७९८ ॥
शीघ्रमेव समागत्य प्रभुत्वं त्वं कुरुष्व नः । अन्यथाऽन्यं श्रयिष्यामः स्वामिनं न्यायनिष्ठितम् ॥ ७९९ ॥
श्रुत्वेति सर्वसामग्र्या वत्सराजो महीपतिः । प्रैषीद् दूतं तत्र गत्वा देवराजस्य भूपतेः ॥ ८०० ॥
ज्ञात्वा तमागतं सोऽपि सन्नह्य निरगात् पुरात् । विरक्तस्तत्परीवारलोकश्चाऽप्यन्वगान्न तम् ॥ ८०१ ॥
वत्सराजं बलीयांसं मत्वा स्वांश्च तथाविधान् । प्रणश्य स ययौ क्वाऽपि नान्याये विजयो नृणाम् ॥ ८०२ ॥
लोकः प्रमुदितः सोऽथ महोत्सवपुरस्सरम् । पुरे प्रवेशयामास वत्सराजं नरेश्वरम् ॥ ८०३ ॥
एवं राज्यद्वयस्याऽपि स्वामित्वमनुपालयन् । सोऽन्यदोद्यानपालेन विज्ञप्तो नतिपूर्वकम् ॥ ८०४ ॥
स्वामिन् ! संवर्ध्यसे प्रीत्या यतोऽद्य नगरे तव । चतुर्ज्ञानधरः सूरिरागत्य समवासरत् ॥ ८०५ ॥
गत्वा नत्वा मुनीन्द्रं तं यथास्थानं निविश्य च । स पपौ देशनानीरं गुरुवक्त्राद्विनिर्गतम् ॥ ८०६ ॥
यतिश्रावकयोर्धर्ममाकर्ण्य गुरुणोदितम् । श्राद्धधर्मं प्रपद्याऽसौ पुनरागान्निजं गृहम् ॥ ८०७ ॥
मासकल्पं विधायाऽत्र सूरिरन्यत्र सोऽगमत् । वत्सराजोऽप्यनेकानि जिनचैत्यान्यकारयत् ॥ ८०८ ॥
जिनेन्द्रप्रतिमास्तत्र तासां चाऽष्टाह्निकोत्सवम् । धर्मकृत्यं तथान्यच्च गृहियोग्यं चकार सः ॥ ८०९ ॥
आचार्यः सोऽन्यदा तत्र पुनरेव समाययौ । ववन्दे च नरेन्द्रोऽसौ गत्वा तच्चरणद्वयम् ॥ ८१० ॥

पप्रच्छ चान्यदा पूर्वभवे किं विहितं मया ? । यन्मेऽनुपदमायाता विपदः सम्पदोऽभवन् ॥ ८११ ॥
सोऽवदत श्रूयतां राजन् ! जम्बूद्वीपस्य भारते । शूरो नाम नृपोऽभूस्त्वं वसन्तपुरपत्तने ॥ ८१२ ॥
स शूरः सरलात्मा च क्षमो दाक्षिण्यसंयुतः । स्वभावेनैव निर्लोभो देवगुर्वचने रतः ॥ ८१३ ॥
दीनादिभ्यो वितीर्णस्वः प्रजापालनतत्परः । युक्तश्चतुर्विधनीत्या न्यायवान् दोषवर्जितः ॥ ८१४ ॥
स एवं गुणसंयुक्तो विशेषाच्छीलशोभितः । अतिप्रसक्तो दाने च पालयामास मेदिनीम् ॥ ८१५ ॥
सकलान्तःपुरीमध्ये तस्याऽभूदग्रवल्लभा । शूरवेगाभिधानेन विद्याधरकुलोद्भवा ॥ ८१६ ॥
ऊढ्वा चापरा तेन रतिचूला नृपात्मजा । तस्यामासक्तचित्तोऽन्याः परितत्याज स प्रियाः ॥ ८१७ ॥
अतः परं समाख्यातं सर्वं देवतया तव । गन्धवाहरतिसुते यया त्वं परिणायितः ॥ ८१८ ॥
स मृत्वा त्वं महाभाग ! जातोऽसि नृपनन्दनः । दानादिधर्ममाहात्म्याद्भोगसम्पत्समन्वितः ॥ ८१९ ॥
कृतं चैश्वर्यतः किञ्चिदन्तरायककर्म यत् । राज्यभ्रंशादिदुःखं तत् पूर्वे वयसि तेऽभवत् ॥ ८२० ॥
इत्याकर्ण्य समुत्पन्नजातिस्मृतिरसौ नृपः । विशेषपुण्यलाभार्थी जातो दीक्षासमुत्सुकः ॥ ८२१ ॥
संस्थाप्य तनयं राज्ये स श्रीशेखरनामकम् । चतसृभिरपि भार्याभिः समं जज्ञे महाव्रती ॥ ८२२ ॥
पालयित्वा चिरं दीक्षां कृत्वा च विविधं तपः । मृत्वा समाधिना चान्ते सुरलोकमियाय सः ॥ ८२३ ॥
देवलोकात् परिच्युत्य मनुष्यत्वमवाप्य च । क्षपयित्वाऽखिलं कर्म मुक्तिसौख्यं स लप्स्यते ॥ ८२४ ॥

स एव कथितो राजन् ! यः पूर्वं सूचितो मया । शूरो राजा शुभभोगी विपत्कालेऽपि योऽभवत् ॥ ८२५ ॥

॥ इति वत्सराजकथा ॥

जातव्रतपरीणामो राजा मेघरथस्ततः । जिनं नत्वा गृहं गत्वा प्रोचे दृढरथं प्रति ॥ ८२६ ॥
बन्धो ! राज्यं गृहाण त्वं प्रतिपद्ये त्वहं व्रतम् । सोऽवादीदहमप्येवं करिष्यामि त्वया सह ॥ ८२७ ॥
तेनाऽऽत्मतनयो राज्ये मेघसेनो निवेशितः । युवराजत्वे च रथसेनो दृढरथात्मजः ॥ ८२८ ॥
चतुःसहस्रैर्भूपानां सुतसप्तशतैस्तथा । बन्धुना च समं सोऽथ प्रवव्राज जिनान्तिके ॥ ८२९ ॥
निरपेक्षो निजे देहे सोऽधिसेहे परीषहान् । सदा समितिभिर्युक्तो गुप्तो गुप्तिभिरन्वहम् ॥ ८३० ॥
प्रतिबोध्य बहून् जीवान् विहृत्य जगतीतले । धौतकर्ममलो मोक्षं ययौ घनरथो जिनः ॥ ८३१ ॥
स्थानैर्विंशतिभिः साधु प्रधानैरेभिरर्जितम् । रम्यं तीर्थकरगोत्रकर्म मेघरथर्षिणा ॥ ८३२ ॥
अर्हत्–सिद्ध–प्रवचन–गुरु–स्थविर–साधुषु । वात्सल्यं सर्वदा चक्रे बहुश्रुत–तपस्विषु ॥ ८३३ ॥
ज्ञानोपयोगं चाभीक्ष्णं दर्शने विनये तथा । आवश्यके तथा शीलव्रते निरतिचारवान् ॥ ८३४ ॥
क्षणलवतपस्त्याग–वैयावृत्त्ये समाधिमान् । अपूर्वज्ञानग्रहणे प्रयतः श्रुतभक्तियुक् ॥ ८३५ ॥
प्रभावनां प्रवचने विदधाति स्म सर्वथा । सिंहनिष्क्रीडितं नाम तपःकर्म चचार च ॥ ८३६ ॥

संयमं पालयित्वाऽथ वर्षलक्षमनूलकम् । व्यधादनशनं सोऽन्ते सानुजस्तिलकाचले ॥ ८३७ ॥
त्यक्त्वा मलमयं देहं कृत्वा कालं समाधिना । जज्ञे सर्वार्थसंज्ञेऽसौ विमानेऽनुत्तरे सुरः ॥ ८३८ ॥
इत्थं जीवदयाविशेषभणनप्रह्लादितश्रावकश्चित्रोत्पादकवत्सराजनृपतेराख्यायिकाबन्धुरः ।
रम्यानुष्टुपबन्धवृद्धिकलितः संक्षिप्तमन्दर्भको, व्याख्यातो दशमो भवो भगवतः शान्तेस्तथैकादशः ॥ ८३९ ॥

इत्याचार्यश्रीअजितप्रभसूरिविरचिते दशमैकादशभववर्णनो
नाम पञ्चमः प्रस्तावः

## षष्ठः प्रस्तावः ।



इतश्चात्रैव भरते युगादिजिनसन्ततिः । कुरुरित्यभवत् पूर्वं कुरुदेशस्तदाख्यया ॥ १ ॥
हस्तीति तत्सुतस्तेन निर्ममे हस्तिनापुरम् । गृहाट्टरचनाहारि तुङ्गप्राकारगोपुरम् ॥ २ ॥
बहुसूरिकृतावासं शोभितं बहुमङ्गलैः । अपूर्वगगनाकारं तत्पुरं भूरिसुरवत् ॥ ३ ॥
विश्वसेनो नृपस्तत्र शौर्यौदार्यादिसद्गुणैः । विख्यातो जगतीपीठे विश्वसेन इवाऽभवत् ॥ ४ ॥
पुण्यलावण्यरुचिराऽचिरादेवीति तत्प्रिया । सर्वालङ्कारवरयाऽलङ्कृता च रतिश्रिया ॥ ५ ॥
इतो भाद्रपदे कृष्णसप्तम्यां भरणीगते । चन्द्रे सर्वग्रहेषूच्चस्थानस्थेषु निशान्तरे ॥ ६ ॥
च्युत्वा सर्वार्थतो मेघरथस्यात्मायुषः क्षये । अवतीर्णोऽचिरादेव्याः कुक्षौ सरसि हंसवत् ॥ ७ ॥
तस्मिंश्च समये देवी सुखसुप्ता चतुर्दश । महास्वप्नान् ददर्शैतानीषज्जागरिता सका ॥ ८ ॥
मातङ्गवृषहर्यक्षाः साभिषेकेन्दिरा तथा । पुष्पमालेन्दुसूर्यौ च ध्वजकुम्भौ सरोवरम् ॥ ९ ॥
सागरश्च विमानं च रत्नानां सञ्चयस्तथा । निर्धूमो हुतभुक् चेति स्वप्ना आगमभाषिताः ॥ १० ॥
दृष्ट्वा स्वप्नानिमान् देवी जातनिद्राक्षया क्षणात् । गत्वा(त्वो)पराजमाचख्यौ प्रमोदभरनिर्भरा ॥ ११ ॥

प्रहृष्टमुखपद्मोऽथ जगाद जगतीपतिः । सर्वलक्षणसम्पूर्णो भावी देवि ! तवाऽऽत्मजः ॥ १२ ॥
प्रसन्नवदना धर्मचिन्तया रात्रिशेषकम् । अतिक्रमयति स्मैषा कुस्वप्नालोकशङ्किता ॥ १३ ॥
सञ्जातेऽथ प्रगेऽष्टाङ्गनिमित्तज्ञानपण्डिताः । भूभुजाऽष्टावुपाध्याया आहूता निजपूरुषैः ॥ १४ ॥
कृतमङ्गलोपचाराः सम्प्राप्तास्ते नृपौकसि । दत्तासनेषूपविष्टाश्चाऽर्चिताः कुसुमादिभिः ॥ १५ ॥
सुस्वप्नानां फलं राज्ञा पृष्टाश्चैवं बभाषिरे । अस्मच्छास्त्रे द्विचत्वारिंशत् स्वप्ना जगतीपते ! ॥ १६ ॥
महास्वप्ना अपि त्रिंशत् स्युः सर्वे ते द्विसप्ततिः । वीक्षिता येऽचिराद्देव्या महास्वप्ना इमे स्फुटम् ॥ १७ ॥
अर्हतां चक्रिणां चैतान् स्वप्नान् पश्यन्ति मातरः । सप्तार्धचक्रिणां चाऽम्बा चतुरः सीरिणां तथा ॥ १८ ॥
प्रत्यर्धचक्रिणां त्रींश्चाऽन्येषामुत्तमजन्मिनाम् । एकैकमम्बिकाः स्वप्नं पश्यन्त्येषां हि मध्यतः ॥ १९ ॥
दृष्टा यदचिराद्देव्या महास्वप्नाश्चतुर्दश । तद्भावी त्वत्सुतो राजन् ! षट्खण्डभरताधिपः ॥ २० ॥
अथवाऽपि जिनाधीशो विश्वत्रितयवन्दितः । तच्छ्रुत्वा मुदितो राजा मुमुदे तत्प्रियाऽपि सा ॥ २१ ॥
राज्ञा विसृष्टास्ते स्वप्नपाठकाः प्रययुर्गृहम् । बभार गर्भं राज्ञी च रत्नगर्भेव सेवधिम्[1] ॥ २२ ॥
अतिस्निग्धातिमधुरं चाऽतिक्षारातितिक्तकम् । वर्जयामास साऽऽहारं कषायकटुकं तथा ॥ २३ ॥
महान्तमशिवं तस्मिन्नासीत् पूर्वं पुरे तदा । सञ्जातो मान्द्यदोषेण लोकस्य प्रलयो महान् ॥ २४ ॥

१ निधिम् ।

गन्धद्विपस्य गन्धेनाऽन्यदन्तिमदवत् क्षणात् । उपशान्तं तदशिवं प्रभावाद् गर्भगप्रभोः ॥ २५ ॥
ततश्च चिन्तितं तातजननीभ्यामदो हृदि । प्रभावोऽयमनीदक्षसूनोर्गर्भगतस्य नौ ॥ २६ ॥
इदं हि घटते यस्माद् गर्भवासदिने मुदा । वन्दितोऽयं समागत्य महाऽऽवाभ्यां सुरेश्वरैः ॥ २७ ॥
गतेषु मासेषु नवस्वर्धाष्टदिवसेषु च । ज्येष्ठकृष्णत्रयोदश्यां भरणीस्थे निशाकरे ॥ २८ ॥
सूर्यादिषु ग्रहेषूच्चपरमोच्चस्थितेषु च । शुभे लग्ने मुहूर्ते च प्रवाते चारु मारुते ॥ २९ ॥
निशीथसमये स्वर्णवर्णं कान्तिसमन्वितम् । सा देवी सुषुवे पुत्रं विश्वत्रयसुखावहम् ॥३०॥ (त्रिभिर्विशेषकम्)
अत्रान्तरे षडधिकपञ्चाशद् दिक्कुमारिकाः । अवधिज्ञानतो ज्ञात्वा जिनजन्म समाययुः ॥ ३१ ॥
अष्टावेयुरधोलोकाद् गजदन्ताद्रिकन्दतः । अष्टौ च नन्दनवनकूटाद् मेरुनगस्थितात् ॥ ३२ ॥
प्रत्येकं रुचकद्वीपादष्टावष्टौ कुमारिकाः । एयुर्दिग्भ्यश्चतसृभ्यश्चतस्रश्च विदिग्गताः ॥ ३३ ॥
मध्यमाद् रुचकद्वीपाच्चतस्रश्च दिगङ्गनाः । एवं सम्मिलिताः सर्वाः षट्पञ्चाशद् भवन्ति ताः ॥ ३४ ॥
संवर्तवातजलदकृतिं दर्पणधारिताम् । भृङ्गारतालवृन्तानां चामराणां च धारणम् ॥ ३५ ॥
दीपिकाधारणं रक्षाविधानप्रभृतीनि च । चक्रिरे सूतिकर्माणि क्रमेणैवं जिनस्य ताः ॥ ३६ ॥
अत्रान्तरे सुरेन्द्रस्य चचालाऽचलमासनम् । सम्प्रयुक्ताऽवधिज्ञानो जिनजन्म विवेद सः ॥ ३७ ॥

आज्ञाप्य त्रिदशं नैगमेषिणं हरिणाननम् । ज्ञापयामास तद्देवान् घण्टास्फालनपूर्वकम् ॥ ३८ ॥
सर्वे संनह्य देवास्ते हरेरन्तिकमाययुः । विमानं कारयामास प्रधानं पालकेन सः ॥ ३९ ॥
तत्राऽधिरुह्य सपरीवारोऽलङ्कारशोभितः । आगादनुपमश्रीको जिनजन्मगृहे हरिः ॥ ४० ॥
तुभ्यं नमस्तीर्थनाथ ! सनाथीकृतविष्टप ! । कृपारससरिन्नाथ ! नाथ ! श्रीविश्वसेनज ! ॥ ४१ ॥
कुक्षौ रत्नधरे ! देवि ! जगद्दीपप्रदायिके ! । नमस्तुभ्यं जगन्मातस्त्वं धन्या पुण्यवत्यसि ॥ ४२ ॥
त्वमेवाऽमोघजन्माऽसि त्वमेवोत्तमलक्षणा ! । पुत्रिणीषु त्वमेवाऽसि पवित्रा भुवनत्रये ॥ ४३ ॥
धर्मोद्धरणधौरेयश्छिन्नमोक्षाऽध्वदीपकः । षोडशस्तीर्थनाथोऽयं भगवान् सुषुवे यया ॥ ४४ ॥
नत्वा स्तुत्वा जिनाधीशं तदम्बां च विशेषतः । दत्त्वाऽवस्वापिनीं तस्याः प्रतिरूपं निवेश्य च ॥ ४५ ॥
पञ्चरूपो बभूवाऽसौ तत्रैको जिनमाददे । एकश्छत्रं पवि चैको द्वौ च चामरधारिणौ ॥ ४६ ॥ (युग्मम्)
स ययौ मेरुशिखरं सुरेन्द्रा अपरेऽपि हि । तत्रैयुः स्वर्गभवनवासिनो व्यन्तरास्तथा ॥ ४७ ॥
तत्राऽतिपाण्डुकम्बलशिलायां शाश्वतामने । सौधर्मेन्द्रो निषसाद धृत्वाऽङ्के जिनपुङ्गवम् ॥ ४८ ॥
हेमरूप्यमणिदारुमृन्मयां कलशावलिम् । तीर्थगन्धोदकापूर्णामुत्क्षिप्य प्रमदाञ्चिताः ॥ ४९ ॥
अच्युताद्याः सुराधीशाश्चक्रिरे जिनमज्जनम् । निःसीमसुकृतापास्तभवाम्भोधिनिमज्जनम् ॥ ५० ॥ (युग्मम्)

१ हरिणमुख्यं हरिणपूर्वमिति यावत् ।

ततश्चाऽच्युतनाथस्योत्सङ्गे संस्थाप्य तीर्थपम् । सौधर्मेन्द्रो व्यधात् स्नात्रं पुण्यपात्रं जगद्गुरोः ॥ ५१ ॥
सुवाससा प्रमृज्याङ्गं चन्दनाद्यैर्विलिप्य च । पुष्पाद्यैरर्च्चयामास प्रीतचित्तः शचीपतिः ॥ ५२ ॥
विधाय चक्षुःशान्त्यर्थं लवणोत्तारणादिकम् । शक्रो नत्वा जिनं भक्त्या स्तोतुमेवं प्रचक्रमे ॥ ५३ ॥
जय त्वमचिराकुक्षिक्षितिकल्पद्रुसन्निभ ! । भव्याम्भोरुहसूर्याभ ! भद्रश्रेणिविधायक ! ॥ ५४ ॥
इत्याद्युद्दामवचनैः स्तुत्वा नीत्वा पुनर्गृहे । स मातुरर्पयामास जिनमेवं जगाद च ॥ ५५ ॥
जिनस्य जिनमातुश्च यो दुष्टं चिन्तयिष्यति । एरण्डफलवद् ग्रीष्मे स्फुटिष्यन्त्यस्य मस्तकम् ॥ ५६ ॥
ततो नन्दीश्वरद्वीपे यात्रां कृत्वा सुरेश्वराः । सर्वे निजं निजं स्थानं जग्मुस्ताश्च कुमारिकाः ॥ ५७ ॥
तदा देवी जजागार तदङ्गप्रतिचारिकाः । दृष्ट्वा सनन्दनामेतां जातानन्दाः ससम्भ्रमाः ॥ ५८ ॥
प्रस्खलद्गतयो गाढनीवीबन्धशिरोरुहाः । पतत्प्रच्छादनाः पुत्रजन्म राज्ञे न्यवेदयन् ॥ ५९ ॥
इदं च कथयामासुः सूतिकर्माऽस्य देव ! यत् । चक्रे काष्ठाकुमारीभिर्दासीभिरिव साञ्जसम् ॥ ६० ॥
कृतो जन्माभिषेकश्च सुरेन्द्रैर्मेरुमस्तके । इति देवमुखात् स्वामिन्नस्माभिः शुश्रुवे वचः ॥ ६१ ॥
ततोऽभिनवपाथोदधाराहतकदम्बवत् । शुशुभे जातरोमाञ्चकञ्चुको जगतीपतिः ॥ ६२ ॥
निजाङ्गलग्नमखिलं भूषणं मुकुटं विना । आसप्तमन्तर्ति ताभ्यो वृत्तिं च प्रददावसौ ॥ ६३ ॥
ततश्च दापयन् दानमनिवारितशात्रवम् । हृष्टः प्रवर्तयामास सुतजन्ममहोत्सवम् ॥ ६४ ॥

द्वादशेऽथ दिने राजा बन्धुवर्गमशेषकम् । भोजयित्वा गौरवेण तत्समक्षमदोऽवदत् ॥ ६५ ॥
बभूवाऽशिवशान्तिर्यदस्मिन् गर्भागते जिने । तदस्य सुतरत्नस्य शान्तिर्नामाऽस्तु सुन्दरम् ॥ ६६ ॥
सर्वस्याऽपि जनस्यैतत् सञ्जातं नाम सम्मतम् । रम्यं सद्गुणनिष्पन्नं चेतसाग्रे विचिन्तितम् ॥ ६७ ॥
शक्रसंक्रमिताऽङ्गुष्ठाऽमृताहारस्ततः प्रभुः । विशिष्टरूपलावण्यसम्पन्नो ववृधे क्रमात् ॥ ६८ ॥
पाणिपादतले यस्याग्क्ते लक्षणलक्षिते । स्निग्धताम्रपृथुत्तुङ्गा नखाश्च मुकुरोपमाः ॥ ६९ ॥
पादौ कूर्मोन्नतावेणीजङ्घाकारे च जङ्घिके । ऊरू करिकरप्रख्ये विस्तीर्णं च कटीतटम् ॥ ७० ॥
गम्भीरदक्षिणावर्तो नाभिर्मध्यं च वज्रवत् ! पुरद्वारकपाटाभं दृढं वृक्षःस्थलं तथा ॥ ७१ ॥
बाहू पुरर्गलातुल्यौ ग्रीवा कम्बुसमा वरा । बिम्बोपमौ चाऽधरोष्ठौ कुन्दकुड्मलवद् द्विजाः[1] ॥ ७२ ॥
उत्तुङ्गः सरलो नाशावंशः सज्जनवृत्तवत् । पद्मपत्रोपमे नेत्रे अष्टमीन्दुसमालिकम् ॥ ७३ ॥
दोलाकारं श्रुतियुगं छत्राकारं च मस्तकम् । स्निग्धा अलिकुलश्यामाः कुन्तलाश्चाऽतिकोमलाः ॥ ७४ ॥
पद्मगन्धसमः श्वासो वरहेमरुचिस्तनुः । इत्यङ्गलक्षणं यस्य कुरङ्गश्च तथाऽपरम् ॥ ७५ ॥
त्रिभिर्ज्ञानैः समायुक्तोऽशेषविज्ञानपारगः । जातः सर्वजनोत्कृष्टः प्रभुः सम्प्राप्तयौवनः ॥ ७६ ॥
वत्सराणां सहस्रेषु पञ्चविंशतिषु क्रमात् । गतेषु भगवान् राज्ये जनकेन निवेशितः ॥ ७७ ॥

१ दन्ताः ।

परिणायितश्चाऽनेकाः सुरूपाः कुलबालिकाः । सकलान्तःपुरीसारा जज्ञे तस्य यशोमती ॥ ७८ ॥
जीवो दृढरथस्याऽथ स सर्वार्थात्परिच्युतः । आगाद्यशोमतीकुक्षौ चक्रस्वप्नोपसूचितः ॥ ७९ ॥
समये च सुतो जज्ञे तस्योत्सवपुरःसरम् । चक्रायुध इति नाम चक्रे स्वप्नानुसारतः ॥ ८० ॥
कलाकलापसम्पूर्णः क्रमात्सम्प्राप्तयौवनः । सोऽपि पाणिग्रहं राजकन्यकानां हि कारितः ॥ ८१ ॥
अन्यदाऽऽयुधशालायां रविबिम्बसमद्युति । तस्योत्पन्नं सहस्रारं चक्ररत्नमनुत्तमम् ॥ ८२ ॥
शस्त्रागारारक्षकेण तदुत्पत्तिर्निवेदिता । प्रभोः सोऽथ समागत्य चक्रेऽस्याऽष्टाह्निकोत्सवम् ॥ ८३ ॥
तच्छालाया विनिर्गत्य चचालाऽम्बरवर्त्मना । तदनु प्राचलच्छान्तिनाथः सैन्यसमन्वितः ॥ ८४ ॥
चक्रं यक्षसहस्रेणाऽधिष्ठितं तदथो गतम् । पूर्वस्यां मागधतीर्थासन्नवेलाकुले क्रमात् ॥ ८५ ॥
कृत्वा निवेशं सेनायास्तत्र चक्री शुभासने । निषसादाऽभिमुखोऽस्य ततस्तदनुभावतः ॥ ८६ ॥
अधोभागे जलस्याऽन्ते द्वादशयोजनस्थिते । मागधाख्यकुमारस्य चलति स्माऽऽसनं तदा ॥ ८७ ॥
ददर्शाऽवधिना शान्तिं स जिनं चक्रवर्तिनम् । षट्खण्डभरतक्षेत्रसाधनोद्यतमागतम् ॥ ८८ ॥
दध्यौ चैवं मयाऽऽराध्योऽन्योऽपि चक्री जिनस्त्वयम् । विशेषेण यतो भक्तिमिन्द्रा अप्यस्य कुर्वते ॥ ८९ ॥
ततः सुवस्त्राण्यादाय सोऽनर्घ्याभरणानि च । आगत्य ढौकयामास प्रभोरेवं शशंस च ॥ ९० ॥
तवाऽऽज्ञाकारकः स्वामिन् ! पूर्वदिक्पालकोऽस्म्यहम् । आदेष्टव्यं सदा कृत्यं स्वकिङ्करसमस्य मे ॥ ९१ ॥

भगवानपि सम्मान्य दैवतं विससर्ज तम् । याम्यां प्रति दिशं सोऽथ चलति स्म सुदर्शनः ॥ ९२ ॥
तीर्थस्य वरदामस्याऽऽसन्ने गत्वा स्थितश्च सः । तस्याऽधिष्ठायकं शान्तिस्तथैवाऽसाधयत् प्रभुः ॥ ९३ ॥
गत्वाऽथ वारुणीमाशां प्रभासस्याऽधिदैवतम् । साधयित्वोत्तरस्यां तु ययौ सिन्धुनदीतटे ॥ ९४ ॥
तत्राऽपि पूर्वविधिना साधिता सिन्धुदेवता । आगत्याऽऽढौकयत स्नानपीठं रत्नमयं विभोः ॥ ९५ ॥
शातकुम्भमयाः कुम्भा रौप्या मृन्मयकास्तथा । अन्यां च स्नानसामग्रीं सुवस्त्राभरणानि च ॥ ९६ ॥
ऊचे च सर्वदा स्वामिन्नाज्ञाकारिण्यहं तव । इत्युक्त्वा साऽपि स्वस्थानं विसृष्टा विभुना ययौ ॥ ९७ ॥
उत्तीर्य्य चर्मरत्नेन सिन्धुं सेनापतिस्ततः । विभूपान्ते साधयित्वा प्रतीचीखण्डमागतः ॥ ९८ ॥
कृतपूजं ततश्चक्रं वैताढ्यस्याऽगमत्तले । वैताढ्यादिकुमारश्च वशवर्त्त्यभवत् प्रभोः ॥ ९९ ॥
गुहाखण्डप्रपाताया द्वारमुद्घाटितं स्वयम् । कृतमालसुरश्चाऽऽज्ञां जगद्भर्तुः प्रपन्नवान् ॥ १०० ॥
तत्रोन्मग्नाऽथ निमग्ना द्वे नद्यावतिदुस्तरे । चकार वर्धकिः सद्यः पद्यां तत्र मनोहराम् ॥ १०१ ॥
गुहायां प्रविवेशाऽथ प्रभुः सैन्यसमन्वितः । काकिन्याऽथ तमो हर्तुं विदधे मण्डलानि च ॥ १०२ ॥
पञ्चाशद्योजनान्येकोनपञ्चाशच्च मण्डली । एवं जज्ञे ससैन्योऽथ परतो निरगाद् बहिः ॥ १०३ ॥
तत्रापातचिलाताख्यान् म्लेच्छान् भरतचक्रिवत् । वशे चकार तरसा महापुण्यप्रभावयुक् ॥ १०४ ॥
सेनान्या साधयित्वाऽथ द्वितीयं सिन्धुनिष्कुटम् । हिमवत्पर्वतस्याऽधिदेवं साधयति स्म सः ॥ १०५ ॥

गिरौ वृषभकूटाख्ये निजं नाम लिलेख च । गङ्गोत्तरं निष्कुटं चाऽसाधयद् वाहिनीपतिः ॥ १०६ ॥
तमिस्रायां नाट्यमालं संसाध्य निरगाद् विभुः । गङ्गां च साधयित्वाऽस्याः कूले तस्याऽथ तस्थुषः ॥१०७॥
द्वादशयोजनायामा नवयोजनविस्तृताः । मञ्जूषाकृतयः प्रादुर्बभूवुर्निधयो नव ॥ १०८ ॥ (युग्मम्)
नैसर्पः पाण्डुकश्चैव पिङ्गलः सर्वरत्नकः । महापद्मः कालमहाकालौ माणवशङ्खकौ ॥ १०९ ॥
स्कन्धावारपुरादीनां निवेशाः प्रथमे निधौ । सर्वेषां धान्यबीजानामुत्पत्तिश्च द्वितीयके ॥ ११० ॥
नराणां महिलानां च हस्तिनां वाजिनां तथा । आभरणविधिः सर्वो निधौ पिङ्गलके भवेत् ॥ १११ ॥
चतुर्दशाऽपि रत्नान्युत्पद्यन्ते सर्वरत्नके । महापद्मे च वस्त्राणां रङ्गादीनां च सम्भवः ॥ ११२ ॥
काले कालत्रयज्ञानं महाकाले च कीर्तितः । स्वर्णरूप्यलोहमणिप्रवालानां च सम्भवः ॥ ११३ ॥
युद्धनीतिः समग्राऽपि सर्वप्रहरणानि च । तनुत्राणादि योधानां योग्यं माणवके भवेत् ॥ ११४ ॥
तूर्याङ्गानि समस्तानि काव्यं चाऽपि चतुर्विधम् । निधौ सञ्जायते शङ्खे नाट्यनाटकयोर्विधिः ॥ ११५ ॥
तेषु पल्योपमायुष्का वसन्ति खलु देवताः । निधानसमनामानः समये परिकीर्तिताः ॥ ११६ ॥
तथैवाऽऽन्मवशं चक्रे गङ्गायाः पूर्वनिष्कुटम् । एवं षट्खण्डभरतक्षेत्रं प्रभुरसाधयत् ॥ ११७ ॥
कृतदिग्विजयः सोऽथ पुनरागान्निजं पुरम् । प्रविश्य तत्र गेहे च जगामोत्सवपूर्वकम् ॥ ११८ ॥

१ सिद्धान्ते ।

द्वात्रिंशन्मुकुटबद्धमहीपालसहस्रकैः । प्रारब्धश्चक्रवर्तित्वाऽभिषेको द्वादशाब्दिकः ॥ ११९ ॥
अभिषेकोत्सवं कृत्वा राजैकैको दिने दिने । स्वामिने प्रचुरं द्रव्यं ददौ द्वे द्वे च कन्यके ॥ १२० ॥
चतुःषष्टिसहस्राणि ततोऽभूवन् प्रिया विभोः । अत्यन्तरूपलावण्यविनिर्जितसुराङ्गनाः ॥ १२१ ॥
सेनापतिप्रभृतीनि रत्नानि च चतुर्दश । तत्र यक्षसहस्रेणैकैकं हि समधिष्ठितम् ॥ १२२ ॥
चतुरशीतिलक्षाणि करिणां वाजिनां तथा । ध्वजाङ्काः शस्त्रसम्पूर्णास्तत्प्रमाणा रथा अपि ॥ १२३ ॥
द्विसप्ततिसहस्राणि पुराणामृद्धिशालिनाम् । ग्रामाणां च पदातीनां कोट्यः षण्णवतिस्तथा ॥ १२४ ॥
द्वात्रिंशतं सहस्राणि देशानां भूभुजां तथा । द्वात्रिंशद्बद्धतरुणीनाटकानां च रङ्गिणाम् ॥ १२५ ॥
रत्नाकराद्याकराणां सहस्राणि च विंशतिः । पत्तनान्यष्टचत्वारिंशत्सहस्रमितानि च ॥ १२६ ॥
एवं पालयतश्चक्रिपदवीमसमां प्रभोः । ययौ वर्षसहस्राणां विंशतिः पञ्चसंयुता ॥ १२७ ॥
अत्रान्तरे ब्रह्मलोकेऽरिष्टप्रस्तरवासिनाम् । पीठं सारस्वतादीनां चलति स्माऽमृताशिनाम्[1] ॥ १२८ ॥
विज्ञायाऽवधिना तेऽथ व्रतस्य समयं विभोः । तीर्थं प्रवर्तयेत्याऽऽचचक्षिरे सैन्यवन्दिवत् ॥ १२९ ॥
विजानंस्तत् स्वयं स्वामी तैश्चैवं ज्ञापितस्ततः । ददौ सांवत्सरं दानं याचकेभ्यो यथारुचि ॥ १३० ॥
ततश्चक्रायुधं राज्ये निवेश्य तनयं निजम् । बभूव भगवान् दीक्षाग्रहणार्थं समुद्यतः ॥ १३१ ॥

१ देवानाम् ।

अत्रान्तरे सुराधीशाः सर्वेऽपि चलितासनाः । आययुः शान्तिनाथस्य कर्तुं निष्क्रमणोत्सवम् ॥ १३२ ॥
सर्वार्थसंज्ञां शिबिकामारुरोहाऽथ तीर्थकृत् । चामराभ्यां वीज्यमानो धृतच्छत्रश्च मस्तके ॥ १३३ ॥
उत्क्षिप्ता मानुषैः पूर्वं शिबिका सा जगद्गुरोः । सुरासुरेन्द्रगरुलनागेन्द्रैश्च ततस्ततः ॥ १३४ ॥
उद्वूढा सा पुरो देवैर्दक्षिणाङ्गे तथाऽसुरैः । पश्चाद्भागे च गरुलैर्नागैरुत्तरतस्तथा ॥ १३५ ॥
नृत्यं प्रकटयन्ति स्म पुरो भगवतो नटाः । पठन्ति स्मोच्चकैर्भट्टाः स्वामिन् ! जय जयेति च ॥ १३६ ॥
सद्गुणान् वर्णयन्ति स्मैश्वर्यादीन् भुवनोत्तरान् । नानाच्छन्दैर्जगद्धर्तुर्नरा रासकदायकाः ॥ १३७ ॥
ततो भम्भामृदङ्गादीन्यातोद्यानि गुरुस्वरम् । वादयन्ति स्म साटोपास्तत्पाठकुशला नराः ॥ १३८ ॥
चक्रे च हाहाहूहूभ्यां सप्तस्वरसमन्वितम् । सम्मूर्च्छनाग्रामलयमात्राढ्यं गीतमुत्तमम् ॥ १३९ ॥
रम्भा तिलोत्तमा चैवोर्वशी मेना सुकेशिका । हावभावविलासाढ्यं नृत्यं चक्रुः पुरः प्रभोः ॥ १४० ॥
स एवंविधसामग्र्या निर्गत्य नगराच्छनैः । उद्यानं प्रवरं प्राप सहस्राम्रवणाऽभिधम् ॥ १४१ ॥
शिबिकायाः समुत्तीर्य विमुच्याऽऽभरणान्यथ । पञ्चभिर्मुष्टिभिः केशानुच्चखान जिनेश्वरः ॥ १४२ ॥
वस्त्राञ्चले गृहीत्वा तान् क्षीराब्धौ मघवाऽक्षिपत । मृदङ्गनादसंयुक्तं तुमुलं च न्यवारयत् ॥ १४३ ॥
ज्येष्ठासितचतुर्दश्यां शशाङ्के भरणीगते । कृत्वा सिद्धनमस्कारं प्रभुश्चारित्रमाददे ॥ १४४ ॥
कृतषष्ठतपाः सार्धं सहस्रेण महीभुजाम् । आत्तसामायिकः सोऽथ विजहार महीतले ॥ १४५ ॥

कस्मिंश्चित्सन्निवेशेऽथ परमान्नेन कारितः । सुमित्राख्यगृहस्थेन पारणं परमेश्वरः ॥ १४६ ॥
चतुर्ज्ञानधरः सोऽथ ग्रामाकरपुराकुलाम् । स्वामी विहरति स्मोर्वीं महासत्त्वशिरोमणिः ॥ १४७ ॥
मासान् छद्मस्थकालेऽष्टौ विहृत्य पुनराययौ । स हास्तिनपुरे तत्र सहस्राम्रवणे वरे ॥ १४८ ॥
तत्र पत्रप्रसूनादिनन्दिभृन्नन्दिनामकः । सुविशालोऽभवद्वृक्षस्तस्थौ तस्य तले प्रभुः ॥ १४९ ॥
प्रभोः प्रवर्तमानस्य शुक्लध्याने वरे तदा । कृतषष्ठस्य पौषस्य शुद्धायां नवमीतिथौ ॥ १५० ॥
भरणीस्थे निशानाथे क्षीणकर्मचतुष्टये । उत्पन्नमतुलं नित्यं केवलं ज्ञानमुज्ज्वलम् ॥ १५१ ॥ ( युग्मम् )
चतुर्विधैस्ततो देवैः समेत्य चलितासनैः । अकारि रम्यं समवसरणं जिनहेतवे ॥ १५२ ॥
ऊर्व्यां योजनमात्रायां वायुनाऽशुभपुद्गलाः । अपनीतास्ततो गन्धोदकेन शमितं रजः ॥ १५३ ॥
आद्यो मणिमयो वप्रः कपिशीर्षसमन्वितः । द्वितीयश्च हेममयः सुरत्नकपिशीर्षकः ॥ १५४ ॥
सुवर्णकपिशीर्षाङ्कस्तृतीयो रूप्यनिर्मितः । विमानज्योतिर्भवनवासिभिस्ते कृताः सुरैः ॥ १५५ ॥
जज्ञे सतोरणा तेषु प्रत्येकं द्वाश्चतुष्टयी । स्वाम्यङ्गाद् द्वादशगुणस्तन्मध्येऽशोकपादपः ॥ १५६ ॥
चत्वारि परितस्तस्य सिंहासनवराणि च । छत्रत्रयं चामराणि व्यन्तरैर्विहितं ह्यदः ॥ १५७ ॥
प्रविश्य पूर्वद्वारेण कृततीर्थनमस्कृतिः । निषसाद प्रसन्नास्यः पूर्वसिंहासने प्रभुः ॥ १५८ ॥
शेषेषु तत्प्रतिच्छन्दाः पृष्ठे भामण्डलं प्रभोः । पुरः कुसुमवृष्टिश्चाऽऽजानुमात्री सुरैः कृता ॥ १५९ ॥

नदन्ति स्माऽम्बरतले देवदुन्दुभयस्तदा । अथो निषेदुराग्नेय्यां साधुसाध्वीसुराङ्गनाः ॥ १६० ॥
ज्योतिष्कभवनपतिव्यन्तराणां च देवताः । निषेदुर्नैर्ऋते कोणे वायव्ये ते सुराः पुनः ॥ १६१ ॥
वैमानिकामराऽमर्त्यमनुष्याणां च योषितः । एते निषेदुरीशाने मुख्यप्राकारमध्यगाः ॥ १६२ ॥
पूर्वोक्तदिग्विभागेषु तिर्यञ्चस्त्यक्तमत्सराः । सन्निषण्णा द्वितीयस्य प्राकारस्याऽन्तरेऽखिलाः ॥ १६३ ॥
तस्थुस्तृतीयवप्रान्तर्वाहनान्यखिलानि च । एवं समवसरणस्थितिः किञ्चित्प्रकीर्तिता ॥ १६४ ॥
कल्याणनामधेयेन पुंसागत्य निवेदिताः । स्वामिनः केवलोत्पत्तिश्चक्रायुधमहीपतेः ॥ १६५ ॥
गत्वाऽसौ विधिना तत्र नत्वा स्तुत्वा जिनेश्वरम् । निषसाद यथास्थानं पुरो विरचिताञ्जलिः ॥ १६६ ॥
मधुक्षीरास्रवलब्ध्या युक्तयातिशयेन च । भाषया विदधे धर्मदेशनां भगवानथ ॥ १६७ ॥
निर्जिताः शत्रवो लोके महाराज ! त्वयौजसा । नाद्याऽपि निर्जिता देहे रिपवस्त्विन्द्रियाह्वयाः ॥ १६८ ॥
शब्दरूपरसगन्धस्पर्शाख्या विषयाः खलु । अजितेष्विन्द्रियेष्वेते महानर्थविधायिनः ॥ १६९ ॥
वितत्य कर्णौ व्याधस्य गीताकर्णनतत्पराः । हरिणा मरणं यान्ति श्रोत्रेन्द्रियवशंवदाः ॥ १७० ॥
शलभः कनकाकारां प्रदीपस्योल्लसच्छिखाम् । पश्यन् प्रविश्य तत्राऽऽशु म्रियतेऽनिर्जितेक्षणः ॥ १७१ ॥
मांसपेशीरसास्वादलुब्धः कैवर्तवश्यताम् । यात्यगाधजलस्थोऽपि मीनो रसनया जितः ॥ १७२ ॥
भृङ्गः करिमदाघ्राणलुब्धः प्राप्नोति पञ्चताम् । दुःखं वा सहते नागो घ्राणेन्द्रियवशः खलु ॥ १७३ ॥

हस्तिनीवपुषः स्पर्शलुब्धोऽथ करिपुङ्गवः । आलानबन्धनं तीक्ष्णाङ्कुशघातं सहेत भोः ! ॥ १७४ ॥
त्यजन्ति विषयानेवंविधान् सत्पुरुषाः क्षणात् । त्यक्ताः प्रियाः स्वरूपेण गुणधर्मेण ते यथा ॥ १७५ ॥
चक्रायुधेन पृष्टोऽथ शान्तिनाथो जिनेश्वरः । प्रतिबोधकृते तस्य कथयामास तत्कथाम् ॥ १७६ ॥
इहाऽऽसीद् भरतक्षेत्रे पुरे शौर्यपुराभिधे । दृढधर्म इति ख्यातो विक्रान्तः पृथिवीपतिः ॥ १७७ ॥
यथार्थनाम्नी तस्याऽभूत् प्रेयसी शीलशालिनी । तत्कुक्षिसम्भवस्तस्य गुणधर्माभिधः सुतः ॥ १७८ ॥
कलावानिन्दुवल्लोकलोचनानन्ददायकः । पञ्चबाण इवाऽशेषकामिनीवल्लभश्च यः ॥ १७९ ॥
सुभगः मग्लः शूरः पूर्वाभाषी प्रियंवदः । दृढसौहृदः सुरूपः स सर्वगुणसंयुतः ॥ १८० ॥
इतश्चेशानचन्द्रस्य भूपते रूपसंयुता । सुता कनकवत्यासीद्वसन्तपुरपत्तने ॥ १८१ ॥
चक्रे तस्याः कृते राज्ञा स्वयंवरमण्डपः । गुणधर्मोऽथ तत्राऽगादन्ये च पृथिवीभुजः ॥ १८२ ॥
राज्ञा दत्तगृहे स्थित्वा स स्वयंवरमण्डपम् । ययौ द्रष्टुमथो तत्राऽऽगमत् साऽपि नृपात्मजा ॥ १८३ ॥
तया निरीक्षितः सोऽथ तेनासावपि वीक्षिता । जाता च दृष्टिविक्षेपेणाऽनुरागपरात्मनि ॥ १८४ ॥
तमीक्षमाणा मानन्दं दृष्ट्या सा सदनं ययौ । कुमारोऽपि वलित्वाऽगात् स्वावासे सपरिच्छदः ॥ १८५ ॥
निश्युपान्ते कुमारस्य चेट्येका प्रेषिता तया । तस्मै समर्पयामास सैकां चित्रस्य पट्टिकाम् ॥ १८६ ॥
ददर्श तत्र लिखितां कुमारः कलहंसिकाम् । तदधः श्लोकमेकं च ततो वाचयति स्म तम् ॥ १८७ ॥

आदौ दृष्टे प्रिये सानुरागाऽसौ कलहंसिका । पुनस्तद्दर्शनं शीघ्रं वाञ्छन्त्येव वराक्यहो ! ॥ १८८ ॥
कुमारोऽथ पुरस्तस्या लिखित्वा कलहंसकम् । तस्याऽधस्तादिति श्लोकं लिलेख च महामतिः॥ १८९ ॥
कलहंसोऽप्यमौ सुभ्रु ! क्षणं दृष्ट्वाऽनुरागवान् । पुनरेव प्रियां द्रष्टुमहो ! वाञ्छन्त्यनारतम् ॥ १९० ॥
कुमारीप्रेषिते साऽथ सुताम्बूलविलेपने । कुमारस्यार्पयामास सुगन्धकुसुमानि च ॥ १९१ ॥
कुमारेणाऽपि बद्धानि कुसुमान्युत्तमाङ्गके । ताम्बूलमुपभुक्तं च न्यस्तमङ्गे विलेपनम् ॥ १९२ ॥
पारितोषिकमेतस्यै दत्तो हारश्च निर्मलः । सोचे कुमार ! कन्यायाः शृणु त्वं वाचिकं ननु ॥ १९३ ॥
कृत्वैकान्तमसौ तच्च श्रोतुमभ्युद्यतोऽभवत् । माऽवोचद्राजनन्दिन्या तयेदं कथितं तव ॥ १९४ ॥
करिष्ये वरमालाया निक्षेपं ते प्रगे परम् । किञ्चित्कालं न विषयसेवा कार्या त्वया प्रिय ! ॥ १९५ ॥
प्रतिपन्नमिदं तेन तया तस्या निवेदितम् । प्रभाते च निचिक्षेप तत्कण्ठे साऽथ तां स्रजम् ॥ १९६ ॥
विसृष्टास्तेऽथ संमान्य भूभुजाऽनेन पार्थिवाः । कारितो गुणधर्मश्च कन्यकायाः करग्रहम् ॥ १९७ ॥
श्वशुरं समनुज्ञाप्य गृहीत्वा प्रेयसीं च ताम् । स्वपुरे स समागत्य तां मुमोचाऽऽलये वरे ॥ १९८ ॥
अथाऽन्येद्युः समीपेऽस्या निषण्णः स नृपात्मजः । ब्रूहि प्रहेलिकां काञ्चिदित्युक्तश्चाऽनयाऽवदत्॥ १९९ ॥
स्थले जाता जले स्वैरं याति तेनै[1] न पूर्यते । जनप्रतारिणी नित्यं वद सुन्दरि ! का त्वसौ ॥ २०० ॥

१ जलेन.

विचिन्त्य कनकवत्योक्तम् ' तरी ' इति ॥ तया चाऽपाठिः—
पयोधरभराक्रान्ता तन्वङ्गी गुणसंयुता । नरस्कन्धसमारूढा का प्रयात्यवलम्बिता ? ॥ २०१ ॥
कुमारेणोक्तम्—कावाकृतिः ॥
क्षणं विनोदं कृत्वैवं कलावत्या तया सह । गुणधर्मकुमारः स्वप्रामादं पुनरागतः ॥ २०२ ॥
स्नातभुक्तविलिप्तस्याऽऽस्थानस्थस्याऽस्य सन्निधौ । परिव्राडाययावेकः प्रतीहारनिवेदितः ॥ २०३ ॥
तेन दत्तासनोऽप्येनं स्वकाष्ठासनसंस्थितम् । प्रणामपूर्वं पप्रच्छाऽऽगमहेतुं नृपात्मजः ॥ २०४ ॥
सोऽवदद्भैरवाचार्येणाऽहं भद्र ! नियोजितः । तवाऽऽह्वानकृते कार्यं स एव कथयिष्यति ॥ २०५ ॥
काऽस्त्यसौ भैरवाचार्यः कुमारेणेति जल्पिते । सोऽब्रवीदमुकस्थाने नगराद्बहिरस्त्यसौ ॥ २०६ ॥
अहं प्रातः समेष्यामीन्युक्तस्तेन ययावसौ । पपाठाऽत्रान्तरे तस्य पुरः कालनिवेदकः ॥ २०७ ॥
अयं प्राप्योदयं पूर्वं स्वप्रतापं वितत्य च । गततेजा अहो सम्प्रत्यस्तं याति दिवाकरः ॥ २०८ ॥
सन्ध्याकालोचितं कृत्यं कृत्वाऽथ नृपनन्दनः । समतिक्रमयामास यामिनीं सुखनिद्रया ॥ २०९ ॥
पुनः कालनिवेदकेन पठितम्—
निहतप्रतिपक्षोऽसौ सर्वसत्त्वोपकारकृत् । उदयं याति तिग्मांशुरन्योऽप्येवं प्रतापवान् ॥ २१० ॥
उत्थाय गुणधर्मोऽथ प्रातःकृत्यं विधाय च । प्रययौ भैरवाचार्यसमीपे सपरिच्छदः ॥ २११ ॥

व्याघ्रकृत्तिनिषण्णोऽसौ कुमारेण निरीक्षितः । लगयित्वा शिरो भूमौ भक्तिपूर्वं च वन्दितः ॥ २१२ ॥
ससम्भ्रमः स योगीन्द्रो दर्शयित्वा स्वमासनम् । त्वमप्युपविशाऽत्रेति कुमारं तमभाषत ॥ २१३ ॥
विनीतात्मा कुमारस्तं प्रत्यूचे भगवन् ! न मे । गुरोः समासने युक्तमुपवेष्टुं कदाचन ॥ २१४ ॥
स्वपदात्युत्तरीयेऽथोपविश्यैवं जगाद सः । प्रभो ! त्वया कृतार्थोऽहं कृतोऽभ्येत्य पुरे स्वयम् ॥ २१५ ॥
योग्यप्यूचे कुमार ! त्वं मान्योऽसि मम सर्वदा । परं निष्किञ्चनोऽस्म्येष स्वागतं किं करोमि ते ? ॥ २१६ ॥
कुमारोऽप्यब्रवीदाशीर्वाद एव भवादृशाम् । स्वागतस्य क्रियाऽस्माकमित्युक्ते सोऽवदत् पुनः ॥ २१७ ॥
भक्तिः प्रेम प्रियालापः सम्मानं विनयस्तथा । प्रदानेन विना लोके सर्वमेतद् न शोभते ॥ २१८ ॥
कुमारः पुनरप्यूचे सम्यग्दृष्ट्याऽवलोकनम् । सम्यगाज्ञाप्रदानं च विश्राणनमिदं हि वः ॥ २१९ ॥
अथाऽभाषिष्ट योगीन्द्रो भद्र ! मन्त्रोऽस्ति मे वरः । चक्रे तस्याष्ट वर्षाणि मया जापपरिश्रमः ॥ २२० ॥
तस्य विघ्नप्रतिघातं यद्येकरजनीं भवान् । करोति तदयं सर्वः प्रयासः सफलो भवेत् ॥ २२१ ॥
सोऽवदत्तन्मया कार्यं ब्रूत कस्मिन् दिने प्रभो !। योगी स्माहासितचतुर्दश्यां प्रेतवने निशि ॥ २२२ ॥
खड्गव्यग्रकरेणैकाकिना राजसुत ! त्वया । आगन्तव्यमहं तत्र स्थास्याम्यात्मचतुर्थकः ॥ २२३ ॥ ( युग्मम् )
एवमस्त्विति जल्पित्वा कुमारः स्वगृहं गतः । चतुर्दश्याश्च यामिन्यां तथा तत्र ययावसौ ॥ २२४ ॥
कुमारो योगिनाऽभाणि भविष्यन्ति विभीषिकाः । तत्त्वया रक्षणीयोऽहमेते चोत्तरसाधकाः ॥ २२५ ॥

कुमारोऽप्योचत स्वस्थः कुरु मन्त्रस्य साधनम् । को नाम कर्तुं विघ्नं ते समर्थो मयि रक्षके ॥ २२६ ॥
कृत्वाऽथ मण्डलं तत्र स्थापितो योगिना शवः । प्रज्वाल्य वह्निं तस्याऽऽस्ये चक्रे होमविधिस्ततः ॥ २२७ ॥
पूरयन्निव दिक्चक्रं गगनं स्फोटयन्निव । निर्घातोऽभूद् गुरुतरो विश्वं बधिरयन्निव ॥ २२८ ॥
संजाताऽथ द्विधा धात्री तेन रन्ध्रेण निर्गतः । कालः करालः पातालाद् नर एकोऽतिभीषणः ॥ २२९ ॥
ऊचे च किमरे ! पाप ! दिव्यकान्ताभिलाषुकः(क) । क्षेत्रपालोऽत्र विज्ञातो मेघनादस्त्वया नहि ॥ २३० ॥
मम पूजामकृत्वा त्वं मन्त्रसिद्धं समीहसे । एषोऽपि राजतनयस्त्वयाऽऽर्यो विप्रतारितः ॥ २३१ ॥
इत्युक्त्वा सिंहनादं सो विदधे तज्जिघांसया । त्रयोऽपि योगिनः शिष्या निपेतुस्ते महीतले ॥ २३२ ॥
सोऽथ प्रोक्तः कुमारेण रे! त्वं गर्जसि किं वृथा ? । विद्यते तव शक्तिश्चेत्तद्युध्यस्व मया सह ॥ २३३ ॥
कुमारोऽप्यमुचत् खड्गं तं निरीक्ष्य निरायुधम् । प्रचण्डभुजदण्डाभ्यां तौ युद्धं चक्रतुस्ततः ॥ २३४ ॥
युध्यमानोऽथ स क्षेत्रपालो बलवता क्षणात् । कुमारेण समाक्रान्तो वज्रसारस्वबाहुना ॥ २३५ ॥
सोऽथ तुष्टोऽब्रवीत् साधो ! निर्जितोऽहं त्वया खलु । याचस्व रुचितं किञ्चिद्यत्ते सम्पादयाम्यहम् ॥ २३६ ॥
जगादेवं कुमारस्तं विमुच्य स्वभुजग्रहात् । चेत्सिद्धोऽसि कुरु त्वं तद्योगिनोऽस्य समीहितम् ॥ २३७ ॥
प्रोक्तं क्षेत्राधिपेनाऽस्य यथेप्सितफलप्रदः । सिद्धः सर्वोत्तमो मन्त्रो माहात्म्येन तवैव हि ॥ २३८ ॥
ततः स्वं वाञ्छितं ब्रूहि येन तत्पूरयाम्यहम् । महाभाग्य ! भवेद्यस्मादमोघं देवदर्शनम् ॥ २३९ ॥

कुमारेण ततोऽभाणि यद्येवं तत्तथा कुरु । यथा मे वशमायाति भार्या कनकवत्यसौ ॥ २४० ॥
ज्ञात्वा ज्ञानेन सोऽवादीद् भाविनी सा वशे तव । नूनं कामितरूपेण तच्च भावि तवाऽनघ ! ॥ २४१ ॥
एवं दत्त्वा वरं तस्याऽदृश्योऽभूत् क्षेत्रपालकः । सिद्धमन्त्रः स योगीन्द्रः कुमारं प्रशशंस च ॥ २४२ ॥
स्मर्तव्योऽहं त्वया भूयः परोपकृतिकर्मठ ! । इत्युदित्वा निजं स्थानं शिष्यैः सह ययावसौ ॥ २४३ ॥
प्रक्षाल्याऽङ्गं कुमारोऽपि प्रविवेश निजं गृहम् । सुष्वाप तत्र शय्यायां वीरवेषं विमुच्य तम् ॥ २४४ ॥
द्वितीयदिनयामिन्या आद्ययामे गते सति । अदृश्यरूपवान् सोऽथ प्रियायाः सदनं ययौ ॥ २४५ ॥
ददर्श तत्र कनकवतीं चेटीद्वयाऽन्विताम् । एवमूचे च सा दास्यौ कियन्माना निशा हले ! ॥ २४६ ॥
ताभ्यामूचे न चाऽद्याऽपि पूर्यते प्रहरद्वयी । वर्त्तते तत्र गमनवेला स्वामिनि ! संप्रति ॥ २४७ ॥
ततः स्नातविलिप्ताङ्गी वस्त्रालङ्करणाश्चिता । देवावासमसमानं सा विमानं निर्ममे क्षणात् ॥ २४८ ॥
तत्राऽधिरुह्य दासीभ्यां सह यावच्चचाल सा । तद् दृष्ट्वा गुणधर्मोऽपि दध्यौ तावत् सविस्मयः ॥ २४९ ॥
अहो ! विमानमनया खेचर्येव कृतं कथम् । अत्राऽऽरुह्य त्रियामायां कुत्र चैषा प्रयास्यति ॥ २५० ॥
अथवा किं विकल्पेनाऽदृश्यरूपोऽनया सह । गत्वाऽहमपि वीक्षे तद् यत् करोत्यसकौ खलु ॥ २५१ ॥
इति ध्यात्वा विमानैकदेशेऽध्यारुह्य सोऽचलत् । उत्तराभिमुखं तच्च गत्वा दूरमवातरत् ॥ २५२ ॥
महासरोवरासन्ने तत्राऽशोकवनान्तरे । एको विद्याधरस्तेन कुमारेण निरीक्षितः ॥ २५३ ॥

विमानमध्यान्निःसृत्य कुमारस्य प्रियाऽथ सा । कृत्वा प्रणाममेतस्य समीपे समुपाविशत् ॥ २५४ ॥
अन्याश्च योषितस्तिस्रस्त्रागत्य प्रणम्य तम् । निषेदुस्तत्र चाऽन्येऽपि खेचराः समुपाययुः ॥ २५५ ॥
तस्याऽभूद् वनखण्डस्यैशान्यां दिशि मनोहरम् । विशालं निर्मलं श्रीमद्युगादिजिनमन्दिरम् ॥ २५६ ॥
सुवर्णमणिसोपानं भूरिस्तम्भसमुच्छ्रितम् । विमानमिव देवानां तद्विभाति स्म भूस्थितम् ॥ २५७ ॥
क्षणान्तरेण सर्वाणि जग्मुस्तानि जिनालये । प्रारब्धः खेचरैस्तत्र जैनस्नात्रमहोत्सवः ॥ २५८ ॥
ऊचेऽथ खेचरेन्द्रेण कस्या नृत्येऽद्य वारकः । तत्समाकर्ण्य कनकवत्युत्तस्थौ क्षणेन सा ॥ २५९ ॥
संयम्य परिधानं स्वं रङ्गभूमौ प्रविश्य च । हावभावकृतौ दक्षा चक्रे नृत्यविधिं वरम् ॥ २६० ॥
अन्यासां तिसृणां मध्याद्वीणावादनमेकका । वेणुतालावादनं च चक्रुर्दक्षाः क्रमेण ताः ॥ २६१ ॥
गुणधर्मकुमारोऽप्यदृश्यरूपः सविस्मयः । तत्रैकत्र स्थितः सर्वं तत्स्वरूपं व्यलोकयत ॥ २६२ ॥
तदा च कनकवत्या नृत्यन्त्या न्यपतद्भुवि । सुवर्णकिङ्किणीमाला त्रुटित्वा कटिसूत्रकम् ॥ २६३ ॥
शीघ्रमेव कुमारेण प्रच्छन्नं जगृहे सका । आलोकिता न च प्राप्ता रङ्गस्याऽन्ते तया ततः ॥ २६४ ॥
स्वं स्वं स्थानं ययुः सर्वेऽप्यगात् कनकवत्यपि । निजावासं सचेटिका कुमारोऽपि तथैव सः ॥ २६५ ॥
सा तस्थौ स्वगृहे तच्च विमानं संहृतं तया । रात्रिशेषे कुमारोऽपि सुप्त्वापाऽऽगत्य मन्दिरे ॥ २६६ ॥
मतिसागरसंज्ञस्य सख्युः पुत्रस्य मन्त्रिणः । किङ्किणीमालिका साऽथ कुमारेणाऽर्पिता प्रगे ॥ २६७ ॥

इयं भद्र ! प्रियाया मेऽर्पणीया समये त्वया । शिक्षां दत्त्वेति तत्पार्श्वे ययौ तेन सहैव सः ॥ २६८ ॥
अभ्युत्थानं विधायाऽस्य दत्तमासनमेतया । कुमारो न्यषदत्तत्र तस्योपान्ते सखा च सः ॥ २६९ ॥
सारिक्रीडां प्रकुर्वत्या कुमारो विजितस्तया । किञ्चिद्ग्रहणकं नाथ ! भारयेत्युदितं ततः ॥ २७० ॥
तेनाऽवलोकितं वक्त्रं सख्युः सोऽपि समार्पयत् । किङ्किणीमालिकां तस्याः कृष्ट्वा निवसनान्तगात् ॥ २७१ ॥
दृष्ट्वा सोचे मदीयेयं युवाभ्यां क्षुद्रघण्टिका । क्व सम्प्राप्ता कुमारोऽथाऽवादीत कुत्र पपात ते ? ॥ २७२ ॥
स्थानं सम्यग् न जानामि तयेत्युक्ते नृपात्मजः । उवाच मम मित्रोऽयं महानैमित्तिकः प्रिये ! ॥ २७३ ॥
पातस्थानं तवैतस्याः कथयिष्यति निश्चितम् । पृष्टस्तया सोऽप्यवादीत श्वोऽहं कथयिताऽस्मि ते ॥ २७४ ॥
अथोत्थाय समायातः कुमारो निजमन्दिरम् । पुनस्तथैव तच्चैत्ये ययौ रात्रौ तया सह ॥ २७५ ॥
वीणाया वादनं तस्याः कुर्वत्याः पतितं तदा । कथञ्चिद् नूपुरं पादात् कुमारेणाऽऽददे च तत् ॥ २७६ ॥
तदप्यन्विष्य बहुधा मा स्वगेहं समागता । अर्पयामास तदपि मित्रस्य नृपनन्दनः ॥ २७७ ॥
द्वितीयेऽहनि तद्गेहं सोऽथ मित्रसमन्वितः । प्रययावुपविष्टश्च तया दत्तासने प्रभुः ॥ २७८ ॥
शास्त्रगोष्ठीं क्षणं कृत्वा तया स मतिसागरः । पृष्टो निरूपितं भद्र ! किं निमित्तं त्वया वद ? ॥ २७९ ॥
सोऽथाऽवादीन्निमित्तस्य बलेन ननु वेद्म्यहम् । तवाऽन्यदपि तन्वङ्गि ! नष्टं किञ्चिद् विभूषणम् ॥ २८० ॥

१ अर्पय.

ततः साशङ्कचित्ताऽपि सावहित्था जगाद सा । किं तद्विभूषणं नाम निमित्तज्ञ ! निवेदय ॥ २८१ ॥
किं त्वं स्वयं न जानामीत्युक्त्वा भर्ताऽब्रवीत् पुनः । जानामि न पुनस्तस्यं पातस्थानं स्मराम्यहम् ॥ २८२ ॥
कुमारोऽवददन्येन केनचित् कथितं मम । दूरं गतायास्त्वत्पत्न्या नूपुरं च्युतमित्यहो ! ॥ २८३ ॥
तद्येन जगृहे सुभ्रु ! विज्ञातः स मया नरः । गृहीतं नूपुरं तच्च तस्य हस्ताद् बलादपि ॥ २८४ ॥
दध्यौ कनकवत्येवं प्रयोगेणेह केनचित् । मद्भर्त्रा मम वृत्तान्तो नूनं सर्वोऽपि वीक्षितः ॥ २८५ ॥
अथवा—
क्षुरभद्रं कला चान्द्री चौरिका क्रीडितानि च । प्रकटानि तृतीयेऽह्नि स्युश्छन्नं सुकृतानि च ॥ २८६ ॥
विचिन्त्यैवमभाषिष्ट तन्मञ्जीरं क्व मे प्रिय ! । समर्पितं च तत्तस्यास्तन्मित्रेण तदाज्ञया ॥ २८७ ॥
ततश्च सा पुनः स्माह सत्यमाख्याहि कान्त ! मे । इदं त्वया क्व सम्प्राप्तं सोऽवदत्र पतितं क्व ते ? ॥ २८८ ॥
यत्र स्थाने पपातेदं तद् दृष्टं भवता न वा । स तस्या इति पृच्छन्त्या भूयोऽनिष्टोत्तरं व्यधात् ॥ २८९ ॥
मोचे स्वयं त्वया दृष्टं तत्स्थानं यदि तद्वरम् । तन्मेऽग्निनाऽपि नो शुद्धिर्यद्यन्येन निवेदितम् ॥ २९० ॥
एवमुक्त्वाऽसकौ वामकरन्यस्तशिरोधरा । चिन्तया विगतोत्साहा बभूवाऽधोमुखी क्षणात् ॥ २९१ ॥
हासयित्वा कुमारस्तां परिहासस्य वार्तया । गतो निजगृहं रात्रौ तथैव पुनराययौ ॥ २९२ ॥
सा सख्याऽत्रान्तरेऽभाणि वेलातिक्रामति स्फुटम् । रोषं विद्याधरः कर्ता स्वामिन्येवं विचिन्तय ॥ २९३ ॥

ततो दीर्घं विनिःश्वस्य तयैवं परिभाषितम् । सख्येतद्विषमं कार्यं मन्दभाग्या करोमि किम् ? ॥ २९४ ॥
यतः प्रवर्त्तमानाऽहं कुमारीत्वे पितुर्गृहे । तेन विद्याधरेन्द्रेण शपथं कारिता ह्यमुम् ॥ २९५ ॥
मयाऽनुज्ञातया कान्तः सेवनीयस्त्वया खलु । आगन्तव्यं तथाऽवश्यं निश्युपान्ते सदा मम ॥ २९६ ॥
पित्रोर्मयोपरोधेनाऽनुरागेण च राजभूः । उदूढोऽभिमतश्चाऽभूत् तस्याऽहमपि सम्मता ॥ २९७ ॥
कथञ्चित्तत्र गच्छन्ती ज्ञाताऽहममुना सखि ! । सोऽपि विद्याधरोऽनेन साक्षादेव विलोकितः ॥ २९८ ॥
ततो मे वल्लभस्तेन खेचरेण हनिष्यते । हन्ताऽथवा खेचरो मामित्याशङ्कां करोम्यहम् ॥ २९९ ॥
अन्यच्च—
नवीनयौवनारम्भो बह्वपायः प्रवर्तते । उत्तमे च मम ख्याते पितृश्वशुरयोः कुले ॥ ३०० ॥
अत्यन्तविषमो लोको यद्वा तद्वा प्रजल्पति । कार्याणां गहनत्वेनाऽऽकुलीभूताऽस्मि सर्वथा ॥ ३०१ ॥
सोचे स्वामिनि ! यद्येवं तिष्ठ त्वं तत्र याम्यहम् । सखी मेऽपटुदेहाऽस्तीत्याख्यास्यामि तदग्रतः ॥ ३०२ ॥
अथो कनकवत्याख्यदेवं कुरु शुभाशये ! । इत्युक्त्वाऽर्पयति स्माऽस्या विमानं विरचय्य सा ॥ ३०३ ॥
तस्मिन्नारुह्य सा दासी ययौ तत्र तया सह । गुणधर्मकुमारोऽपि चिन्तयन्निति मानसे ॥ ३०४ ॥
अद्य तस्याऽपनेष्यामि ध्रुवं विद्याधरेशताम् । गुर्वीं च प्रेक्षणश्रद्धां जीवलोकनिवासिनाम् ॥ ३०५ ॥
प्रारब्धे खेचरैः स्नात्रमथ श्रीमज्जिनेशितुः । चेटी विमानादुत्तीर्य्य प्राविशत् सा जिनालये ॥ ३०६ ॥

कुमारोऽपि तथैवाऽस्थाच्छन्नः सर्वं विलोकयन् । एकेन खेचरेणैवं चेटिका सा प्रजल्पिता ॥ ३०७ ॥
किमद्य महती वेला लग्ना ते स्वामिनी क्व वा । साऽपि कृत्वोत्तरं पूर्वमूचेऽहं प्रेषिता तया ॥ ३०८ ॥
तच्छ्रुत्वा खेचरेन्द्रोऽसौ कोपेन स्फुरिताऽधरः । प्रोवाच कुरुत स्नात्रं भो यूयं वृषभप्रभोः ॥ ३०९ ॥
अहं त्वस्याश्चिकित्सामि पापिष्ठायाः शरीरकम् । इत्युक्त्वा दासचेटीं तां मूर्धजेष्वग्रहीदसौ ॥ ३१० ॥
कुमारोऽपि परिकरं बबन्ध निबिडं तदा । खड्गं च प्रगुणीचक्रे भग्नश्च प्रेक्षणोत्सवः ॥ ३११ ॥
ऊचे विद्याधरश्चेटीं तवाऽऽद्यौ रुधिरेण मे । उपशाम्यतु कोपाग्निः पश्चाद् युक्तं करिष्यते ॥ ३१२ ॥
तत्त्वं स्मराऽभीष्टदेवं पञ्चत्वसमयेऽधुना । प्रतिपद्यस्व शरणं तं च यः प्रतिभाति ते ॥ ३१३ ॥
सावादीदेष सर्वज्ञो देवासुरनरार्चितः । अभीष्टदेवो भगवान् स्मृतः श्रीवृषभो मया ॥ ३१४ ॥
शरणं च ममाऽटव्यामस्यां मरणमेव भोः ! । विद्यते कोऽपि न त्राता तथाऽप्येवं भणाम्यहो ! ॥ ३१५ ॥
शूरो धीरो महोदारो वैरिद्विपघटाहरिः । ममाऽस्तु शरणं नित्यमार्यपुत्रो गुणैकभूः ॥ ३१६ ॥
जजल्प खेचरः कोऽयमार्यपुत्रो वदाऽधमे ! । दध्यौ कुमारोऽप्यमुना साधु पृष्टं ममाऽपि यत् ॥ ३१७ ॥
सन्देहो वर्तते चित्ते ततश्चेटी जगाद सा । वृतः समक्षं भूपानां स्वामिन्या यः स्वयंवरे ॥ ३१८ ॥ ( युग्मम् )
येन दृष्टः क्षणार्धेन त्वं पाप ! न भवस्यरे ! । गुणधर्मकुमारोऽसौ शरणं विहितो मया ॥ ३१९ ॥
तरवारिमथोद्यम्य स तां हन्तु समुद्यतः । विकोशीकृतखड्गेन कुमारेणेति जल्पितः ॥ ३२० ॥

विश्वस्ते व्याकुले दीने बालवृद्धाबलाजने । प्रहरन्ति यके पापा ध्रुवं ते यान्ति दुर्गतिम् ॥ ३२१ ॥
स्त्रीहत्यापातकं कर्तुमुद्यतस्य तवाऽद्य रे ! । अहमेव भविष्यामि प्रायश्चित्तविधौ गुरुः ॥ ३२२ ॥
स्मित्वा विद्याधरोऽथाऽऽख्यत् तत्र गत्वाऽपि यो मया । हन्तव्यः स्वयमेवाऽसौ मरणायाऽऽययावहो! ॥३२३॥
ततो युद्ध्वा च्छलं लब्ध्वा तस्य विद्याधरेशितुः । गुणधर्मकुमारेण शिरश्छिन्नं महौजसा ॥ ३२४ ॥
भयभीतं च तत्सैन्यं तेनैवाऽऽश्वासितं गिरा । अत्रान्तरे च बालास्तास्तिस्रोऽप्यूचुरिदं वचः ॥ ३२५ ॥
वयं विमोचिताः स्वामिन्नेतस्मात् खेचरात् त्वया । जन्तवः सुप्रसन्नेन गुरुणा पातकादिव ॥ ३२६ ॥
भवत्यस्तनयाः कस्य कुमारस्येति पृच्छतः । एका प्रोवाच तन्मध्याद्राज्ञः शङ्खपुरेशितुः ॥ ३२७ ॥
सुता दुर्लभराजस्य नाम्ना कमलवत्यहम् । भयेनैतस्य मयका विवाहो नेप्सितः खलु ॥ ३२८ ॥
कुमारोऽप्योचत भयं स्नेहजं कोपजं नु वा । साऽवदत् कोपजं तद्धि स्नेहजं तु कुतो यतः ॥ ३२९ ॥
अहं हि कुट्टिमतलादनेनाऽपहृता पुरा । ततः स्वरसनाच्छेदं कुर्वतैवं प्रजल्पिता ॥ ३३० ॥
रमणः प्रतिपत्तव्यस्त्वयाऽवश्यं मदुक्तया । आगन्तव्यं समीपे मे यामिन्यां सर्वदा तथा ॥ ३३१ ॥
भविष्यति विमानं ते सुशीलाया ममाऽऽज्ञया । यद्येवं कुरुषे तत्त्वां विमुञ्चामि न हन्म्यहम् ॥ ३३२ ॥
कृत्वा शपथनिर्बन्धं प्रतिपन्नं मयाऽपि तत् । अनेन शिक्षिता चाऽस्मि साधो ! नृत्यादिकाः कलाः ॥ ३३३ ॥
एवमन्या वशेऽनेन कृतास्तिस्रो नृपात्मजाः । त्वया विनिघ्नता ह्येनं सर्वासां विहितं सुखम् ॥ ३३४ ॥

इति श्रुत्वा कुमारेण स्वस्थानं प्रेषिता इमाः । स च स्वप्रेयसीवेश्म चेट्या सह समाययौ ॥ ३३५ ॥
तं दृष्ट्वा कनकवत्या पृष्टा दासी यथा हले ! । हतोऽद्य मम कान्तेन दुष्टविद्याधरः स किम् ? ॥ ३३६ ॥
ततश्च तद्वधोदन्तस्तया तस्या निवेदितः । स्वभर्तृपौरुषोत्कर्षमाकर्ण्य मुमुदे च सा ॥ ३३७ ॥
गुणधर्मकुमारोऽथ कृत्वा वार्तां तया सह । तत्रैव शर्वरीशेषे सुष्वाप स्नेहनिर्भरः ॥ ३३८ ॥
विद्याधरस्य तस्याऽथाऽनुजेन क्रुद्धचेतसा । उत्पाट्य सोऽर्णवेऽक्षेपि मुक्त्वा चाऽन्यत्र तत्प्रियाम् ॥ ३३९ ॥
लब्ध्वा फलहकं किञ्चित् सप्तरात्रेण सोऽम्बुधेः । आससाद तटं तत्राऽद्राक्षीत्तापसमेककम् ॥ ३४० ॥
ततश्च सममेतेन स गतस्तापसाश्रमम् । ददर्श तत्र कनकवतीं स निजवल्लभाम् ॥ ३४१ ॥
कुमारोऽथ कुलपतेः समीपे विहितानतिः । निषण्णो भणितस्तेन भद्रेयं किमु ते प्रिया ? ॥ ३४२ ॥
आमेति भणिते तेन सोऽब्रवीच्च दिनादितः । अतिक्रान्ते तृतीयेऽह्नि संप्राप्ता काननाऽन्तरे ॥ ३४३ ॥
उद्बध्य तरुशाखायामात्मानं मर्तुमुद्यताम् । इमिकामहमद्राक्षं त्वद्वियोगेन सुन्दर ! ॥ ३४४ ॥ ( युग्मम् )
छित्त्वा पाशं मया सेयं कथञ्चिद्रक्षिता मृतेः । त्वदागतिं ज्ञानबलाद् ज्ञात्वाऽऽख्याय च तोषिता ॥ ३४५ ॥
कदल्यादितरुफलैः प्राणवृत्तिं विधाय तौ । रात्रौ सुषुपतुस्तत्र विविक्तेऽथ लतागृहे ॥ ३४६ ॥
भूयोऽप्युत्पाट्य खेटेन प्रक्षिप्तौ तौ महार्णवे । संप्राप्तफलकौ तीरमासाद्य मिलितौ पुनः ॥ ३४७ ॥
कुमारोऽवोचदेतानि विधेर्विलसितान्यहो ! । विषयासक्तचित्तानां विपदो वा न दुर्लभाः ॥ ३४८ ॥

अनेनैव विरागेण त्यक्ताऽशेषपरिग्रहाः । निर्ममत्वा महासत्त्वास्तपः कुर्वन्ति साधवः ॥ ३४९ ॥
अथो कनकवत्यूचे नाथ ! त्वं सति पौरुषे । विषादं किं करोष्यद्याऽनाप्तमर्त्यफलोऽसि यत् ॥ ३५० ॥
दीनोद्धारो न विदधे नैकच्छत्रा कृता मही । विषया नोपभुक्ताश्च प्रकामं खिद्यसेऽङ्ग ! किम् ? ॥ ३५१ ॥
ततस्तस्य गिरा रात्रौ जाग्रता तेन खेचरः । स आगतो निर्जितश्च जीवन् मुक्तो महात्मना ॥ ३५२ ॥
अनुज्ञाप्य कुलपतिं स गतः क्वाऽपि पत्तने । सूरिं तद्बहिरद्राक्षीद्गुणरत्नमहोदधिम् ॥ ३५३ ॥
तं नत्वा सप्रियोऽप्येष मोहनिद्रानिवारिणीम् । शुश्राव देशनां पुण्यपादपारामसारणीम् ॥ ३५४ ॥
सूरिं नत्वाऽन्यतो गत्वा स जगाद विरागवान् । प्रियेऽस्य सद्गुरोः पार्श्वे प्रव्रज्या गृह्यतेऽधुना ॥ ३५५ ॥
विषयेष्वविरक्ता सा जगादाद्यापि नौ नवम् । यौवनं वर्त्तते कान्त ! तद् व्रतं क्रियते कथम् ? ॥ ३५६ ॥
सोऽवदद्वृद्धभावेऽपि केषाञ्चिद्विपर्ययैपिता । दृश्यते यौवनस्थानामप्यन्येषां विरागिता ॥ ३५७ ॥
पृष्ट्वा किञ्चिदतिशयज्ञानिनं स्वावसानताम् । विज्ञाय च यथायुक्तं कार्यमित्युक्तवत्यसौ ॥ ३५८ ॥
गुणधर्मोऽथ तद्वाक्यमङ्गीकृत्याऽविशत् पुरे । किञ्चिद् भोजनमानेतुं तस्थौ तत्रैव सा पुनः ॥ ३५९ ॥
तदा च गुणचन्द्राख्यो राजपुत्रः समागतः । वनस्थां यौवनस्थां तां दृष्ट्वा जज्ञेऽनुरागवान् ॥ ३६० ॥
इत्युवाच च नम्राङ्गि ! काऽसि त्वं केन हेतुना । तिष्ठस्येकाकिनी बाले ! किं ते भर्त्ता न विद्यते ? ॥ ३६१ ॥
विज्ञाय साऽनुरागं तं विरक्तं च निजं पतिम् । साऽप्याख्याय स्ववृत्तान्तं जाता तदनुरागिणी ॥ ३६२ ॥

प्रार्थनातत्परं तं च साऽभाषत कथञ्चन । वञ्चयित्वा स्वभर्तारमेष्यामि तव मन्दिरम् ॥ ३६३ ॥
इत्युक्तः स ययौ स्वौको गुणधर्मोऽत्र पत्तने । दुरोदरक्रीडया स्वमर्जयामास किञ्चन ॥ ३६४ ॥
कारयित्वा गृहीत्वाऽथ मण्डकान् स समागतः । उद्याने प्रियया सार्धं विदधे भोजनं ततः ॥ ३६५ ॥
चिन्तया शून्यचित्तत्वाद्धात्र्या विलिखनेन च । इङ्गितज्ञः कुमारोऽसावन्यासक्तां विवेद ताम् ॥ ३६६ ॥
अथोत्थाय वनस्यान्ते बद्धलक्षो(क्ष्यो) भ्रमन्नसौ । पृष्टः केनाऽपि किं राजपुत्रोऽद्याप्यत्र तिष्ठति ॥ ३६७ ॥
कोऽसौ राजसुत इति गुणधर्मस्य पृच्छतः । सोऽवदद् गुणचन्द्राख्यो राजसूनुरिहाऽऽगमत् ॥ ३६८ ॥
कयाचिद्योषिता सार्धं सोऽभूद्वार्त्तापरायणः । अहं तदाज्ञयाऽन्यत्र गत्वाऽऽयातोऽस्मि सुन्दर ! ॥ ३६९ ॥
तत्पृच्छामि भवन्तं किं गता सा तस्य मन्दिरे ? । गतेत्युक्त्वा कुमारोऽपि पुरुषं विससर्ज तम् ॥ ३७० ॥
दध्यौ च नोपकारेण नौजसा हन्त ! योषितः । गृह्यन्ते न कुलं शीलं मर्य्यादां गणयन्ति च ॥ ३७१ ॥
रहो न जायते यावत् क्षणं प्रार्थयिता न च । सतीत्वं तावदेवामां नारीणां नारदोऽब्रवीत् ॥ ३७२ ॥
ततस्तां मातुलगृहे मुक्त्वाऽऽसन्नपुरस्थिते । स समीपे मुनीन्द्राणां तेषामेवाऽभवद् व्रती ॥ ३७३ ॥
ततश्चोग्रं तपः कृत्वा मृत्वा गत्वा सुरालयम् । संप्राप्य च मनुष्यत्वं निर्वाणं समवाप्स्यति ॥ ३७४ ॥
मन्दिराद् मातुलस्याऽथ सा निर्गत्य कथञ्चन । गुणचन्द्रकुमारस्य प्रिया कनकवत्यभूत् ॥ ३७५ ॥
तदन्यगेहिनीदत्तगरलेन विपद्य सा । रौद्रध्यानवती प्राप्ता चतुर्थ्यां नरकावनौ ॥ ३७६ ॥

उद्धृत्य नरकादेषा भ्रमिष्यति भवं चिरम् । एवं ददाति विषयप्रमादो नृपतेऽसुखम् ॥ ३७७ ॥

॥ इति गुणधर्मकनकवतीकथानकम् ॥

कषायविषये राजन् ! नागदत्तकथानकम् । तीर्थे यद्वर्धमानस्य भावि तत् कथयामि ते ॥ ३७८ ॥

जम्बूद्वीपस्य भरतेऽस्मिन् वसन्तपुरे वरे । समृद्धवसुदत्ताख्यावभूतां वणिजौ वरौ ॥ ३७९ ॥

द्वावप्यनुद्धतावल्पकषायौ सरलाशयौ । चक्रतुर्व्यवहारं तौ मैत्रीभावयुतौ समम् ॥ ३८० ॥

यत्किञ्चित् प्रकरोत्येकः कार्यं तदितरेण च । इत्येकयोगकारित्वाद् निश्चयो वर्तते तयोः ॥ ३८१ ॥

अन्यदोद्यानसंप्राप्तौ मुनीन्द्रं तावपश्यताम् । वज्रगुप्ताऽभिधं धर्ममाचक्षाणं सभान्तरे ॥ ३८२ ॥

त नमस्कृत्य तत्पार्श्वे श्रुत्वा धर्मं शुभाशयौ । प्रतिपन्नौ सुसाधुत्वं तौ परित्यक्तबन्धनौ ॥ ३८३ ॥

कृत्वा संलेखनामन्तेऽनशनं प्रतिपद्य तौ । विपद्य त्रिदिवं प्राप्तौ तत्राऽपि प्रीतिशालिनौ ॥ ३८४ ॥

यः पूर्वमावयोर्मध्याच्च्यवते सोऽपरेण हि । संस्थाप्यः सर्वदा धर्मे संकेतमिति चक्रतुः ॥ ३८५ ॥ ( युग्मम् )

जीवः समृद्धदत्तस्य च्युत्वाऽत्र भरतावनौ । पुरे धारानिवासे नागदत्तेभ्यमन्दिरे ॥ ३८६ ॥

भार्याया धनदत्तायाः कुक्षिजो वररूपवान् । श्रीनागदेवतादत्तवरेण समभूत् सुतः ॥ ३८७ ॥ ( युग्मम् )

नागदत्ताऽभिधानोऽसौ द्विसप्ततिकलान्वितः । गान्धर्वे निरतस्तेन जातस्तत्पूर्वनामकः ॥ ३८८ ॥

वीणावाद्येऽतिदक्षश्च गारुडे कुशलोऽथ सः । अन्यस्मिन् दिन उद्याने क्रीडति स्म सुहृद्युतः ॥ ३८९ ॥

वसुदत्तसुरेणैष बहुधा प्रतिबोधितः । न किञ्चिद् मन्यते देवस्ततश्चैवं व्यचिन्तयत् ॥ ३९० ॥

अत्यन्तसुखितो नाऽयं तावद्धर्मं करिष्यति । न यावत् पातितः कष्टे प्राणसंशयकारिणि ॥ ३९१ ॥

विचिन्त्यैवं मुने रूपं धृतसर्पकरण्डकम् । स रजोहरणमुखवस्त्रिकासहितं व्यधात् ॥ ३९२ ॥

प्रपच्छ नागदत्तस्तं यान्तमासन्नवर्त्मना । एतेषु त्वत्करण्डेषु विद्यते भो नरेन्द्र ! किम ? ॥ ३९३ ॥

सर्पा इत्युदिते तेन सोऽब्रवीत्तर्हि तानहम् । क्रीडयिष्यामि नागांस्तु मदीयान् क्रीडय त्वकम् ॥ ३९४ ॥

वार्तिकोऽप्यवदद् वार्ता न कर्तव्या त्वयेदृशी । शक्याः क्रीडयितुं नैते यन्मदीया महोग्गाः ॥ ३९५ ॥

देवानामपि दुर्ग्राह्यांस्त्वमेतान् ननु बालकः । ग्रहीष्यसि कथं मूढ ! मन्त्रौषधिबलं विना ॥ ३९६ ॥

नागोऽभाषत पश्य त्वं गृह्यमाणानिमान् मया । त्वं मेऽहीन् वा गृहाणाऽऽद्यौ सोऽवोचद् मुच्यतामिति ॥ ३९७ ॥

नागदत्तेन मुक्तास्ते लगन्ति स्म न तत्तनौ । लग्ना वा देवशक्तित्वात् कुर्वन्ति स्म व्यथां नहि ॥ ३९८ ॥

गान्धर्वनागदत्तोऽथ जजल्पैवं समत्सरः । मुञ्च त्वमपि सर्पान् स्वान् रे ! विलम्बयसेऽत्र किम् ? ॥ ३९९ ॥

मेलय स्वजनान् सर्वान् नृपं च कुरु साक्षिकम् । इति गारुडिकेनोक्ते नागदत्तस्तथाऽकरोत् ॥ ४०० ॥

जगादोच्चैःस्वरं तेषां पुरो गारुडिकब्रुवः । भूत्वाऽवहितचित्ता भो ! यूयं शृणुत मद्वचः ॥ ४०१ ॥

गान्धर्वनागदत्तो मे सर्पैः क्रीडितुमिच्छति । यद्यसौ दश्यते तैस्तद् देयो दोषो न सर्वथा ॥ ४०२ ॥

---

१ मुनीन्द्र ! इति वा पाठः ।

स्वजनैर्वारितो नैष विरराम यदा तदा । मुमोच परितस्तस्य पन्नगान् सोऽहिवाहकः ॥ ४०३ ॥
जजल्प च महाक्रूरा ममैते हन्त ! जिह्मगाः । अमीषां नाममाहात्म्यं प्रत्येकं कथयामि च ॥ ४०४ ॥
आरक्तनयनः क्रूरो द्विजिह्वो विषपूरितः । क्रोधाभिधानः पूर्वस्यामादिमोऽयं मरीसृपः ॥ ४०५ ॥
अयमष्टफटाटोपभीषणः स्तब्धवर्ष्मकः । याम्यायां यमसंकाशो मानो नाम महोरगः ॥ ४०६ ॥
वञ्चनाकुशला वक्रगमना पश्चिमाश्रिता । इयं मायाह्वया नागी धर्तुं केनेह शक्यते ? ॥ ४०७ ॥
अयं हि दिशि कौबेर्य्यां लोभो नाम भुजङ्गमः । समुद्र इव दुष्पूरो दष्टो येन भवेद् नरः ॥ ४०८ ॥
य एतैर्दश्यते प्राणी चतुर्भिरपि पन्नगैः । पतत्यधः स नियमादालम्बनविवर्जितः ॥ ४०९ ॥
गान्धर्वनागदत्तोऽथ तमूचे किमु निष्फलम् ? । करोषि वाचां विस्तारं मुञ्च शीघ्रमिमानरे ! ॥ ४१० ॥
ततस्तेन विनिर्मुक्तैर्मन्त्रौषध्यनिवारितैः । दष्टः श्रेष्ठिसुतो नागैश्चतुर्भिरिमकैः समम् ॥ ४११ ॥
पपात च धरापीठे तन्मित्रैर्विविधौषधैः । लेभे कृतोपचारोऽपि चेतनां नेषदप्यसौ ॥ ४१२ ॥
अमुं जीवापयेत्युक्तस्तद्बन्धुभिरुवाच सः । ततो जीवत्यसौ हंहो ! कुर्याच्चेद्दुष्करक्रियाम् ॥ ४१३ ॥
अहमप्यशितोऽभूवममीभिर्दुष्टपन्नगैः । एतद्विषनिरासार्थं करोम्येवंविधां क्रियाम् ॥ ४१४ ॥
लुञ्चामि सकलान् केशान् मुखशीर्षविनिर्गतान् । श्वेतानि सप्रमाणानि वासांसि निवसामि च ॥ ४१५ ॥
विविधं च तपःकर्म चतुर्थादि करोम्यहम् । भुञ्जेऽतिरूक्षमाहारं तपःपारणकेऽप्यहो ! ॥ ४१६ ॥

अत्याहारं न गृह्णामि पिबामि विग्मं पयः । उदेति तद्विपं भूयो यद्येवं न करोम्यहम् ॥ ४१७ ॥
कदाचित् काननस्याऽन्तः कदाचित् पर्वतोपरि । तिष्ठाम्यहं कदाचिच्च शून्यागारश्मशानयोः ॥ ४१८ ॥
सहे परीषहान् सम्यग् मध्यस्थो द्वेषरागयोः । एवं क्रियां कुर्वतो मे भवेद् नो विषविक्रिया ॥ ४१९ ॥
स्तोकाहारोऽल्पनिद्रश्च यो भवेन्मितभाषकः । न केवलममी तस्य वशे स्युस्त्रिदशा अपि ॥ ४२० ॥
किं बहूक्तेन यद्येवंविधया क्रिययाऽमको । संतिष्ठते ततो जीवत्यन्यथा म्रियते ध्रुवम् ॥ ४२१ ॥
क्रियां कर्तेति लोकेन भणितेऽमग्वार्तिकः । आलिख्य मण्डलं विद्यामुच्चचारेति पावनीम् ॥ ४२२ ॥
सर्वसिद्धान् नमस्कृत्य महाविद्यास्तथाऽखिलाः । वक्ष्ये दण्डविधिमहं विषवेगविनाशनम् ॥ ४२३ ॥
प्राणातिपातमनृतमदत्तत्वं च मैथुनम् । परिग्रहं च मकलं यावज्जीवं विवर्जयेः ॥ ४२४ ॥
अनया विद्यया स्वाहायुक्तया म महंभ्यमुः । निद्राक्षय इवोत्तस्थौ प्रभावेन दिवौकसः ॥ ४२५ ॥
स्वजनैर्वार्तिकादिष्टा क्रिया तस्य न्यवेद्यत । अश्रद्दधत् म तां गेहाऽभिमुखः प्राचलद् द्रुतम् ॥ ४२६ ॥
पपात च क्षणात् पृथ्व्यां पुनर्निर्नष्टचेतनः । पुनः प्रार्थनया स्वानामुल्लाघो मेरुता कृतः ॥ ४२७ ॥
एवं तृतीयवेलायां विहिते गाढनिश्चये । गान्धर्वनागदत्तोऽपि तस्य वाक्यममन्यत ॥ ४२८ ॥
देवो नीत्वा तमुद्याने सुरत्वं स्वं निवेद्य च । तस्याऽऽचख्यौ पूर्वभवं सोऽपि जातिं ततोऽस्मरत् ॥ ४२९ ॥

१ सज्जः । २ देवेन ।

एवं प्रत्येकबुद्धोऽसौ संजातो मुनिपुङ्गवः । तं वन्दित्वाऽमरः सोऽपि जगाम स्थानमात्मनः ॥ ४३० ॥
चतुरोऽपि कषायाऽहीन् नियम्याऽङ्गकरण्डके । रक्षयामास स मुनिर्यत्नान्निर्गच्छतो बहिः ॥ ४३१ ॥
एवं गच्छति कालेऽस्मात्रुत्पाद्य वरकेवलम् । महानन्दपदं प्राप हत्वा कर्ममुच्चयम् ॥ ४३२ ॥

॥ इति गान्धर्वनागदत्तकथा ॥

एवमादिप्रमादोऽयं पञ्चधाऽपि विवेकिभिः । हेयोऽनर्थकरो धर्मो विधेयश्च चतुर्विधः ॥ ४३३ ॥
यतिश्रावकभेदाभ्यां पुनरेव द्विधा भवेत् । यतिधर्मश्च दशधा ज्ञेयो भेदैः क्षमादिभिः ॥ ४३४ ॥
सम्यक्त्वं प्रथमं तत्र द्वैधं त्रैधं चतुर्विधम् । पञ्चधा दशधा चैव ज्ञेयं सूत्रानुसारतः ॥ ४३५ ॥
अणुव्रतानि पञ्च स्युर्गुणपूर्वं व्रतत्रयम् । शिक्षापदानि चत्वारीत्युक्तो धर्मो ह्यगारिणाम् ॥ ४३६ ॥
स्थूलप्राणातिपातस्य विरतिव्रतमादिमम् । जायते सुखदं पाल्यमानं तद्यमपाशवत् ॥ ४३७ ॥

तथाहि—

इहैव भरते वाराणस्यां दुर्मर्षणो नृपः । बभूव कमलश्रीश्च तत्प्रिया कमलानना ॥ ४३८ ॥
सुमञ्जरीति विक्रान्तस्तत्राऽभूद् दण्डपाशिकः । यमपाशश्च चाण्डालो जात्या नैव च कर्मणा ॥ ४३९ ॥
नलदामा वणिक् तत्र दयादिगुणसंयुतः । सुमित्रा गेहिनी तस्य मम्मणश्च सुतोऽभवत् ॥ ४४० ॥
अन्यदा वणिगानीततुरङ्गे सोऽथ भूपतिः । आरूढोऽधिष्ठितश्चाऽश्वो नृपवैरिसुरेण सः ॥ ४४१ ॥

उत्पत्य गगनेनैव वेगेनैयाय काननम् । राज्ञा मुक्तो विमुक्तश्च प्राणैरप्याऽऽशु सोऽश्वकः ॥ ४४२ ॥
तत्रैको हरिणो भूपं दृष्ट्वा जातिस्मरोऽभवत् । एवमज्ञापयत् तं च लिखित्वाऽग्रेऽक्षरावलीम् ॥ ४४३ ॥
देवलो नाम ते राजन्नभूवं श्रीकरीधरः । मृत्वाऽऽर्तध्यानदोषेण जातस्तिर्यक्त्वदूषितः ॥ ४४४ ॥
तेनाऽथ दर्शितं नीरं तृषितस्य महीपतेः । स्वस्थीभूतेऽथ तस्मिंस्तु तत्र तत्सैन्यमाययौ ॥ ४४५ ॥
हरिणोऽसौ कृतज्ञेन राज्ञा नीतो निजं पुरम् । राजदत्ताभयस्तत्र स्वेच्छया संचचार सः ॥ ४४६ ॥
अन्यदा मम्मणस्याऽट्टे स समागात् परिभ्रमन् । पूर्वजन्ममत्सरेण वणिक् तस्मै चुकोप सः ॥ ४४७ ॥
तातमृत्ये च मार्योऽयमपराधकरो मृगः । सोऽवदद्धन्यते जीवो नाऽपरोऽपि वणिक्कुले ॥ ४४८ ॥
अयं तु भूपतेरिष्टो न हन्तव्यः सुत ! त्वया । तथापि निहतो रोषाद् व्याक्षिप्तस्याऽस्य सोऽमुना ॥ ४४९ ॥
कुर्वन् कर्मेदृशं सोऽथ मम्मणः श्रेष्ठिनेक्षितः । दूरस्थितेन यमदण्डेनेवाऽन्तविधायिना ॥ ४५० ॥
ततो निवेदितस्तेन तद्वृत्तान्तो महीपतेः । कोऽत्र साक्षीति राज्ञोक्ते सोऽवदज्जनकोऽस्य हि ॥ ४५१ ॥
नृपाहूतेन तेनाऽपि तत्सत्यमिति जल्पितम् । ततोऽसौ सत्यवादीति पूजितः पृथिवीभुजा ॥ ४५२ ॥
वधार्थं मम्मणस्याऽथ समादिष्टो महीभुजा । यमपाशोऽब्रवीद् देव ! नहि हिंसां करोम्यहम् ॥ ४५३ ॥
कथं त्वं प्राणिनो हिंसां मातङ्गोऽपि करोषि न । इति पृष्टोऽवनीशेन स आख्याति स्म कारणम् ॥ ४५४ ॥
हस्तिशीर्षे पुरवरे दमदन्तो वणिक्सुतः । अनन्ततीर्थकृत्पार्श्वे श्रुत्वा धर्ममभूद् व्रती ॥ ४५५ ॥

तपः प्रकुर्वतस्तस्य लब्धयोऽनेकशोऽभवन् । गीतार्थो विहरन्नेकः स नगर्यामिहाऽऽययौ ॥ ४५६ ॥
तस्थौ पितृवनोपान्ते कायोत्सर्गेण च स्थिरः । इतश्च तनयो मेऽस्ति प्रभो! नाम्नाऽतिमुक्तकः ॥ ४५७ ॥
औपसर्गिकरोगार्तो गतः पितृवनेऽथ मः । मुनिं ननाम नीरोगस्तस्य शक्त्या बभूव च ॥ ४५८ ॥
मम तेन स्ववृत्तान्तो गृहमेत्य निवेदितः । ततोऽहं सकुटुम्बोऽपि तत्राऽगां रोगपीडितः ॥ ४५९ ॥
मुक्तश्च व्याधिना तेन ततोऽहं श्रावकोऽभवम् । यावज्जीवं च हिंमाया विरतोऽस्मि धरापते ! ॥ ४६० ॥
तेनैव साधुना देव ! प्रतिबोधकथा निजा । आख्याता मम पृष्टेन ततोऽहमपि वेद्मि ताम् ॥ ४६१ ॥
ततश्च पूजितो हृष्टचेतसा स महीभुजा । चाण्डालानां समस्तानामधिपश्च विनिर्मितः ॥ ४६२ ॥
अन्येन श्वपचेनाऽयं सम्मणो विनिपातितः । यमपाशश्च मृत्वाऽन्ते बभूव त्रिदशोत्तमः ॥ ४६३ ॥

॥ प्राणातिपातविरतिविषये यमपाशमातङ्गकथानकम् ॥

द्वितीयं च व्रतं नाम कन्यालीकादि पञ्चधा । अलीकभाषणे दोषो भद्रस्येव प्रजायते ॥ ४६४ ॥
क्षितिप्रतिष्ठितपुरे वणिजौ धनवर्जितौ । दुष्टबुद्धिसुबुद्ध्याख्यावभूतां विदितौ जने ॥ ४६५ ॥
प्रपन्नसौहृदावेतौ किञ्चिदादाय पण्यकम् । देशान्तरप्रचलितावर्थोपार्जनहेतवे ॥ ४६६ ॥
प्राप्तौ च क्रमयोगेण पुरे क्वाऽपि पुरातने । दिनानि कतिचित्तत्र तस्थतुर्लाभकाङ्क्षिणौ ॥ ४६७ ॥
देहचिन्ताकृते क्वापि खण्डौकसि सुबुद्धिना । उपविष्टेन संप्राप्तं निधानं किञ्चिदन्यदा ॥ ४६८ ॥

तद्दुष्टबुद्धिना सार्धं गृहीत्वाऽसौ न्यभालयत् । यावत्तावच्च दीनारसहस्रं समजायत ॥ ४६९ ॥
कृतकृत्यौ ततश्चैतावागतौ नगरं निजम् । तत्रेदं मन्त्रयामास दुष्टः सह सुबुद्धिना ॥ ४७० ॥
अर्धमर्धं विभज्येदं गृह्णीवश्चेद्धनं सखे ! । तदा संभावना गुर्वी भविष्यत्यावयोर्जने ॥ ४७१ ॥
ततो निधानलाभं नौ ज्ञात्वा भूपः कथश्चन । तद्ग्रहीष्यति दारिद्र्यं तदवस्थं तदावयोः ॥ ४७२ ॥
गृहीत्वा शतमेकैकं शेषद्रव्यमिहैव हि । निक्षिप्यते वटोपान्ते संमतं तव चेद् भवेत् ॥ ४७३ ॥
एवमस्त्विति तेनोक्ते रात्रौ निक्षिप्य तत्र तत् । प्रभाते तौ निजं गेहमेयतुर्मुदिताशयौ ॥ ४७४ ॥
तद्दीनारशतमथो दुष्टबुद्धेरसद्व्ययात् । निष्ठितं दिवसैः कैश्चित् पुण्येनैव स्थिरेन्दिरा ॥ ४७५ ॥
पुनः सुबुद्धिदुर्बुद्धी गत्वा निशि ततो धनात् । दीनारशतमेकैकं गृहीत्वा गृहमागतौ ॥ ४७६ ॥
अन्यदा चिन्तयामास दुष्टबुद्धिर्मनस्यदः । सुबुद्धिं वश्चयित्वैनं शेषं स्वं स्वीकरोम्यहम् ॥ ४७७ ॥
विचिन्त्यैवं स यामिन्यां गत्वा तत्र तदाददे । वञ्च्यते जनकोऽप्यर्थलुब्धैरन्यस्य का कथा ? ॥ ४७८ ॥
मित्रमूचे च तद् द्रव्यं विभज्याऽऽनीयते गृहम् । बहिःस्थिते च नो तस्मिंश्चिन्ता नौ याति चित्ततः ॥ ४७९ ॥
तद्वाक्यमनुमेनेऽथ सुबुद्धिः सरलाशयः । गत्वा चखान तत् स्थानं सह तेन च दुष्टधीः ॥ ४८० ॥
तत्राऽपश्यन् धनं तच्च स कूटकपटालयः । हा ! वञ्चितोऽस्मि केनाऽपीत्याजघान शिरोऽश्मना ॥ ४८१ ॥
जगाद च त्वया तद्धि सुबुद्धेऽपहृतं खलु । जानाति नाऽपरः स्थानमिदमावाभ्यां विना यतः ॥ ४८२ ॥

सोऽब्रवीद् हर्तुकामः स्वमभविष्यमहं यदि । एकान्तलब्धं तत्ते नाकथयिष्यं पुराऽप्यदः ॥ ४८३ ॥
त्वं तु स्ववञ्चकत्वेन मामप्येवं विमन्यसे । पित्तातिप्लावितो नीरमपि ज्वलितमीक्षते ॥ ४८४ ॥
एवं तौ कलहायन्तौ समीपे नृपतेर्गतौ । इति विज्ञपयामास तमादौ सोऽथ दुर्मतिः ॥ ४८५ ॥
देवावाभ्यां निधिः क्वापि लब्धस्ते नो निवेदितः । लुब्धाभ्याममुकस्थाने निक्षिप्तश्च भिया तव ॥ ४८६ ॥
अनेन वञ्चयित्वा मां जगृहे स सुबुद्धिना । इति ज्ञात्वा यथायुक्तं विधेहि त्वं महीपते ! ॥ ४८७ ॥
राजोचे वर्ततेऽत्राऽर्थे साक्षिको ननु कस्तव ? । विचिन्त्य सोऽवदद् दुष्टबुद्धिः पुनरिदं वचः ॥ ४८८ ॥
यस्याऽधस्ताद्वांनिक्षिप्तं तद् द्रव्यमवनीपते ! । स एव हि महावृक्षः साक्षिकोऽस्त्यत्र निश्चितम् ॥ ४८९ ॥
इदं वित्तमनेनाऽऽत्तमिति वाक्यमसौ यदि । तरुर्वक्ति ततो राजन् ! ज्ञेयः सूनृतवागहम् ॥ ४९० ॥
राजा प्रोवाच यद्येवं करिष्यसि कथञ्चन । सत्यवाक्यो भवानेको भविष्यति ततो जने ॥ ४९१ ॥
इदं हि ह्यो मया कार्यमित्युक्ते दुष्टबुद्धिना । विसृष्टौ तौ नरेन्द्रेण दत्त[1]प्रतिभुवौ गृहम् ॥ ४९२ ॥
अहो ! सुदुर्घटं कार्यं कथमेष करिष्यति । धर्मस्यैव जयो वेति ध्यायन् वेश्म ययौ सुधीः ॥ ४९३ ॥
इतरोऽपि गृहं प्राप्तो भद्राख्यं पितरं निजम् । प्रोवाच तात ! दीनारा मम हस्तगता इमे ॥ ४९४ ॥
क्षेप्स्यामि त्वामहं नीत्वा निशायां वटकोटरे । आत्तं सुबुद्धिना रिक्थमिति वाच्यं त्वया प्रगे ॥ ४९५ ॥

१ दत्तः प्रतिभूः साक्षी याभ्यां तौ ।

सोऽथाऽभाषिष्ट रे दुष्टमते ! नैतद्धि सुन्दरम् । उपरोधेन ते पुत्र ! कार्यमेतद् मया परम् ॥ ४९६ ॥
चक्रे च स तथा तेन द्वितीयेऽह्नि महीपतेः । पुरः पौरजनस्याऽपि तमर्चित्वा महीरुहम् ॥ ४९७ ॥
दुष्टबुद्धिरदोऽवादीद् गृहीतं केन तद्धनम् । सत्यमाख्याहि वृक्षेश ! विवादस्त्वयि तिष्ठते ॥ ४९८ ॥ ( युग्मम् )
वटकोटरसंस्थोऽथ भद्रश्रेष्ठी शशंस सः । हंहो ! सुबुद्धिनोपात्तं तद् द्रव्यमिति बुध्यताम् ॥ ४९९ ॥
तच्छ्रुत्वा विस्मिताः सर्वे सुबुद्धिं चाऽवदद् नृपः । आराध्यमि भोस्तावद् निधानं मे समर्पय ॥ ५०० ॥
सोऽथ दध्यौ न तरवो जल्पन्तीह कदाचन । इयं हि कूटरचना दुष्टबुद्धेर्विभाव्यते ॥ ५०१ ॥
वटस्य कोटराद् वाणी यदसौ निर्गता ततः । मन्ये संकेतितोऽनेन प्रक्षिप्तोऽस्त्यत्र कश्चन ॥ ५०२ ॥
जगाद च तवाऽवश्यमर्पणीयं मया धनम् । महाराज ! परं किञ्चिद्विज्ञप्यमिह विद्यते ॥ ५०३ ॥
ततो विज्ञपयेत्युक्तो राज्ञाऽवोचदसौ पुनः । जगृहे तद् मया द्रव्यं न नीतं हि गृहं परम् ॥ ५०४ ॥
तरुकोटरमध्येऽत्र प्रक्षिप्याऽहं गतो गृहम् । अन्यस्मिन् दिवसे यावत्तदादातुमुपागतः ॥ ५०५ ॥
तावत्तत्राऽहिमद्राक्षं फटाटोपभयङ्करम् । देवताधिष्ठितमिदमिति चाऽचिन्तयं तदा ॥ ५०६ ॥ ( युग्मम् )
तत्तं द्विरसनं द्रव्यगोप्तारं देव ! हन्म्यहम् । उपायेनेह केनाऽपि यद्यनुज्ञा भवेत्तव ॥ ५०७ ॥
एवं कुर्विति राज्ञोक्ते स मध्यस्तरुकोटरम् । तैर्पणैः[1] पूरयामास बहिश्च परितोऽस्य हि ॥ ५०८ ॥

---

१ काष्ठैः ।

ततो ज्वलयितुं वह्नावारब्धे छगणोद्भवः । बभूव प्रचुरो धूमस्तेन प्लुष्टेक्षणः क्षणात् ॥ ५०९ ॥
दुष्टबुद्धेः पिता सोऽथ पपात पृथिवीतले । भद्रश्रेष्ठीति भूपेन लोकैश्चाऽप्युपलक्षितः ॥ ५१० ॥ ( युग्मम् )
किमेतदिति पृष्टश्च सर्वैरपि सकौतुकैः । सोऽवदत् कूटमाक्षित्वमहं दुष्टेन कारितः ॥ ५११ ॥
अलीकवाक्यजं पापमिहैव फलितं मम । इति ज्ञात्वा न वक्तव्यमहो ! केनाऽप्यमूनृतम् ॥ ५१२ ॥
ततोऽसौ संस्थितो भद्रो भद्रधीः सोऽथ तत्सुतः । राज्ञा सर्वस्वमादाय पुराद् निर्वासितो निजात् ॥ ५१३ ॥
सुबुद्धिस्त्वर्चितस्तेन वस्त्रालङ्करणादिभिः । सत्यत्वात् सर्वलोकस्य प्रशंसां समवाप सः ॥ ५१४ ॥
असत्यमिह लोकेऽपि ज्ञात्वैवं दुःखकारणम् । तत्त्वया परिहर्तव्यं चक्रायुध ! महीपते ! ॥ ५१५ ॥

॥ असत्यविषये भद्रश्रेष्ठिकथानकम् ॥

स्थूलादत्तपरित्यागसंज्ञमेतदणुव्रतम् । पालनीयं प्रयत्नेन गुणकृज्जिनदत्तवत् ॥ ५१६ ॥
वसन्तपुरमित्यस्ति पुरं पुरगुणाश्रितम् । यथार्थनामा तत्राऽभूद् जितशत्रुर्धरापतिः ॥ ५१७ ॥
तनयो जिनदासस्य जिनदत्तोऽभिधानतः । बभूव श्रावकस्तत्र जीवाऽजीवादितत्त्ववित् ॥ ५१८ ॥
संप्राप्तयौवनः सोऽथ दीक्षाऽऽदानकृताशयः । विवाहं कुलकन्याया नेच्छति स्माऽर्थितोऽपि सन् ॥ ५१९ ॥
मित्रमण्डलसंयुक्तो ययौ चोपवनेऽन्यदा । । उत्तुङ्गशिखरं तत्राऽद्राक्षीच्च जिनमन्दिरम् ॥ ५२० ॥
ततोऽसौ विधिना तत्र प्रविश्य कुसुमादिभिः । समभ्यर्च्य जिनाधीशं विदधे चैत्यवन्दनाम् ॥ ५२१ ॥

आगत्य कन्यकैकाऽथोत्तरीयपिहितानना । शुभ्रद्रव्यैर्जिनाऽर्चायाश्चकार मुखमण्डनम् ॥ ५२२ ॥
कपोले जिनबिम्बस्य पत्रवल्लीं वितन्वतीम् । तां वीक्ष्य विस्मितोऽत्रोचज्जिनदत्तः सखीनिति ॥ ५२३ ॥
कस्येयं तनया हंहो ! तेऽत्रोचन् विदिता न किम् ? । तवेयं प्रियमित्रस्य सार्थवाहस्य नन्दिनी ॥ ५२४ ॥
एषा जिनमतीनाम्नी यथा नारीशिरोमणिः । तथा त्वमपि रूपाद्यैर्गुणैर्नरशिरोमणिः ॥ ५२५ ॥
करोति गृहवासेन संयोगं युवयोर्यदि । वेधास्तत्तस्य निर्माणप्रयासः सफलो भवेत् ॥ ५२६ ॥
जिनदत्तोऽभ्यधाद् युक्तं न युष्माभिर्विधीयते । वयस्या यत् कृतं हास्यमिह स्थाने मया सह ॥ ५२७ ॥
पराभिप्रायविज्ञानदक्षा अप्यनुगामिनः । किं न जानीत मां यूयं दीक्षाऽऽदानकृताशयम् ? ॥ ५२८ ॥
मुखमण्डनविज्ञानकौतुकेन मयाऽपि भोः ! । पृष्टमेतदन्यथा तु स्त्रीकथाऽत्र न युज्यते ॥ ५२९ ॥
इत्युदित्वा स्थितः सोऽथ जिनमत्या निरीक्षितः । अनुरागश्च संजातस्तस्यास्तस्मिन् शुभाकृतौ ॥ ५३० ॥
ज्ञातः सखीजनेनाऽस्या अभिप्रायो मनोगतः । संप्राप्तेन गृहं सोऽथ पित्रोरग्रे निवेदितः ॥ ५३१ ॥
जिनदत्तोऽपि सदनं गत्वा कृत्वा च भोजनम् । हट्टे गत्वा व्यवहृतिं चक्रेऽर्थार्जनहेतवे ॥ ५३२ ॥
जिनमत्याः पिता गत्वा जिनदासस्य सन्निधौ । कन्याप्रदानं विदधेऽनुमेने सोऽपि तन्मुदा ॥ ५३३ ॥
गृहप्राप्तस्य वृत्तान्तः पित्रा सूनोर्निवेदितः । असौ दीक्षाभिलाषित्वादुद्वाहं नेच्छति स च ॥ ५३४ ॥
जिनमन्दिरयानादि स्ववृत्तान्तं निवेद्य सः । पित्रा पुनर्विवाहार्थे भणितो मौनमाश्रितः ॥ ५३५ ॥

अन्यदा कन्यका साऽथ निर्गच्छन्ती गृहाद् निजात्। दृष्टा पुरारक्षकेण वसुदत्तेन भोगिना ॥ ५३६ ॥
ततो जाताऽनुरागेण तेन गत्वाऽथ तत्पितुः। पार्श्वे मा याचिता दत्ता जिनस्येति च सोऽब्रवीत् ॥ ५३७ ॥
ततो रुष्टः स दुष्टात्मा मारणाभिक्रया धिया। संजातो जिनदत्तस्य च्छिद्रान्वेषी दिवानिशम् ॥ ५३८ ॥
अश्ववाहिकया राज्ञो गतस्योद्यानमन्यदा। पपात कुण्डलं कर्णाच्चलत्यश्वेऽतिरंहसा ॥ ५३९ ॥
तच्चाऽऽगतेन विज्ञातं तेन राजकुले ततः। वसुदत्तः समादिष्टस्तदन्वेषणहेतवे ॥ ५४० ॥
तदर्थं सोऽचलद्यावत्तावत्तस्य पुरःसरः। जिनदत्तो बहिर्गन्तुं प्रवृत्तोऽर्थेन केनचित् ॥ ५४१ ॥
दृष्ट्वा तत्कुण्डलं मार्गे सोऽथ दूरमपासरत्। लोष्टुवत् परद्रव्याणि यतः पश्यन्ति साधवः ॥ ५४२ ॥
वसुदत्तोऽपि तत्राऽगात् किमेतदिति चिन्तयन्। दृष्ट्वाऽऽदाय च तच्छीघ्रमार्पयच्चाऽवनीपतेः ॥ ५४३ ॥
राजा प्रोवाच भो भद्र! कुतो लब्धमिदं त्वया?। जिनदत्तान्मया प्राप्तमित्यूचे स च दुष्टधीः ॥ ५४४ ॥
जिनदत्तोऽपि किं नाम परद्रव्यं हरत्यहो!। इति पृष्टे नरेन्द्रेण वसुदत्तोऽभ्यधात् पुनः ॥ ५४५ ॥
समानो जिनदत्तेन तस्करः कोऽपि नाऽपरः। यः सदा पश्यतोऽप्यर्थं परस्माद् हरति प्रभो! ॥ ५४६ ॥
वध्य आज्ञापितो राज्ञा ततोऽयं क्रुद्धचेतसा। वसुदत्तोऽपि बद्ध्वा तं रासभारोपितं व्यधात् ॥ ५४७ ॥
रक्तचन्दनलिप्ताङ्गो रसद्विरसडिण्डिमः। नीयमानः पुरीमध्ये कृतहाहारवो जनैः ॥ ५४८ ॥
गृहान्निर्गतया सोऽथ जिनमत्याऽवलोकितः। सा चैवं चिन्तयामास रुदती निभृतस्वरम् ॥ ५४९ ॥ ( युग्मम् )

धर्मार्थी सदयो देवगुरुभक्तिपरायणः । निरागो जिनदत्तो ही प्राप्तवान् कीदर्शी दशाम् ? ॥ ५५० ॥
दृष्ट्वा तां जिनदत्तोऽपि निर्व्याजस्नेहवत्सलाम् । सद्योऽनुरागवशगश्चिन्तयामास मानसे ॥ ५५१ ॥
अहो ! अकृत्रिमा प्रीतिः काऽप्यस्या मयि वर्तते । दृष्ट्वा मद्व्यसनं दुःखभागिनी याऽभवत् क्षणात्॥५५२॥
एतस्माद् व्यसनान्मोक्षो भविष्यति ममाऽद्य चेत् । कियत्कालं ततो भोगान् भोक्ष्येऽहमनया सह ॥ ५५३ ॥
अन्यथाऽनशनं मेऽस्तु सागारमिति चिन्तयन् । वध्यस्थाने स आरक्षनरैर्नीतो दुराशयैः ॥ ५५४ ॥
प्रियमित्रस्य पुत्री सा कन्यका कृतनिश्चया । कायोत्सर्गं व्यधाद् गेहचैत्ये गत्वा मनस्विनी ॥ ५५५ ॥
चेतमाऽचिन्तयच्चैवं मातः ! शासनदेवते ! । जिनस्य कुरु सान्निध्यं यद्यहं जैनशासनी ॥ ५५६ ॥
तस्यास्तस्य च शीलेन तुष्टा शासनदेवता । बभञ्ज शूलिकां सद्यो वागंर्त्रीस्तृणमात्रवत् ॥ ५५७ ॥
स चोद्बद्धस्ततो वृक्षे रज्जुश्छिन्ना झटित्यपि । कृताः खड्गप्रहाराश्च जज्ञिरे कुसुमस्रजः ॥ ५५८ ॥
आरक्षकनरास्तस्य दृष्ट्वाऽतिशयमीदृशम् । विस्मिताः कथयन्ति स्म तमागत्य महीभुजः ॥ ५५९ ॥
भयविस्मयसंपूर्णः स गत्वा तत्र सत्वरम् । जिनदत्तं गजारूढमानिनाय निजौकसि ॥ ५६० ॥
पृष्टोऽथ सर्ववृत्तान्तं जिनस्तस्य न्यवेदयत् । रक्षति स्माऽऽरक्षकं च मृत्योर्जीवदयापरः ॥ ५६१ ॥
अनुज्ञातस्ततो राज्ञा निजगेहमगादसौ । पित्रादिस्वजनस्तस्य सर्वोऽपि मुमुदेतराम् ॥ ५६२ ॥
आगत्य प्रियमित्रेण जिनदत्तस्य धीमतः । वार्ताऽऽचख्ये स्वनन्दिन्या देवताराधनादिका ॥ ५६३ ॥

ततस्तुष्टो विशेषेण स तां जिनमती सतीम् । पर्यणैषीत्सुमुहूर्त्ते महोत्सवपुरःसरम् ॥ ५६४ ॥
भुक्त्वा भोगांस्ततः कालं कियन्तमनया सह । प्रवव्राज विरक्तात्मा सुस्थिताचार्यसंनिधौ ॥ ५६५ ॥
पालयित्वा चिरं दीक्षां खड्गधारासमामिमौ । विपद्याऽन्ते समाधानपरौ त्रिदिवमीयतुः ॥ ५६६ ॥

॥ परद्रव्यापहारविरतौ जिनदत्तकथा ॥

औदारिकं वैक्रियकं द्विविधं मैथुनव्रतम् । तिर्यङ्मनुष्यभेदेनौदारिकं तु द्विधा भवेत् ॥ ५६७ ॥
विज्ञेयं वैक्रियं चैकविधं देवाङ्गनागतम् । एतद्व्रतं समस्तानां व्रतानामपि दुःसहम् ॥ ५६८ ॥
परदारप्रसक्तानां दुःखानि स्युरनेकधा । यथा करालपिङ्गोऽभूत्पुरोधा दुःखभाजनम् ॥ ५६९ ॥
कोऽसौ करालपिङ्गाख्य इति चक्रायुधेन तु । पृष्टो जगाद भगवानुर्वीश ! श्रूयतामिति ॥ ५७० ॥
अस्तीह भरतक्षेत्रे पुरं नलपुराऽभिधम् । बभूव नलपुत्राख्यस्तत्र राजा महाभुजः ॥ ५७१ ॥
करालपिङ्गो नाम्नाऽभूत्तस्याऽभीष्टः पुरोहितः । शान्तिकर्मणि निष्णातो रूपयौवनवित्तवान् ॥ ५७२ ॥
महेभ्यतनयस्तत्र पुष्पदेवोऽभिधानतः । मित्रं पुरोहितस्याऽस्य वसति स्म वणिग्वरः ॥ ५७३ ॥
तस्याऽऽसीत् प्रवरा भार्या पद्मश्रीः प्राणवल्लभा । पतिव्रता(त)प्रभृतिभिः स्त्रीगुणैः समलंकृता ॥ ५७४ ॥
पुरोधसाऽन्यदा तेन केनचिद्विहितकर्मणा । तोषितः पृथिवीपालस्ततः सोऽस्मै ददौ वरम् ॥ ५७५ ॥
विषयासक्तचित्तेन तेनेदं याचितं ततः । पुरेऽस्मिन् स्वेच्छया रामा रमणीया मया प्रभो ! ॥ ५७६ ॥

राजा प्रोवाच या काचिदिच्छति त्वामिहाऽबला। सेवनीया त्वया सा हि सर्वदा नाऽपरा पुनः ॥ ५७७ ॥
अनिच्छन्तीं च चेद्रामां रंस्यसे वाऽर्थयिष्यसि । करिष्यामि ततो दण्डं पारदारिकवत् तव ॥ ५७८ ॥
स्वैरं संचरता तेन पुरे तस्मिन् पुरोधसा । वल्लभा पुष्पदेवस्य पद्मश्रीर्वीक्षिताऽन्यदा ॥ ५७९ ॥
ततो विद्युल्लतानाम्नीं तस्या दासीं जजल्प सः। भद्रे ! भण तथेमां त्वं यथा वाञ्छति मामसौ॥ ५८० ॥
सतीत्वं पालयन्ती सा नेच्छत्येनं कथञ्चन । स्वयं करालपिङ्गेन रन्तुमभ्यर्थिताऽन्यदा ॥ ५८१ ॥
साऽब्रवीदीन्मेदृशं ब्रूहि ज्ञास्यत्येतत्सखा तव । सोऽब्रवीच्च तथा कार्यं यथाऽन्यत्र प्रयात्यसौ ॥ ५८२ ॥
कथितं निजकान्तस्य तद्वाक्यमखिलं तया । प्रतीक्षमाणः कालं च सोऽस्थाद् धृत्वा मनस्यदः॥ ५८३ ॥
पुरोहितेन तेनाऽस्थ विद्यासामर्थ्यतोऽन्यदा । कृता दुर्विषहा शीर्षे वेदना मेदिनीपतेः ॥ ५८४ ॥
तमाकार्य ततो राज्ञा तत्स्वरूपं निवेदितम् । अपनिन्ये सका तेन शिरोऽर्तिमन्त्रवादिना ॥ ५८५ ॥
पुनस्तुष्टोऽस्य भूपालोऽवदद्याचस्व किञ्चन । तेनाऽपि जल्पितं देव ! कुर्विदं त्वं वचो मम ॥ ५८६ ॥
किंजल्पिसंज्ञके द्वीपे सन्ति किंजल्पिकाः खगाः। सुस्वरा दृश्यमाना भवन्ति सुखदा हि ते॥ ५८७ ॥
तेषामानयनार्थं तत् पुष्पः संप्रेष्यतां वणिक् । तदङ्गीकृत्य भूपोऽपि तदर्थं विससर्ज तम् ॥ ५८८ ॥
सौवस्तिककृतं चैतत्सोऽपि विज्ञाय बुद्धिमान् । भर्तुः प्रमाणमादेश इत्युक्त्वा च ययौ गृहम् ॥ ५८९ ॥

१ सौवस्तिकः पुरोहितः ।

अकारयद्भूमिगृहं गृहस्याऽन्तस्ततश्च सः । नरैः प्रत्ययितैर्यन्त्रपर्यङ्कं तस्य चोपरि ॥ ५९० ॥
भणिताश्च नरा एते यत्रेत्यत्र पुरोहितः । तद्बध्ध्वा छन्नमेवाऽयमानेतव्यो ममाऽन्तिकम् ॥ ५९१ ॥
दत्त्वाऽऽदेशममुं तेषां सोऽथ निःसृत्य मन्दिरात् । किल देशान्तरं गन्तुं तस्थौ क्वापि पुराद्बहिः ॥५९२॥
हृष्टः करालपिङ्गोऽगात् पुष्पदेवस्य मन्दिरे । तत्रोपवेशितस्तस्मिन् पर्यङ्के यन्त्रनिर्मिते ॥ ५९३ ॥
पतितश्च ततो भूमिगृहे तत्र स्थितैर्नरैः । बध्ध्वा मयूरबन्धैश्च पुष्पदेवस्य सोऽर्पितः ॥ ५९४ ॥
तेनासावात्मना सार्धं नीतो देशान्तरं ततः । षड्भिर्मासैर्वलित्वाऽगात् पुनरेष निजं पुरम् ॥ ५९५ ॥
निर्गाल्य मदनं[1] तेन लिप्त्वा पौरोहितं वपुः । पञ्चवर्णैस्ततः पिच्छैः परितोऽलंकृतं व्यधात् ॥ ५९६ ॥
गत्वाऽथ भूपतेः पार्श्वे पुष्पदेवो व्यजिज्ञपत् । गृहीता बहवोऽभूवन् देव ! ते पक्षिणो[2] मया ॥ ५९७ ॥
परमागच्छतो मार्गे ते सर्वे निधनं गताः । आनीतस्त्वेक एवाऽस्ति तत्तं किं दर्शयामि वः ? ॥ ५९८ ॥
राजा प्रोवाच तमिहाऽऽनीय दर्शय मे द्विजेम् । शृणोमि सुस्वरं तस्य तं च पश्याम्यहो यथा ॥ ५९९ ॥
ततश्चाऽऽनीय मुक्तो द्राक् तेनाऽसौ नृपतेः पुरः । ऊचे च भूपतिरहो अपूर्वं रूपमस्य हि ॥ ६०० ॥
यदयं मर्त्यसंकाशो[3] युक्तः पक्षतिभिस्तथा । तदस्य श्रावय त्वं मामितः श्रुतिसुखं[4] स्वरम् ॥ ६०१ ॥
आदाय प्राजनं सोऽथ तं त्रिशाखाऽऽरया[5] भृशम् । जल्पेति भणितस्तेन किं जल्पामीति सोऽवदत् ॥ ६०२ ॥

---

१ मदनं लोके मीण इति प्रसिद्धम् । २ पक्षिणं । ३ मनुष्यसदृशः । ४ कर्णसुखकरम् । ५ आरया सूचीसमशस्त्रविशेषेण ।

राजाऽपि दर्शनं तस्य दृष्ट्वा तमुपलक्ष्य च । ऊचे भोः पुष्प ! पश्येष मत्पुरोहितसन्निभः ॥ ६०३ ॥
स एवाऽयमिति प्रोक्ते तेन भूयोऽब्रवीन्नृपः। कथमीदृक् कृत इति व्याचख्यौ सोऽथ तत्कथाम् ॥ ६०४ ॥
ततश्चाऽऽरक्षकनरा इत्यादिष्टा महीभुजा। अन्यायकारिणममुं रे व्यापादयताऽधमम् ॥ ६०५ ॥
नानाविडंबनाः कृत्वा भ्रमयित्वा पुरेऽखिले । स तैर्व्यापादितो घोरां जगाम नरकावनिम् ॥ ६०६ ॥
तत्राऽपि प्रज्वलल्लोहपुत्रिकालिङ्गनादिकम् । दुःखं विषह्य संसारमपारं स भ्रमिष्यति ॥ ६०७ ॥

॥ इति चतुर्थव्रते करालपिङ्गकथा ॥

परिग्रहव्रतं स्थूलं सचित्ताऽचित्तमिश्रकैः। भेदैस्त्रिधा तथा तच्च नवभेदं भवत्यहो ! ॥ ६०८ ॥
धने धान्ये क्षेत्रवास्तुरूप्यकुप्येषु हेमनि । द्विपदे चतुष्पदे च कुर्यान्मानं परिग्रहे ॥ ६०९ ॥
एतस्मादनिवृत्तानां दुःखानीह शरीरिणाम् । सुलसश्रावकस्येव संजायन्ते निरन्तरम् ॥ ६१० ॥
चक्रायुधोऽवदत् कोऽयं भगवन् ! सुलसाह्वयः। श्रीशान्तिनाथः प्रोचे च तत्कथा श्रूयतामिति ॥ ६११ ॥
इहाऽमरपुरं नाम नगरं भरतावनौ । विद्यते तत्र भूपालोऽमरसेनोऽभवद्बली ॥ ६१२ ॥
श्रेष्ठी वृषभदत्ताख्यस्तत्राऽऽसीद्विवेकवान् । श्राद्धोऽविचलसम्यक्त्वो जिनसंयतपूजकः ॥ ६१३ ॥
तस्याऽऽसीज्जिनदेवीति गेहिनी गुणसंयुता । सौन्दर्यसारकलशः सुलसो नाम तत्सुतः ॥ ६१४ ॥
संप्राप्तो यौवनं सोऽथ पितृभ्यां परिणायितः । तनयां जिनदासस्य सुभद्रां नाम कन्यकाम् ॥ ६१५ ॥

जनकस्योपदेशेन सोऽथ गुर्वन्तिकं गतः । श्राद्धव्रतानि जग्राह परिग्रहमितिं तु न ॥ ६१६ ॥
कलासु रसिकः सोऽथ नो विषयेष्वरज्यत । श्रेष्ठिन्या भणितः श्रेष्ठी तं निरीक्ष्य तथाविधम् ॥ ६१७ ॥
आवयोस्तनयो नाथ ! दृश्यते निःस्पृहो यतः । तत्त्वं तथा कुरु यथा विषयैषी भवेदयम् ॥ ६१८ ॥
श्रेष्ठ्यूचे मेदृशं वादीरभ्यस्तेषु भवे भवे । भावेषु स्वयमेवाऽयं प्रायः प्राणी प्रवर्तते ॥ ६१९ ॥
तथाऽप्यत्याग्रहेणाऽस्याः श्रेष्ठिना निजनन्दनः । दुर्ललितानां पटले क्षिप्तो वैदग्ध्यहेतवे ॥ ६२० ॥
विस्मारितकलाभ्यामः स तैः कौतुकदर्शनात् । नीतः कामपताकाया वेश्यायाः सदनेऽन्यदा ॥ ६२१ ॥
संभ्रान्तया तया सोऽथाऽक्कया च स्वागतोक्तिभिः[1] । आसनस्य च दानेन धनवानिति पूजितः ॥ ६२२ ॥
उपविष्टश्च तत्राऽयं मित्राणामुपदेशतः । प्रारब्धा चाऽनया गोष्ठी सर्वभाषाविदग्धया ॥ ६२३ ॥
तद्वाक्यरचनाक्षिप्तं तं विज्ञाय शनैः शनैः । जग्मुर्निजं निजं स्थानं पापमित्रा इमेऽखिलाः ॥ ६२४ ॥
तथा तया रञ्जितोऽसौ यथा तन्मन्दिरान्न हि । निःससार धनं मातापितरौ[2] प्रेषयतः स्म च ॥ ६२५ ॥
तत्राऽस्थात् षोडशाब्दानि सुलमस्तस्य तौ पुनः । संस्थितौ[3] पितरौ भार्या तथैव प्रेषयद्धनम् ॥ ६२६ ॥
साऽथ संप्रेषयामासाऽलङ्कारान्निष्ठिते[4] धने । अक्का तानार्पयत्तस्याः सहस्रं रूपकांस्तथा ॥ ६२७ ॥
भणिताऽथ तया कामपताका पुत्रि ते पतिः । संजातो गतविभवस्तत्परित्यज्यतामयम् ॥ ६२८ ॥

१ थाभियानस्वागतोक्तिभिः इत्यपि । २ मातृतातौ इति साधुः । ३ मृतौ । ४ क्षीणे ।

दत्तं भूरि धनं येन स कथं त्यज्यतेऽम्बिके ! । तयेत्युक्ताऽनुरागिण्या भूयोऽभाषिष्ट कुट्टिनी ॥ ६२९ ॥
वेश्याधर्मे सदा सेव्यो विभवालङ्कृतो नरः । निर्धनस्तु परित्याज्यो निष्पीडितरसेक्षुवत् ॥ ६३० ॥
इति प्रोक्तेऽपि सा यावत्सुलसं त्यजति स्म न । स्वयमेवाऽक्कया तावदित्यभाणि सकोऽन्यदः ॥ ६३१ ॥
क्षणमेकमधोभूमौ भद्राऽवतर सम्प्रति । यावत्प्रमार्ज्यते चित्रशालीयं रजसाश्चिता ॥ ६३२ ॥
अज्ञाततदभिप्रायः सोऽवतीर्य स्थितस्ततः । चेट्या प्रोक्तः किमत्र त्वं निर्लज्जाद्याऽपि तिष्ठसि ? ॥ ६३३ ॥
निःसृत्य तद्गृहात् सोऽथ चचाल स्वगृहं प्रति । स्वर्गाच्च्युत्वा मर्त्यभवं गीर्वाण इव खेदवान् ॥ ६३४ ॥
साध्वङ्गमिव निर्लेपं पक्षिवच्च निरर्गलम् । तेनौको ददृशे निर्वृत्यप्यनिर्वृतिकारकम् ॥ ६३५ ॥
प्रत्यासन्नरः कश्चित् पृष्टस्तेन यथा किमु । इदं वृषभदत्तस्य भद्र ! गेहं भवेन्न वा ॥ ६३६ ॥
भवतीत्युदिते तेन सोऽब्रवीच्च किमीदृशम् । दृश्यते किं तु स श्रेष्ठी कुशली वर्तते न वा ॥ ६३७ ॥
ततश्च श्रेष्ठिश्रेष्ठिन्योः पञ्चत्वादिकथाममौ । सुलसस्य समाचख्यौ तच्छ्रुत्वा सोऽप्यचिन्तयत् ॥ ६३८ ॥
हा मया दुष्टपुत्रेण वेश्यासक्तेन पाप्मना । पितरौ दुष्प्रतीकारौ न ज्ञातौ संस्थितावपि ॥ ६३९ ॥
इदं हि धनदावाससदृक्षं पितृमन्दिरम् । मया व्यसनिना हन्त कृतं प्रेतवनोपमम् ॥ ६४० ॥
सुहृत्स्वजनलोकानां पापोऽहं वदनं निजम् । कथं प्रदर्शयिष्यामि लक्ष्मीलाभविवर्जितः ॥ ६४१ ॥
वलित्वाऽसौ ततः स्थानाद् गत्वा च नगराद्बहिः । जीर्णोद्याने खरतालपत्रे क्षुरिकयाऽलिखत् ॥ ६४२ ॥

स्वस्ति नत्वा जिनाधीशान् सुलसः प्रेयसीं निजाम् । स्वक्षेमवार्तयाऽऽह्लाद्य संदिदेशेति साञ्जसम् ॥ ६४३ ॥
प्रिये वेश्यागृहादद्य निर्गतोऽहं ततः कथाम् । श्रुत्वा मरणजां पित्रोर्ह्रिया नागां त्वदन्तिके ॥ ६४४ ॥
गत्वा देशान्तरे लक्ष्मीमुपार्ज्य मानसेप्सिताम् । इहैष्यामि दिनैः स्तोकैः खेदः कार्यस्त्वया न हि ॥ ६४५ ॥
लिखित्वा क्षुरिकाऽग्रेणेत्यक्षरालीं ततश्च सा । संपूरिताङ्गाग्मध्या तेन संवर्तितं च तत् ॥ ६४६ ॥
तदा च तत्प्रियादासी दैवात्तत्र समागता । तस्याः समर्प्य तत्पत्रं परदेशे ययावसौ ॥ ६४७ ॥
एकस्मिन्नगरे गत्वा जीर्णोद्याने स्थितोऽथ सः । प्ररोहं ब्रह्मवृक्षस्य निरीक्ष्यैवं व्यचिन्तयत् ॥ ६४८ ॥
न स्यादक्षीरवृक्षस्य प्ररोहो विभवं विना । बह्वल्पं वा भवेद् द्रव्यं ध्रुवं बिल्वपलाशयोः ॥ ६४९ ॥
प्ररोहे वीक्षिते सूक्ष्मे स्तोकद्रव्यं विवेद सः । सुवर्णमिति चाज्ज्ञासीत् क्षीरे तद्वर्णके सति ॥ ६५० ॥
ॐ नमो धरणेन्द्राय नमः श्रीधनदाय च । एवमाद्युच्चरन्मंत्रं तत्स्थानं खनति स्म सः ॥ ६५१ ॥
लब्धं सहस्रदीनारमानं तच्च निधानकम् । संगोप्य परिधानान्तः प्रविवेश पुरेऽथ सः ॥ ६५२ ॥
एकस्य वणिजो हट्टे निविष्टो व्याकुलस्य च । प्रभूतग्राहकैस्तस्य साहाय्यं सुलसो व्यधात् ॥ ६५३ ॥
विलोक्य तस्य दक्षत्वं हृष्टः श्रेष्ठी व्यचिन्तयत् । अहो सुपुरुषस्याऽस्य विज्ञानं पुण्यसंयुतम् ॥ ६५४ ॥
जातः प्रभूतलाभोऽद्य माहात्म्यादस्य यन्मम । तदयं न हि सामान्य इति ध्यात्वाऽब्रवीच्च सः ॥ ६५५ ॥

१ पलाशवृक्षस्य ।

कुतो ग्रामात् पुराद्वा त्वमागतोऽसि महाशय ! । सुलसोऽवोचदमरपुराद्भद्राऽऽगतोऽस्म्यहम् ॥ ६५६ ॥
तर्हि प्राघुणकः कस्येति पृष्टो श्रेष्ठिना पुनः । तवैवेत्युक्तवान् सोऽथ निन्ये तेन च मन्दिरे ॥ ६५७ ॥
अभ्यङ्गोद्वर्तनस्नानभोजनानि च कारितः । पुनरागमने हेतुं पृष्टः श्रेष्ठिवरेण सः ॥ ६५८ ॥
सुलसः स्माह ताताऽहमर्थोपार्जनहेतवे । इहाऽऽगतोऽस्मि तत् किञ्चिद्भट्टं मम प्रदर्शय ॥ ६५९ ॥
गृहीत्वा भाटकेनाऽट्टं व्यवहारं प्रकुर्वतः । षड्भिर्मासैः सुदीनारा द्विगुणास्तस्य तेऽभवन् ॥ ६६० ॥
क्रयाणकानि संगृह्य महासार्थसमन्वितः । जगाम सोऽथ तिलकपुरे वार्धितटस्थिते ॥ ६६१ ॥
तत्राऽप्यसंजायमाने लाभे चेतोऽभिवाञ्छिते । प्रययौ यानमारुह्य रत्नद्वीपे ततश्च सः ॥ ६६२ ॥
उपायनमुपादाय समीपे नृपतेर्गतः । अमुनाऽप्यर्धदानेन प्रसादोऽस्य व्यधीयत ॥ ६६३ ॥
लब्धान्यनेन रत्नानि लाभश्चाऽनेन वाञ्छितः । प्रवृत्तः पुनरप्येष स्वदेशाभिमुखं ततः ॥ ६६४ ॥
लक्ष्मीमादाय चलिते तस्मिंस्तद्यानपात्रकम् । पुस्फोट स्ववियोगार्तं वारिधेरिव मानसम् ॥ ६६५ ॥
लब्ध्वा फलहकं किञ्चिद्दक्षसा परिरभ्य तत् । पञ्चभिर्दिवसैः पारं प्राप्तवान् सुलसोऽम्बुधेः ॥ ६६६ ॥
प्राणयात्रां व्यधात्तत्र पेशलैः कदलीफलैः । पपौ च नीरमन्विष्य स्वस्थः पुनरचिन्तयत् ॥ ६६७ ॥
अनन्यसदृशां ऋद्धिं संप्राप्याऽपि कुतोऽस्म्यहम् । हस्तद्वितीयो दैवेन पश्याऽहो ! पाप्मनः फलम् ॥ ६६८ ॥
त्याज्यः पुरुषकारो नो विपत्स्वपि मया खलु । यस्माद्वदन्ति विद्वांसो विशेषेणेदृशं वचः ॥ ६६९ ॥

नीचैर्नारभ्यते कार्यं कर्तुं विघ्नभयात् खलु । प्रारभ्य त्यज्यते मध्यैः किञ्चिद्विघ्न उपस्थिते ॥ ६७० ॥
उत्तमास्त्वन्तरायेषु भवत्स्वपि सहस्रशः । प्रशस्यं कार्यमारब्धं न त्यजन्ति कथञ्चन ॥ ६७१ ॥
एवं विचिन्त्य सुलसः प्रवृत्तो गन्तुमग्रतः । ददर्शैकत्र गृध्राणां सन्निपातं सकौतुकः ॥ ६७२ ॥
गतस्तदनुसारेण तत्राऽपश्यदसौ शवम् । ग्रन्थौ तस्य स रत्नानि कोटिमूल्यानि पञ्च च ॥ ६७३ ॥
ततो दध्यौ मया तावददत्तादाननिर्वृतिः । कृता परमिदं द्रव्यं ग्राह्यमस्वामिकं यतः ॥ ६७४ ॥
एतन्मूलेन चैत्यानि कारयिष्याम्यहं किल । अमीषां स्वामिनः पुण्यमनूनं भवतादिति ॥ ६७५ ॥
एवं विचिन्त्य रत्नानि गृहीत्वा तानि सोऽचलत् । संप्राप्तो जलधितटं नाम वेलाकुलं पुरम् ॥ ६७६ ॥
ययौ च श्रेष्ठिनस्तत्र श्रीसारस्य निकेतने । तेनाऽपि विहिता तस्य भोजनाद्युचितक्रिया ॥ ६७७ ॥
कोटिद्वयेन विक्रीय तत्र रत्नद्वयं ततः । भांडान्यादाय तेन स्वदेशं प्रति चचाल सः ॥ ६७८ ॥
सहितो गुरुसार्थेन संप्राप्तोऽथ महाटवीम् । तत्रैकत्र प्रदेशेऽस्थात्सार्थो मध्यन्दिनेऽथ सः ॥ ६७९ ॥
धान्यपाकादिकार्येषु व्यग्रः सार्थे जनोऽखिलः । कुतोऽप्यतर्कितैरेत्य लुंटितो भिल्लतस्करैः ॥ ६८० ॥
संनह्य सपरीवारोऽप्यहंयुः सुलसस्ततः । डुढौके संगरायाथ सार्धं तस्करसेनया ॥ ६८१ ॥
पलायांचक्रिरे भिल्लैर्जितास्ते सुलसानुगाः । सुलसस्तु गृहीतस्तैर्युध्यमानो मलिम्लुचैः ॥ ६८२ ॥

१. मूलधनेन । २. मानी ।

विक्रीतश्च वणिक्पार्श्वे द्रव्यलाभेन तेन च । परकूले मर्त्यरक्तार्थिनो लोकस्य सन्निधौ ॥ ६८३ ॥
रक्तमाकृष्यते तत्र मानुषाणां शरीरतः । क्षिप्यते तच्च कुंडेषु जायन्ते तत्र जन्तवः ॥ ६८४ ॥
कृमिरागो भवेत्तैश्च रज्यते तेन चीवरम् । रक्षापि रक्तवर्णा स्याद्दग्धे तस्मिन् कृशानुना ॥ ६८५ ॥
सुलसस्तादृशं दुःखं सहमानोऽन्यदा हृतः । रक्ताचिताङ्गो नभसा मामुद्रिकपतत्रिणा ॥ ६८६ ॥
नीतश्च रोहणगिरौ तत्र मुक्त्वा शिलातले । तमत्तुमुद्यतः पक्षी दृष्टोऽन्येन स पत्रिणा ॥ ६८७ ॥
कलहं कुर्वतोः सोऽथ पक्षिणोः प्राविशद् गुहाम् । निर्ययौ च गुहामध्यादन्यत्र गतयोस्तयोः ॥ ६८८ ॥
एकस्मिन्निर्जरे गात्रं प्रक्षाल्य पयसा ततः । व्रणानि रोहयामास संरोहिण्या रसेन सः ॥ ६८९ ॥
उत्ततारऽचलात्सोऽथ गर्तारिणृन्करॉँस्तथा । नरान् खनित्रपाणींश्चाऽद्राक्षीन पञ्चकुलं तथा ॥ ६९० ॥
पप्रच्छैकं नरं सोऽथ भद्र! कोऽयं शिलोच्चयः । को देशः कोऽथवा भूपः किमन्यच्चेति शंस मे ॥ ६९१ ॥
नरेण भणितं तेन याति देशान्तरे हि यः । तत्स्वरूपमसौ वेत्ति त्वं तु नामापि वेत्सि न ॥ ६९२ ॥
पतितोऽसि किमाकाशात् पातालान्निर्गतोसि वा । कथमत्राऽऽगतोऽसि त्वं यन्न जानासि किञ्चन ॥ ६९३ ॥
सुलसोऽप्यब्रवीत् सत्यं गगनात पतितोऽस्म्यहम् । भूयः किमिति तेनोक्ते शशंस सुलसोऽप्यदः ॥ ६९४ ॥
सुहृद्विद्याधरो मेऽस्ति तेनाऽहं मेरुपर्वते । नभसा नेतुमारब्धो रूपं तस्य प्रदर्शितुम् ॥ ६९५ ॥
अत्रान्तरे रिपुस्तस्य तत्राऽऽगात् खेचरोऽपरः । सह तेन प्रवृत्तोऽसौ संप्रहर्तुं विमुच्य माम् ॥ ६९६ ॥

एतेन कारणेनाऽहमाकाशात् पतितः किल । आख्याहि त्वमितः सर्वं भद्र! पृष्टोऽसि यन्मया ॥ ६९७ ॥
सोऽवदद्रोहणो नाम्ना देशोऽयं पर्वतोऽपि च । नृपतिर्विक्रमारोऽत्र तस्य पश्चकुलं ह्यदः ॥ ६९८ ॥
खनित्रपाणयः पृथ्वीं खनित्वा पुरुषा इमे । रत्नाकृष्टिं प्रकुर्वन्ति ददते च करं विभोः ॥ ६९९ ॥
तच्छ्रुत्वा सुलसो दध्यावुपायोऽयं धनार्जने । भव्यः परं पुरे क्वापि स्थितिं कृत्वा करिष्यते ॥ ७०० ॥
गतोऽथ तैर्नरैः सार्धं रत्नपुञ्जाभिधे पुरे । वृद्धस्य वणिजो गेहे सोऽगात्तेन च भोजितः ॥ ७०१ ॥
तस्याऽऽख्याय स्ववृत्तान्तं सामग्रीं प्रविधाय च । रत्नान्यमेलयत्सोऽथ प्रभूतानि महोद्यमी ॥ ७०२ ॥
लब्धं तेन महामूल्यं रत्नमेकमथाऽन्यदा । कथञ्चिद् गोपयित्वाऽङ्गे तद्गर्तायाः स निर्ययौ ॥ ७०३ ॥
तद्वर्जमन्यरत्नानां दत्त्वा भागं नरेशितुः । पूर्वदिग्भूषणे सोऽगाच्छ्रीपत्तनपुरे वरे ॥ ७०४ ॥
तत्र विक्रीय रत्नानि गृहीत्वा च क्रयाणकम् । पुनः स्वदेशाभिमुखोऽचलत् प्राप्तश्च सोऽटवीम् ॥ ७०५ ॥
दग्धं दवाग्निना तत्र सर्वं तस्य क्रयाणकम् । संजातः पुनरेकाकी ग्रामे क्वाऽपि ययावसौ ॥ ७०६ ॥
परिव्राजकमेकं च तत्राऽद्राक्षीत् प्रणम्य तम् । तस्योपान्ते निविष्टोऽसौ तेनैवं परिभाषितः ॥ ७०७ ॥
कुतस्त्वमागतो भद्र! गन्तव्यं कुत्र वा त्वया । कार्येण केन वा पृथ्व्यामेकाकी संचरस्यहो! ॥ ७०८ ॥
सुलसोऽवोचदमरपुराद्भद्राऽऽगतोऽस्म्यहम् । सर्वत्र मेदिनीपीठे विभवार्थी भ्रमामि च ॥ ७०९ ॥
सोऽथाऽभाणि परिव्राजा तिष्ठ त्वं मम संनिधौ । कियन्त्यहानि येन त्वामीश्वरं विदधाम्यहम् ॥ ७१० ॥

महाप्रमादं इत्युक्त्वा सोऽस्थात्तस्याऽन्तिके ततः । एकस्मिन्मन्दिरे तेन भोजितो बुभुजे च सः॥ ७११ ॥
गतस्तपस्विनस्तस्यावसथे सुलसस्ततः । पप्रच्छैवं कथं त्वं मां करिष्यसि समृद्धकम् ? ॥ ७१२ ॥
सोऽथाऽवादीद्रसकूपकल्पोऽस्ति मम सन्निधौ । तस्यैकबिन्दुनाऽनेका विध्यन्ते लोहकोटयः ॥ ७१३ ॥
ततो विधेहि सामग्रीं महिषीपुच्छमेककम् । महत्प्रमाणमानीय मम तावत्समर्पय ॥ ७१४ ॥
स्वयं विपन्नसैरिभ्याः पुच्छं तस्याऽर्पयत्मकः । षण्मासाँस्तैलमध्ये तत्प्रक्षिप्तं तेन योगिना ॥ ७१५ ॥
कल्पस्य पुस्तिका तेन धृतैकस्मिन् करे ततः । द्वितीये च करे पुच्छं वरत्रायुगलं तथा ॥ ७१६ ॥
द्वे तुम्बे मञ्चिकां च बलेः पटलिकां तथा । अग्निस्थिकां च सुलसमस्तकेऽस्मौ न्यवेशयत् ॥ ७१७ ॥
तौ गिरेर्विवरं प्राप्तौ तस्य द्वारनिवेशिनाम् । अभ्यर्च्य यक्षप्रतिमां तत्र प्राविशतां ततः ॥ ७१८ ॥
उत्तस्थौ तत्र यः कश्चिद्भूतवेतालराक्षसैः । बलिं चिक्षेप सुलसः संमुखं तस्य निर्भयः ॥ ७१९ ॥
सैरिभीपुच्छदीपेन दृष्टमार्गावुभाविमौ । योजनद्वयमुल्लंघ्य संप्राप्तौ रसकूपकम् ॥ ७२० ॥
चतुर्हस्तसुविस्तीर्णं दीर्घं, च चतुरः करान् । चतुरस्रममुं प्रेक्षांचक्राते तौ च हर्षितौ ॥ ७२१ ॥
मञ्चिकां प्रगुणीकृत्य रज्जू तत्र निबध्य च । योग्यूचे सुलसाऽत्र त्वमुपविश्यावटे विश ॥ ७२२ ॥
गृहीततुम्बकः सोऽथोपविष्टोऽत्र शनैः शनैः । प्रक्षिप्तो योगिना कूपतलेऽगाद्रससन्निधौ ॥ ७२३ ॥

१ महिष्याः । २ रज्जुद्वयम् । ३ पूजायाः । ४ एकवचनं चिन्त्यम् । ५ रज्जुद्वयम् ।

नमस्कारं पठन् यावद्रसमादातुमुद्यतः । सोऽभवन्निर्गयौ तावत्तस्य मध्यादिति स्वरः ॥ ७२४ ॥
कुष्ठिसंज्ञं रसममुं मा स्प्राक्षीस्त्वं करेण भो ! । अमुनाऽङ्गे विलग्नेन प्राणत्यागो भवेद्यतः ॥ ७२५ ॥
साधर्मिकस्य साहाय्यं ततस्ते प्रकरोम्यहम् । एते रसेन संपूर्य तुम्बिके तेऽर्पयामि यत् ॥ ७२६ ॥
सुलसस्तत्समाकर्ण्य प्रोचे त्वं धर्मबान्धवम् । वन्दे कस्त्वं स्वरूपं स्वं शंस मे कौतुकं महत् ॥ ७२७ ॥
सोऽब्रवीद्भुविशालाख्यपूर्वासी वणिगस्म्यहम् । जिनशेखराभिधानो वाणिज्येनाऽम्बुधौ गतः॥ ७२८ ॥
भग्नं प्रवहणं तत्र जीवितोऽहं कथश्चन । क्षिप्तः परिव्राजकेन कूपेऽस्मिन् रसलोभवान् ॥ ७२९ ॥
कण्ठे गतस्य मे पार्श्वाद्गृहीत्वा रसतुम्बकम् । अहं रसान्तः प्रक्षिप्तस्तेन भोः पापकर्मणा ॥ ७३० ॥
मन्ये त्वमपि तेनैव प्रक्षिप्तोऽस्यत्र किंतु मे । आत्मनो गोत्रमाख्याहि सुश्रावक ! महाशय ! ॥ ७३१ ॥
सुलसोऽपि स्ववृत्तान्तं ततस्तस्य न्यवेदयत् । स च तस्यार्ऽपयामास रसेनाऽऽपूर्य तुम्बके ॥ ७३२ ॥
बध्ध्वा ते मश्चिकाधस्ताद्रज्जू चालयति स्म सः । ऊर्ध्वं कूपतटं यावदाकृष्टो योगिना ततः ॥ ७३३ ॥
उचे च भद्र ! प्रथमं तुम्बके मे समर्पय । सुलसः स्माह बद्धे स्तो मश्चिकाया अधो हि ते ॥ ७३४ ॥
असकृद्याचमानेऽथ रसतुम्बे तपस्विनि । सुलसो नाऽर्पयत्तस्य ते चिक्षेप च कूपके ॥ ७३५ ॥
विमुच्य कूपमध्ये तं ययौ सोऽथ त्रिदण्डिकः । सुलसोऽपि मेखलायां पपात न रसान्तरे ॥ ७३६ ॥

१ त्वं धर्मबान्धवः । वद कस्त्वमित्यपि ।

ततः पुनर्नमस्कारमुच्चैरुच्चरन्नयम् । आत्मानमात्मनैवेति बोधयामास दुःखितः ॥ ७३७ ॥
हा जीव ! विनिवृत्तिं चेदकरिष्यः परिग्रहात् । ततस्ते नेदृशं दुःखमभविष्यत् कथञ्चन ॥ ७३८ ॥
अधुनाऽपि गृहीत्वा त्वं श्रामण्यं स्वस्य साक्षिकम् । गृहाणाऽनशनं येन तरस्याशु भवार्णवम् ॥ ७३९ ॥
इत्युदित्वा विधातुं तदुद्यतोऽसौ निवारितः । जिनशेखरसंज्ञेन तेनेदं परिजल्पता ॥ ७४० ॥
यदा तदा मुर्शलिकाऽत्रैति केनाऽपि वर्त्मना । रसं पातुं ततस्तस्या वलितायास्त्वमप्यहो ॥ ७४१ ॥
गाढमादाय तत्पुच्छमितः कूपाद्विनिःसरेः । मरिष्याम्यधुना किंतु तत्कुर्वाराधनां मम ॥ ७४२ ॥ युग्मम् ॥
ज्ञात्वाऽन्तसमयं तस्य सुलसः श्रावको वरः । जिनशासनतत्त्वज्ञो व्यधादाराधनां वराम् ॥ ७४३ ॥
कर्मबीजे विनिर्दग्धे ये न रोहन्ति भूतले । संसारपारगाँस्त्वं तान् स्मरेदानीमर्हतः ॥ ७४४ ॥
अर्हन्ति वन्दनादीनि प्रातिहार्याणि येऽथवा । सिद्धिपूःसार्थवाहाँस्तानर्हतः स्मर सम्प्रति ॥ ७४५ ॥
अष्टप्रकारकर्मारीन् घ्नन्ति येऽमिततेजसः । स्मर्तव्यास्तेऽरिहन्तारो भगवन्तस्त्वयाऽधुना ॥ ७४६ ॥
इति तेषां नमस्कारः सर्वदापि सुखावहः । जायते सर्वसत्त्वानां प्रथमं मङ्गलं तथा ॥ ७४७ ॥
क्षिपयित्वाऽखिलं कर्म ये गताः परमं पदम् । त्रैलोक्यमस्तकस्थाँस्तान् स्मर सिद्धान्निरञ्जनान् ॥ ७४८ ॥
इह ये परमेष्ठी(ष्ठि)नां द्वितीयस्थानसंस्थिताः । तेषां कृतो नमस्कारो द्वितीयं मङ्गलं भवेत् ॥ ७४९ ॥

१ गोधा । २ तीर्थकरान् ।

स्वयं पञ्चविधाचारमाचरन्ति प्रयत्नतः । कथयन्ति च येऽन्येषां संस्मर्याः सूरयो हि ते ॥ ७५० ॥
षट्त्रिंशद्भिर्गुणैर्युक्ताः शुभलक्षणशोभिताः । भवन्ति ते महात्मानस्तृतीयं मङ्गलं जने ॥ ७५१ ॥
येऽङ्गानङ्गगतं सूत्रं पाठयन्त्युद्यताः सदा । सुशिष्यान्निर्जरार्थं तानुपाध्यायान् स्मराऽधुना ॥ ७५२ ॥
उपाध्यायनमस्कारः क्रियमाणः सुचेतसा । जीवलोके समस्ते स्याच्चतुर्थं मङ्गलं खलु ॥ ७५३ ॥
साधयन्ति य के सर्वान् योगान्निर्वाणसाधकान् । मनोवाक्कायगुप्तास्तान् भद्र ! साधून्नमस्कुरु ॥ ७५४ ॥
अष्टादशसहस्राणि शीलाङ्गानां धरन्ति ये । ते साधवो भवन्तीह पञ्चमं मङ्गलं ध्रुवम् ॥ ७५५ ॥
श्रीपञ्चमङ्गलमिदं सर्वमङ्गलमत्तमम् । स्मरेदानीं भवांभोधौ(धिं) यथा तरसि लीलया ॥ ७५६ ॥
चत्वारो मङ्गलं प्रोक्ता अर्हत्सिद्धसुसाधवः । सर्वज्ञोक्तस्तथा धर्मः सर्वजीवदयापरः ॥ ७५७ ॥
सर्वेषामेव लोकानामेते लोकोत्तमा मताः । एत एव हि भव्यानां शरणं खलु देहिनाम् ॥ ७५८ ॥
जानामि दुष्कृतं यत्त्वं छद्मस्थत्वात् कृतं न वा । सिद्धानां साक्षिकं तस्य मिथ्यादुष्कृतमस्तु ते ॥ ७५९ ॥
चातुर्गतिकेऽपि भवे ये हता जन्तवस्त्वया । तेषामपि समस्तानां मिथ्यादुष्कृतमस्तु ते ॥ ७६० ॥
वेदनायाः समूहेऽस्मि सङ्ग्राम इव दुःसहे । शूरवज्जयकेतुं त्वं गृहाणाऽऽराधनामिमाम् ॥ ७६१ ॥
इत्येषाऽऽराधना श्राद्धसुलसेन प्रजल्पिता । जिनशेखरसंज्ञेनाऽङ्गीकृता श्रावकेण सा ॥ ७६२ ॥

१ षट्त्रिंशता इति पाठः साधीयान् ।

कृत्वा भक्तपरित्यागं नमस्कारं विभावयन् । विपद्याऽष्टमकल्पेऽभूत्रिदशो जिनशेखरः ॥ ७६३ ॥
हुंकागदानतोऽथैनं विवेद सुलसो मृतम् । ततो मन्युभराक्रान्तकण्ठोऽरोदीद् गुरुस्वरम् ॥ ७६४ ॥
हा जिनशेखरबन्धो ! साधर्मिक ! गुणालय ! । विमुच्य दुःखितं त्वं मां क्व गतोऽसि महाशय ! ॥ ७६५ ॥
धर्माराधनरज्ज्वा त्वं निःसृन्य भवकूपतः । मन्येऽहं त्रिदिवं प्राप्तो रसकूपगतोऽपि सन् ॥ ७६६ ॥
अत्रान्तरे च मा गोधाऽऽगत्य पीत्वा च तं रसम् । चचाल सुलसस्तस्या लाङ्गूले व्यलगद् दृढम् ॥ ७६७ ॥
क्वापि सुप्तः स्थितः क्वापि निविष्टः क्वाऽप्यसौ ततः । कृच्छ्रेण निर्ययौ गोधापुच्छलग्नस्ततोऽवटात् ॥ ७६८ ॥
दृष्ट्वा रविं पर्वतांश्च तस्याः पुच्छं मुमोच सः । सापि तद्भयभीताऽगाद्वेगेन स्थानमात्मनः ॥ ७६९ ॥
गृहीत्वैकां दिशं सोऽथ यावत्प्रचलितस्ततः । एकेन दन्तिना दृष्टो धावितः सोऽपि तं प्रति ॥ ७७० ॥
सोऽथ दध्यावहो ! अन्तं नैकदुःखस्य याम्यहम् । यावत्तावत् कुतोऽप्येतत् द्वितीयं ढौकते मम ॥ ७७१ ॥
प्रणश्यन् हस्तिना तेन करेण जगृहेऽथ सः । गाढरोषाभिभूतेन प्रक्षिप्तश्च नभस्तले ॥ ७७२ ॥
भवितव्यनियोगेन पतन्नेकस्य शाखिनः । शाखामालम्ब्य तत्रैव तस्थौ दक्षः स्थिराशयः ॥ ७७३ ॥
यावद्धस्ती तरौ तस्मिन् रोषाद्वेधं ददात्यसौ । तावत्तत्राऽऽययौ सिंहो हतस्तेन स वारणः ॥ ७७४ ॥
व्याघ्रश्चाऽऽगादथो तत्र हस्तिमांसं विभक्षितुम् । एकभक्ष्यकृते युद्धं प्रवृत्तं व्याघ्रसिंहयोः ॥ ७७५ ॥

---

१ मन्युः शोकः ।

युद्धं प्रकुर्वतोरेवं तयोर्जाता विभावरी । एकस्यां तरुशाखायामुद्योतश्चाऽभवत्तदा ॥ ७७६ ॥
सुलसोऽनलसः सोऽथ किमेतदिति विस्मितः । एकस्य पक्षिणो नीडे ददर्शैकं मणिं वरम् ॥ ७७७ ॥
सर्पास्थीनि च तत्पार्श्वे विलोक्यैवं व्यचिन्तयत् । नूनमेतद्भुजङ्गस्य फणारत्नं विषापहम् ॥ ७७८ ॥
कृत्वा करतलस्थं तदुत्ततार तगेरसौ । अग्निवत्तेजसा तस्य व्याघ्रसिंहौ प्रणेशतुः ॥ ७७९ ॥
विभातायां त्रियामायां वस्त्रग्रन्थौ निबध्य तत् । प्राप्तः पारमरण्यस्य सुलसः सप्तभिर्दिनैः ॥ ७८० ॥
एकत्र पर्वते रात्रौ दृष्ट्वोद्योतं कृशानुजम् । सोऽगात्तदनुमार्गेण समीपे धातुवादिनाम् ॥ ७८१ ॥
दिनानि कतिचित्तत्र तस्थौ तत्प्रक्रियापरः । त एव भोजनं तस्य ददिरे दक्षताजुषः ॥ ७८२ ॥
सुप्तस्य सोऽन्यदा रात्रौ गृहीतस्तस्य तैर्मणिः । तस्य स्थानेऽपरो बद्धः पाषाणस्तत्प्रमाणकः ॥ ७८३ ॥
ततः स्थानादनिष्पद्यमाने स्वर्णे चचाल सः । संप्राप्तश्चाऽटवीशीर्षनामकं नगरं क्रमात् ॥ ७८४ ॥
रत्नस्य विक्रयार्थं तं यावद्ग्रन्थिं बिभेद सः । तावदश्मानमद्राक्षीन्न च तं सर्पजं मणिम् ॥ ७८५ ॥
ततो दध्यावयं मुष्टोऽस्म्यहं तैर्धातुवादकैः । कस्तेषामथवा दोषो दोषोऽयं कर्मणो मम ॥ ७८६ ॥
महानिशायां सोऽश्वेतचतुर्दश्यामथाऽन्यदा । गत्वा महाश्मशानान्तर्गुरुस्वरमदोऽवदत् ॥ ७८७ ॥
भो भो वेतालभूता ! मे वचनं शृणुतादृताः । विक्रीणामि महामांसं स गृह्णातु य इच्छति ॥ ७८८ ॥

१ आलस्यरहितः ।

तन्निशम्य किलकिलां कुर्वन्तः सहसोत्थिताः । नृत्यन्तः कर्त्रिकाहस्ता भूतप्रेतादयो हि ते ॥ ७८९ ॥
अवदँश्चैन्महामांसं विक्रीणासि विरागतः । पताऽत्र स्थानके तत्त्वं गृह्णीमो येन तद्वयम् ॥ ७९० ॥
निर्भयः सुलमस्तत्र पतति स्म महीतले । आमिषग्रहणार्थं ते परितोऽस्य डुढौकिरे ॥ ७९१ ॥
जिनशेखरदेवोऽथ तं विज्ञाय तथास्थितम् । शीघ्रं समाययौ तत्र नष्टा भूतादयोऽथ ते ॥ ७९२ ॥
देवः प्रोवाच भोः श्राद्ध ! वन्दे त्वां मित्र ! किं त्वया । जिनशासनदक्षेण कर्ममारब्धमीदृशम् ॥ ७९३ ॥
एषोऽहं भवतो मित्रं जिनशेखरनामकः । कृता निर्यामणा यस्य कूपमध्ये तदा त्वया ॥ ७९४ ॥
तत्राऽऽराधनया भद्र ! सहस्रारे सुरोऽभवम् । इन्द्रसामानिकस्तेन त्वं गुरुः सर्वथा मम ॥ ७९५ ॥
तं दृष्ट्वा सुलसोऽप्याऽऽशु वन्दे त्वामहमप्यहो । इति जल्पन् समुत्तस्थौ पप्रच्छ स्वागतं च तम् ॥ ७९६ ॥
देवोऽवादीदहो मित्र ! किमभीष्टं करोमि ते । सोऽवादीत प्रियमेवेदं जातं यद्दर्शनं तव ॥ ७९७ ॥
तथाऽप्येवं समाख्याहि किं मेऽद्याऽप्यन्तरायकम् । विद्यते निविडं कर्म येन गृह्णाम्यहं व्रतम् ॥ ७९८ ॥
देवः प्रोवाच तत्कर्म क्षीणप्रायं तवाऽस्ति भोः ! । अस्ति भोगफलं चाऽपि नार्हस्यद्यापि तद्व्रतम् ॥ ७९९ ॥
ततो महार्घ्यमाणिक्यसुवर्णधनराशयः । सुरेण ढौकितास्तस्य चारुवस्त्रादिकं तथा ॥ ८०० ॥
सुलसः स्माह मां देव ! महासार्थसमन्वितम् । पराणय निजं स्थानं प्रसिद्धिर्येन मे भवेत् ॥ ८०१ ॥

१. कार्यमा० इति पाठः साधीयान् ।

देवोऽपि हि तथा कृत्वा जगाम स्थानमात्मनः । सुलसागमनं तत्र जानाति स्म नरेश्वरः ॥ ८०२ ॥
पुरप्रवेशं चक्रे च तस्याऽभिगतिपूर्वकम् । उचितज्ञः सुलसोऽपि भूपस्योपकृतिं व्यधात् ॥ ८०३ ॥
गृहं गतोऽथ सुलसः पूजितः प्रियया तया । प्रावर्ति च गृहे वर्धापनकं सुकुलीनया ॥ ८०४ ॥
वेश्या कामपताका सा वेणीबन्धसितांशुकैः । शोभिता ददृशे तेन सुभद्रायाः समीपगा ॥ ८०५ ॥
बभूव गेहिनी साऽपि सुलसस्याऽनुरागिणी । स एवं बुभुजे भोगाँस्ताभ्यां सह त्रिरागतः ॥ ८०६ ॥
सोऽन्यदा चिन्तयामास जीव! रे लोभलम्पट!। किं किं ते नाऽभवद्दुःखं परिग्रहमितिं विना ॥ ८०७ ॥
मनसैव व्यधात् सोऽथ परिमाणं परिग्रहे । शेषं धर्मव्यये द्रव्यं ददौ देवगृहादिषु ॥ ८०८ ॥
कियत्यथो गते काले क्षीणं तदपि तद्धनम् । सरोजलमिव ग्रीष्मे पुरा विहितकर्मणा ॥ ८०९ ॥
ततः श्याममुखः किञ्चित्स यावत्सुलसोऽभवत् । तावत्सोऽवधिना ज्ञात्वा निर्जरः पुनराययौ ॥ ८१० ॥
ऊचे च दुर्मनाः किं त्वं दृश्यसे श्राद्धपुङ्गव!। मयि मित्रेऽनुकूले ते का चिन्ता विभवस्य भोः!! ॥ ८११ ॥
इत्युदित्वा सुवर्णानां राशींस्तस्य गृहाजिरे[1] । स सद्यः प्रकटीचक्रे तुष्टो धनदवत् क्षणात् ॥ ८१२ ॥
जजल्प सुलसो द्रव्यमेतावत्संमतं न मे । यतोऽस्ति विहितं मानं मया मित्र! परिग्रहे ॥ ८१३ ॥
देवोऽप्युवाच भोः श्राद्ध! साध्विदं विहितं त्वया । अस्मिँश्च विषये येन पठ्यतेऽदस्तपोधनैः ॥ ८१४ ॥

१. गृहांगणे ।

यथा यथाऽल्पो लोभः स्यादल्पारंभपरिग्रहौ । तथा तथा सुखं नृणां धर्मसिद्धिश्च जायते ॥ ८१५ ॥
ततश्च तदभिप्रेतं दत्त्वा तस्य धनं सुरः । तमापृच्छ्य च स्वस्थानं पुनरेव जगाम सः ॥ ८१६ ॥
सुलसः सोऽन्यदोद्यानं गतः क्वापि निधानकम् । ददर्श न तु जग्राह व्रतभङ्गभयात् किल ॥ ८१७ ॥
निरीक्ष्यमाणस्तद् दृष्ट्या स दृष्टो राजपूरुषैः । गते तस्मिंश्च तत्रद्मेतैरपि विलोकितम् ॥ ८१८ ॥
नूनमस्मान् विलोकयेदं निधानं नाऽग्रहीदसौ । इति दूरस्थितैरेभिर्निश्चितः मम चामरान् ॥ ८१९ ॥
ततश्च सुलसे तस्मिन् दिशमन्यस्यामगच्छति । कथितं तन्महीभर्तुश्चेष्टितं तैः सविस्मयैः ॥ ८२० ॥
आकार्य भूभुजाऽभाणि सुलसोऽथ ससंभ्रमम् । दृष्ट्वाऽपि किं त्वया भद्र! निधानं जगृहे न तत्?॥ ८२१ ॥
परिग्रहप्रमाणस्य वृत्तान्तेऽथ निवेदिते । अनिच्छन्नपि राज्ञाऽसौ भाण्डागारे नियोजितः ॥ ८२२ ॥
आगादमरचन्द्राख्यसूरिस्तत्र पुरेऽन्यदा । नरेणैकेन सुलसस्याऽऽख्याताऽथ तदागतिः ॥ ८२३ ॥
तेन चाऽऽख्यायि भूपस्य ततस्तौ परिच्छदौ । गत्वा नत्वा च तं सूरिं यथास्थानं निषेदतुः ॥ ८२४ ॥
ततश्च गुरुणा तेन प्रतिबोधविधायिनी । देशना विदधे भव्यमनोवाञ्छितदायिनी ॥ ८२५ ॥
अत्रान्तरे स सुलसः पप्रच्छ भगवन्! कथम् । लब्ध्वा लब्ध्वाऽपि कृच्छ्रान्मे कमला प्रलयं गता?॥ ८२६ ॥
प्रोचे शुभगुरुः सोऽथ चतुर्ज्ञानविभूषितः । प्राप्ता प्राप्ताऽपि यत्ते श्रीर्ययौ तच्छृणु कारणम् ॥ ८२७ ॥
त्वं हि ताम्राकरग्रामे तारचन्द्रोऽभिधानतः । आसीः कौटुम्बिकः पूर्वं दानश्रद्धापरायणः ॥ ८२८ ॥

याचकश्रमणादिभ्यो ददद्दानमसौ क्रमात् । बभूव श्रावकः किंतु मनस्येवमचिन्तयत् ॥ ८२९ ॥
हा मया प्रचुरं दत्तं न दानसमयोऽधुना । अतः परं न दास्यामि दत्तेनाऽपि गुणोऽत्र कः?॥ ८३० ॥
वरं हि बन्दिनां दानं गोत्रख्यातिविधायकम् । दत्तेन किमु साधूनां ये प्रशंसां न कुर्वते ॥ ८३१ ॥
भावैर्मनोगतैरेवं तारचन्द्रोऽन्तरान्तरा । बबन्ध निर्विवेकत्वाद्दृढं कर्मान्तरायकम् ॥ ८३२ ॥
दृष्ट्वा साधून् पुनर्दानश्रद्धा तस्याऽभवद्वरा । एवं चाऽनेकधा दत्तं खंडितं तश्च दुर्धिया ॥ ८३३ ॥
सोऽन्ते समाधिना मृत्वा सौधर्मे त्रिदशोऽभवत् । ततश्च्युत्वा समुत्पन्नः सौम्य त्वं श्रेष्ठिनन्दनः॥८३४ ॥
तद् भो ! दानं मनःशुध्ध्या दातव्यं सुविवेकिभिः। अन्यदप्यखिलं धर्मकृत्यं स्यात् सफलं तया॥ ८३५ ॥
प्रतिबुद्धोऽथ सुलसो जजल्पैवं नृपं प्रति । ग्रहीष्यामि परिव्रज्यां नृनाथ ! विसृजाऽद्य माम् ॥ ८३६ ॥
उवाच राजाऽहमपि प्रतिबुद्धोऽस्मि सुन्दर !। निवेश्य तनयं राज्ये प्रव्रजिष्यामि निश्चितम् ॥ ८३७ ॥
गुरुं नत्वा गृहे गत्वा कृत्वा पुत्रं च पार्थिवम् । तौ राजसुलसौ धन्यौ दीक्षामाददतुस्ततः ॥ ८३८ ॥
चक्रतुस्तौ तपोऽत्युग्रं संवेगपरिभावितौ । उत्पाद्य केवलज्ञानं सुलसस्तु ययौ शिवम् ॥ ८३९ ॥
चक्रायुध महाराज ! पञ्चमाणुव्रते तव । सुलसोऽयं समाख्यात इति शान्तिजिनोऽवदत् ॥ ८४० ॥

॥ इति परिग्रहप्रमाणे सुलसकथा ॥

अणुव्रतानि पञ्चापि कथितानीति ते मया । इतो गुणव्रतानि त्वमाकर्णय महीपते ! ॥ ८४१ ॥

प्रथमं दिग्व्रतं भोगोपभोगव्रतमेव च । अनर्थदण्डश्चेति स्यात्त्रिविधं तद्गुणव्रतम् ॥ ८४२ ॥
यत् पूर्वादिषु काष्ठासु तिर्यगूर्ध्वमधस्तथा । क्रियते परिमाणं तत्स्याद्गुणव्रतमादिमम् ॥ ८४३ ॥
प्राप्नोत्यनेकदुःखानि जीवोऽस्मिन्नकृतावधिः । यथा स्वयंभूदेवाख्यः संप्राप्तो म्लेच्छनीवृतम्[1] ॥ ८४४ ॥
अस्त्यनेककृतावाससंकटं श्रीवशंकटम् । पुरं गङ्गातटं नाम विपक्षाणां महोत्कटम् ॥ ८४५ ॥
तत्राऽपसर्पद् दूतौघैः प्रतिराष्ट्रं नियोजितैः । ज्ञातसर्वनृपोदन्तः सुदन्तः पार्थिवोऽभवत् ॥ ८४६ ॥
तत्र स्वयंभूदेवाख्यो वसति स्म कुटुम्बिकः । कृष्यादिकर्मनिरतः संतोषपरिवर्जितः ॥ ८४७ ॥
निद्राविरामे सोऽन्येद्यू रात्रावेवमचिन्तयत् । इह स्थितस्य मे लाभो न मनोवाञ्छितो भवेत् ॥ ८४८ ॥
ततो देशान्तरे क्वापि गत्वा लक्ष्मीमुपार्ज्य च । सर्वथा पूरयिष्यामि सर्वान्निजमनोरथान् ॥ ८४९ ॥
ततो विधाय सामग्रीं स चचालोत्तरापथम् । ययौ च शनकैर्लक्ष्मीशीर्षके नगरे वरे ॥ ८५० ॥
प्रविश्याऽभ्यन्तरे तत्र व्यवहारं प्रकुर्वतः । तादृग्लाभो भवेत्तस्य यादृक् सृष्टः स्वकर्मणा ॥ ८५१ ॥
अन्यदाऽन्यत्र नगरे स बभ्राम धनाशया । जानाति स्म वराको न लोकरूढमिदं वचः ॥ ८५२ ॥
श्रूयमाणाः शुभा देशा राजानः सेवितास्तथा । सर्वं दूरस्थितं वस्तु स्यात्प्रायो विस्मयावहम् ॥ ८५३ ॥
प्राप्तेन नगरे क्वापि वणिजः केऽपि वीक्षिताः । पृष्टास्तेन च भो ! यूयं कुतो देशात्समागताः ? ॥ ८५४ ॥

---

१. म्लेच्छदेशम् ।

तेऽप्यवोचन् वणिज्येन चिलातविषये वयम् । गत्वोपार्ज्य बहु धनं पुनरत्र समागताः ॥ ८५५ ॥
ततः क्रयाणकं किञ्चिद् गृहीत्वा शम्बलादिकम् । सहितो बहुसार्थेन तं देशं प्रति सोऽचलत् ॥ ८५६ ॥
संप्राप्तश्च महातप्तवालुकाभिधवर्त्मनि । गच्छति स्म तमुल्लंघ्य हिममार्गेऽतिशीतले ॥ ८५७ ॥
ततश्च गिरिमार्गेऽप्यात्यन्तविषमे ययौ । लोभाभिभूतः पुरुषः किं किं तन्न करोति यत् ॥ ८५८ ॥
यावच्चिलातदेशस्य समीपे गतवानसौ । विरोधो म्लेच्छभूपे स्यादन्यभूपैः समं तदा ॥ ८५९ ॥
चिलातदेशं यातीति स सार्थः शिष्टराजभिः । सर्वसारमुपादाय वालितः स्वगृहान् प्रति ॥ ८६० ॥
स्वयंभूदेवस्तद् दृष्टि वञ्चयित्वा कथञ्चन । गतस्तत्र गृहीतश्च भिल्लानां डिम्भरूपकैः ॥ ८६१ ॥
हस्तयोः पादयोर्बद्ध्वा रुधिरेण विलिप्य च । मुच्यते स्माऽटवीमध्ये स तैर्नीत्वा दुरात्मभिः ॥ ८६२ ॥
निपेतुर्मृतकभ्रान्त्या तत्र गृध्रा अनेकशः । तीक्ष्णचञ्चुप्रहारौघैस्ताडयन्ति स्म तं च ते ॥ ८६३ ॥
हत्वा बाणैरथो गृध्रान् सार्थं ते भिल्लनन्दनाः । स्वयंभूमानयन्ति स्म गेहे विगतबन्धनम् ॥ ८६४ ॥
भोजयित्वा च यत्नेन धारयन्ति स्म मन्दिरे । एवं दिने दिने दुःखं दर्शयामासुरस्य ते ॥ ८६५ ॥
अन्यस्मिन् दिवसे यावत्तथा कृत्वा धृतोऽस्ति सः । तावत्तत्राऽऽययौ व्याघ्री नष्टास्ते भिल्लबालकाः ॥८६६॥
व्याघ्र्या चोत्पाट्य नीतोऽसौ स्वापत्यार्थं वनान्तरे।तुत्रोट दंष्ट्रया चाऽस्याः करांघ्र्योस्तस्य बन्धनम् ॥८६७॥
विमुच्य तमथो व्याघ्री बालान्वेषणहेतवे । ययौ वनान्तरे नंष्ट्वा स्वयंभूरपि सत्वरम् ॥ ८६८ ॥

नद्यां प्र(च)क्षालयित्वाऽङ्गं समं सार्थेन केनचित् । दिनैः कतिपयैरागात् स्वगेहमिति चिन्तयन् ॥ ८६९ ॥
प्रभूतधनलोभेन भ्रान्तोऽसि किल भूतले । भोजनस्याऽपि मन्देहो बभूव तत्र जीव रे ! ॥ ८७० ॥
जीवन् गेहं यदाऽऽगास्त्वं तल्लाभमवबुध्यताम् । मूत्ररोधे तु संजाते किं सौभाग्येन देहिनाम् ? ॥ ८७१ ॥
विरक्तः सोऽथ श्रामण्यं जग्राह मुनिसन्निधौ । विशुद्धं पालयित्वा तन्मृत्वाऽथ त्रिदिवं ययौ ॥ ८७२ ॥

॥ इति दिग्व्रते स्वयंभूदेवकथा ॥

भोगोपभोगयोर्मानं द्वितीयं स्याद् गुणव्रतम् । भोजने कर्मतश्चेति तद् द्विधा परिकीर्तितम् ॥ ८७३ ॥
भोजनेऽनन्तकायादि न भोक्तव्यं विवेकिना । कर्मतः खरकर्माणि सर्वाण्यपि विवर्जयेत् ॥ ८७४ ॥
सचित्तं तेन संमिश्रं दुःपक्वापक्वमेव च । तुच्छौषधिश्च पञ्चातिचारा भोजनतस्त्विमे ॥ ८७५ ॥
कर्मतश्च पञ्चदशातिचारा आगमोदिताः । ज्ञेया अङ्गारकर्माद्याश्चक्रायुध नृप ! त्वया ॥ ८७६ ॥
उपभोगेऽत्र दृष्टान्तो जितशत्रुर्महीपतिः । विज्ञेयः परिभोगे च ब्राह्मणी नित्यमण्डिता ॥ ८७७ ॥
इहैव भरतक्षेत्रे वसन्तपुरपत्तने । जितशत्रुरिति ख्यातो बभूव पृथिवीपतिः ॥ ८७८ ॥
सुबुद्धिर्नाम तन्मन्त्री बुद्धिनिर्जितवाक्पतिः । अत्यन्तवल्लभस्तस्य बभूव पृथिवीपतेः ॥ ८७९ ॥
विपरीततुरङ्गाभ्यामन्येद्युरपहृत्य तौ । नीतौ निर्मानुषाटव्यां भ्रान्तौ चाऽत्र दिनत्रयम् ॥ ८८० ॥
तत्पृष्ठलग्नसैन्येन तौ लब्धौ राजमन्त्रिणौ । पुनर्नगरमानीतौ चतुर्थेऽह्नि बुभुक्षितौ ॥ ८८१ ॥

ततः क्षुधातुरो राजा सूपकारैरकारयत् । जघन्यमध्यमोत्कृष्टां सर्वां रसवतीं क्षणात ॥ ८८२ ॥
नटप्रेक्षणदृष्टान्तं भावयन्निजमानसे । आदौ जघन्यमाहारं बुभुजे स महीपतिः ॥ ८८३ ॥
ततश्च मध्यमोत्कृष्टमाकण्ठं भुक्तवानसौ । तथा यथोदरे तस्य नोद्गारस्थानमप्यभूत् ॥ ८८४ ॥
राज्ञो विसूचिका तस्याऽऽहारेणाऽजीर्यताऽभवत्। मृत्वा तत्पीडया चाऽसौ व्यन्तरः समजायत॥ ८८५ ॥
उपभोगानिवृत्तानामयं दोषो निवेदितः । परिभोगानिवृत्तौ तु दोषः सम्प्रति कथ्यते ॥ ८८६ ॥
इहाऽऽसीद्वर्धनग्रामे वेदाभ्यासरतोऽनिशम् । अग्निदेवाभिधो विप्रः सुनन्दा तस्य गेहिनी ॥ ८८७ ॥
गौरव्यो ग्रामलोकस्य सोऽत्यन्तं द्विजपुङ्गवः । लभमानस्ततो वित्तमीश्वरः समभूत् क्रमात् ॥ ८८८ ॥
कारितं तेन भार्यायाः सर्वाङ्गाभरणं वरम् । तदङ्गलग्नं सा नित्यं बभाराभारमानिनी ॥ ८८९ ॥
पत्याऽथ भणिताऽन्येद्युर्न त्वयेदं विभूषणम् । परिधेयं विना पर्व धार्यं गुप्तं हि सर्वथा ॥ ८९० ॥
किञ्चित्प्रत्यन्तवासित्वाद्यदा धाटी पतिष्यति । तदाऽनर्थोऽमुना गात्रे भविष्यति तव प्रिये ! ॥ ८९१ ॥
साऽप्यवोचत यद्येतद्देहे न परिधीयते । ततः कार्यं किमेतेन तद्वनं यद्विभुज्यते ॥ ८९२ ॥
समेष्यति यदा धाटी तदैवाऽहमिदं क्षणात । अङ्गादुत्तारयिष्यामीत्युक्ते तूष्णीं व्यधाद् द्विजः॥ ८९३ ॥
धाटी प्रचण्डभिल्लानां तत्र ग्रामेऽन्यदाऽपतत् । दैवयोगेन सा पूर्वं विप्रस्याऽस्याऽगमद् गृहे ॥ ८९४ ॥
पीवरत्वात्तनोस्तस्यास्तदादातुमनीश्वराः । हस्तपादादितद्देहच्छेदं चक्रुर्मलिम्लुचाः ॥ ८९५ ॥

तद्भूषणान्युपादाय जग्मुस्ते स्थानमात्मनः । आर्त्तध्यानवती सा तु विपद्य नरकं ययौ ॥ ८९६ ॥

॥ इत्युपभोगपरिभोगयोः कथा(थे) ॥

अनर्थदण्डविरतिः स्यात्तृतीयं गुणव्रतम् । भेदास्तस्येह चत्वारो विज्ञेयाः कीर्तयामि तान् ॥ ८९७ ॥
तत्र स्यादपध्यानं स भेदः प्रथमस्तथा । प्रमादाचरितं नाम भवेद् भेदो द्वितीयकः ॥ ८९८ ॥
हिंस्रप्रदानसंज्ञश्च तृतीयो भेद उच्यते । तुर्यः पापोपदेशश्च भेदोऽनर्थस्य भाषितः ॥ ८९९ ॥
अत्रोदाहरणं राजन्! शृणु त्वं कीर्तयाम्यहम् । अस्तीह धातकीखण्डभरते रैपुरं पुरम् ॥ ९०० ॥
यथार्थनामा तत्रा भूद्रिपुमर्दनभूपतिः । समृद्धदत्तसंज्ञश्च विख्यातोऽत्र कुटुम्बिकः ॥ ९०१ ॥
सुप्तजागरितोऽन्येद्युः स एवं पर्यचिन्तयत । यदि मे जायते लक्ष्मीस्ततो राजा भवाम्यहम् ॥ ९०२ ॥
षट्खण्डं भरतक्षेत्रं साधयिष्याम्यहं ततः । वैताढ्यवासिनो विद्यां दास्यन्ति मम खेचराः ॥ ९०३ ॥
ततो विद्याबलेनाऽहं गमिष्यामि विहायसा । इत्यावेशात्स शय्याया उत्पपाताऽम्बरं प्रति ॥ ९०४ ॥
पपात सहसा पृथ्व्यां पीडितश्च तनौ दृढम् । क्रन्दन्नुत्पाट्य शय्यायां प्रक्षिप्तो गृहमानुषैः ॥ ९०५ ॥
वेदनोपशमोऽस्याऽभूत् कष्टेन महता ततः । जातः स्वस्थशरीरश्च स स्वगेहमपालयत् ॥ ९०६ ॥
इतोऽस्य विद्यते खड्गश्चारुलोहविनिर्मितः । क्रीतः प्रभूतद्रव्येण विदितो विषयेऽखिले ॥ ९०७ ॥

१. देशे ।

प्रमादाद्विस्मृतोऽन्येद्युः सोऽसिरस्य गृहाजिरे । रात्रौ गृहान्तः सुप्तस्य स्मृतश्च प्रहरद्वये ॥ ९०८ ॥
परं प्रमाददोषेण नाऽऽनीतः स गृहान्तरे । कोऽग्रहीष्यत्यमुमिति ध्यायन्निद्रामवाप सः ॥ ९०९ ॥
अत्रान्तरे कथमपि प्रविष्टा दुष्टचेष्टिताः । रजन्याश्चरमे यामे तस्करास्तस्य मन्दिरे ॥ ९१० ॥
तं गृहीत्वा ययुस्तेऽथ तद्बलेन दुराशयाः । कथश्चिज्जगृहुर्वन्दे नगरश्रेष्ठिनः सुतम् ॥ ९११ ॥
राजलोकैर्हताश्चाग हतः श्रेष्ठिसुतस्तु तैः । खड्गः समृद्धदत्तस्य ढौकितश्च महीपतेः ॥ ९१२ ॥
क्रुद्धेन भूभुजाऽऽकार्य प्रोक्तोऽसौ किमरे त्वया । अकारि पापकर्मेदं कृपाणोऽयं यतस्तव ॥ ९१३ ॥
ततश्च कथिता तेन खड्गविस्मृतिजा कथा । तथापि दण्डितो राज्ञाऽनर्थदण्डे कृते सकः ॥ ९१४ ॥
सोऽन्येद्युरर्पयामास याचितः सहसा विषम् । अरग्ज्ञाय कस्याऽपि वैरिणः पृथिवीपतेः ॥ ९१५ ॥
मरोऽन्तस्तेन तत् क्षिप्तं घातनार्थं धरापतेः । पीते तस्मिन् जले केचिन्मंगाप्ता निधनं जनाः॥ ९१६ ॥
किमेतदिति भूपस्य जिज्ञासोर्मूलशुद्धिना । केनचित् कथिता पुंसा प्रवृत्तिर्विषदानजा ॥ ९१७ ॥
ततस्तेन नरेन्द्रेण स्मरता नीतिमात्मनः । पुनः समृद्धदत्तः सोऽन्यायकारीति दण्डितः ॥ ९१८ ॥
ग्रामपर्षद्युपविष्टो यावदासीत्सकोऽन्यदा । तावत्कौटुम्बिकः कश्चित्तत्राऽगाद् वृषयुग्मभृत् ॥ ९१९ ॥
समृद्धस्तमथाऽप्राक्षीदेतौ वत्सतरौ त्वया । किं नु भो दमितौ नो वा नेति प्रोवाच सोऽपि तम् ॥ ९२० ॥
पुनः समृद्धोऽवादीद्भाराराघातादिभिस्त्वया । दमितव्यौ वृषावेतौ भूत्वा निर्दयचेतसा ॥ ९२१ ॥

श्रुत्वा तन्निष्ठुरं वाक्यं तस्मै चुकुपतुर्वृषौ । प्रायेण देहिनां दुःखं नोच्यमानमपि प्रियम् ॥ ९२२ ॥
ततस्तेन बलीवर्दावन्येद्युर्वाहितौ तथा । बभूव सुकुमारत्वादन्तत्रोटो यथा तयोः ॥ ९२३ ॥
क्षपयित्वाऽऽत्मदुष्कर्माकामनिर्जरया शुभौ । व्यन्तरौ समजायेतामनड्वाहौ विपद्य तौ ॥ ९२४ ॥
ज्ञात्वा समृद्धदत्तं तमात्मनोऽहितकारकम् । आगत्य चक्रतुस्तस्य शरीरे विविधा व्यथाः ॥ ९२५ ॥
जजल्पतुश्च रे पापोपदेशो वृषभौ प्रति । प्रदत्तो यस्त्वया तस्य फलं भुंक्ष्वाऽधुनाऽप्यदः ॥ ९२६ ॥
स्वस्य व्यन्तरतामस्य कथयामासतुश्च तौ । ततस्तौ क्षमयामास मप्रणाममभात्र पि ॥ ९२७ ॥
कोपाटोपं परित्यज्य तत्पीडामपहृत्य च । स्वस्थानं व्यन्तरावेतौ जग्मतुः सोऽप्यचिन्तयत् ॥ ९२८ ॥
रे जीवाऽनर्थदण्डोऽयं चतुर्धाऽपि कृतस्त्वया । प्रत्येकशोऽपि संप्राप्तं दुःखं तज्जनितं तथा ॥ ९२९ ॥
ततः पार्श्वे मुनीन्द्राणां भूत्वाऽसौ श्राद्धपुङ्गवः । प्रायेण च विपद्याऽन्ते कल्पेऽभूत् प्रथमे सुरः ॥ ९३० ॥
ततश्च्युत्वा मनुष्यत्वं संप्राप्य सुकुले क्रमात् । जीवः समृद्धदत्तस्य लप्स्यते निर्वृतेः सुखम् ॥ ९३१ ॥

॥ इत्यनर्थदण्डव्रते समृद्धदत्तकथा ॥

इतः शिक्षाव्रतानि त्वं शृणु चत्वारि भूपते ! । तेषां च मध्ये प्रथमं भवेत्सामायिकव्रतम् ॥ ९३२ ॥
स्थावरत्रसजीवेषु यत्र भावो भवेत्समः । ज्ञेयं सामायिकं तद्धोः ! कर्तव्यं च पुनः पुनः ॥ ९३३ ॥

---
१ दन्तत्रोटो यथा इति साधुः । २ अनशनेन ।

कृते सामायिके यस्माच्छ्रावकः साधुवद्भवेत् । तदेतन्निर्जरामूलं विधातव्यमनेकशः ॥ ९३४ ॥
विशुद्धे क्रियमाणेऽस्मिन् व्रते निश्चलचेतसा । जायते भव्यजीवानां सिंहश्रावकवत्सुखम् ॥ ९३५ ॥
कोऽसौ च श्रावकः सिंह इति पृष्टे सभासदैः । तत्कथां कथयामास ततः शान्तिजिनेश्वरः ॥ ९३६ ॥
इहाऽऽसीद्भरतक्षेत्रे रमणीयाभिधे पुरे । शूरो हेमाङ्गदो राजा हेमश्रीस्तस्य वल्लभा ॥ ९३७ ॥
श्रावको जिनदेवाख्यो जिनदासीति तत्प्रिया । तत्पुत्रः सिंहनामाऽभूत्सुश्रावकधुरन्धरः ॥ ॥ ९३८ ॥
सामायिकं सुविधिना गृहीत्वाऽसौ सुनिश्चितः । प्रतिक्रमणकं चक्रे सन्ध्ययोरुभयोरपि ॥ ९३९ ॥
सोऽन्यदा सह सार्थेन द्रव्योपार्जनहेतवे । क्रयाणकान्युपादाय ययावुत्तरेनीवृतम् ॥ ९४० ॥
आवासितोऽटवीमध्ये स सार्थो निम्नगातटे । तत्र सामायिकं सिंहो जग्राह श्रावकाग्रणीः ॥ ९४१ ॥
अत्रान्तरे च बहुशस्तत्राऽऽगान्मशकव्रजः । ततश्च तन्निरासार्थं धूमस्तोमं व्यधाज्जनः ॥ ९४२ ॥
स तु सिंहो महासत्त्वो मशकानां परीषहम् । मेरुवन्निष्प्रकम्पाङ्गः सहते स्म समाहितः ॥ ९४३ ॥
क्षणाद्दक्षिणवातेन प्रेरिता मशका ययुः । गतोपसर्गः सिंहोऽपि सामायिकमपारयत् ॥ ९४४ ॥
जातं मशकदूनं तद्देहं शोफेन दूषितम् । कियद्भिर्वासरैस्तच्च सोल्लाघमभवत् पुनः ॥ ९४५ ॥
ततः क्रमेण गत्वाऽसौ वसन्तपुरपत्तने । क्रयाणकानि विक्रीय लाभं संप्राप्य चोत्तमम् ॥ ९४६ ॥

१ उत्तरदेशम् ।

वलित्वाऽऽगाम्निजं गेहं तत्र धर्मपरायणः। सप्तक्षेत्र्यां वपन् वित्तं गृहवासमपालयत् ॥ ९४७ ॥
संलेखनां विधायाऽन्तेऽनशनेन विपद्य सः। दिवं प्राप्तस्ततश्च्युत्वा क्रमान्मुक्तिं गमिष्यति ॥ ९४८ ॥

॥ इति सामायिके सिंहश्रावककथा ॥

शिक्षाव्रतं द्वितीयं तु भवेद्देशावकाशिकम् । दिग्व्रते परिमाणस्य संक्षेपकरणादिह ॥ ९४९ ॥
सर्वव्रतानामथवा संक्षेपोऽत्र विधीयते । आनयनप्रयोगाद्याश्चाऽतिचारा इहोदिताः ॥ ९५० ॥
एतदपि व्रतं शुद्धं विहितं सफलं भवेत्। इहलोके परलोके गङ्गदत्तगृहस्थवत् ॥ ९५१ ॥
अत्रैव भरतक्षेत्रे पुरे शङ्खपुराभिधे। वसति स्म भुवि ख्यातो गङ्गदत्ताभिधो वणिक् ॥ ९५२ ॥
श्राद्धधर्मोऽन्यदा तेन गृहीतो गुरुसन्निधौ । तं द्वादशविधमथो पालयामास सोऽन्वहम् ॥ ९५३ ॥
देशावकाशिकं सोऽथाऽन्यदा जग्राह शुद्धधीः। न मयाऽद्य विना चैत्यं निर्गन्तव्यं गृहादिति ॥ ९५४ ॥
गृहस्थितोऽसौ मित्रेण वणिजाऽऽगत्य जल्पितः। यतो बहिः पुराद्य सार्थोऽस्ति भ्रातरागतः ॥ ९५५ ॥
तदेहि त्वरितं तत्र महालाभविधायकम् । येनाऽऽश्वामेव गृह्णीवो महार्घ्यं पणितं बहु ॥ ९५६ ॥
गङ्गदत्तोऽब्रवीत्तत्र नैष्याम्यद्य यतो मया। गृहीतमस्ति देशावकाशिकं स्वगृहस्थितिः ॥ ९५७ ॥
प्रत्यूचेऽसौ बहुधनलाभं गृह्णासि नाऽद्य किम् ?। अन्यस्मिन्नपि दिवसे करिष्यसि पुनर्व्रतम् ॥ ९५८ ॥
पुनर्गङ्गोऽवदद्यत्र धर्महानिर्भवेत् सखे!। लाभेनाऽपि कृतं तेन बह्वारंभविधायिना ॥ ९५९ ॥

ज्ञात्वा विनिश्चयं तस्य वयस्यः स गृहं गतः । प्रययौ गङ्गदत्तश्च सार्थमध्ये परेद्यवि ॥ ९६० ॥
दृष्टं क्रयाणकं तेन दैवादक्षतमेव तत् । विक्रीतं च तदादाय महालाभो बभूव च ॥ ९६१ ॥
सोऽथ दध्यौ प्रभावोऽयं धर्मस्यैव ततो मया । विनियोज्यमिदं वित्तं ध्रुवं देवगृहादिषु ॥ ९६२ ॥
विचिन्त्यैवमथो तेन जिनपूजाः प्रवर्तिताः । सकलस्यापि संघस्य दत्तं दानं च भक्तितः ॥ ९६३ ॥
एवं धर्मोद्यमं कृत्वा मृत्वाऽन्तेऽनशनादिना । स बभूवाऽमरः पश्चात्क्रमयोगेन सेत्स्यति ॥ ९६४ ॥

॥ इति देशावकाशिके गङ्गदत्तकथा ॥

देशावकाशिकमिदं सदृष्टांतं निवेदितम् । कथयामि तवेदानीममलं पौषधव्रतम् ॥ ९६५ ॥
क्रियते यच्चतुष्पर्व्यां धर्मे पोषं दधाति यः । स भवेत् पौषधो राजंश्चतुर्धा परिकीर्तितः ॥ ९६६ ॥
आहारपौषधो द्वेधा सर्वतो देशतस्तथा । आद्यश्चतुर्विधाहारप्रत्याख्याने प्रजायते ॥ ९६७ ॥
त्रिधाऽऽहारोपवासे वाऽऽचामाम्लादितपस्सु वा । प्रत्याख्याने समस्तेऽपि देशतः पौषधो भवेत् ॥ ९६८ ॥
द्वितीयो देहसत्काराभिधो भेदोऽत्र कीर्तितः । सर्वशारीरसत्कारवर्जनात् सर्वतो भवेत् ॥ ९६९ ॥
विज्ञातव्यो देशतश्च सोऽस्नानकरणादिकः । तृतीयो ब्रह्मचर्यस्य पौषधो द्विविधश्च सः ॥ ९७० ॥
सर्वतः सर्वथा स्त्रीणां करस्पर्शादिवर्जनम् । देशतश्च पुनस्तासां संभोगस्यैव वर्जनम् ॥ ९७१ ॥
अव्यापारश्चतुर्थः स्यात् पौषधः स च सर्वतः । सर्वव्यापारहानिः स्यादेकत्यागे तु देशतः ॥ ९७२ ॥

दृष्टान्तो जिनचन्द्रस्य कथ्यते पौषधव्रते । अनन्तवीर्यो राजाऽभूत् सुप्रतिष्ठाभिधे पुरे ॥ ९७३ ॥
श्रावको जिनचन्द्रश्च जिनधर्मे सुनिश्चलः । बभूव गेहिनी तस्य सुन्दरी सुन्दराकृतिः ॥ ९७४ ॥
जगृहे पौषधं तेन क्वापि पर्वदिनेऽन्यदा । मध्ये पौषधशालायाः प्रविश्य शुभचेतसा ॥ ९७५ ॥
अत्रान्तरे सहस्राक्षः प्राशंसत्तं सभान्तरे । सुरैरपि न चाल्योऽयं वर्तते पौषधादिति ॥ ९७६ ॥
तदाकर्ण्यैकगीर्वाणः कर्तुं तद्वाक्यमन्यथा । तत्समीपमुपागत्याऽकाले सूर्योदयं व्यधात् ॥ ९७७ ॥
कृत्वा तद्भगिनीरूपमूचे भ्रातः ! कृते तव । आनीतमस्त्यदो भक्ष्यं तत्त्वं पारणकं कुरु ॥ ९७८ ॥
अनुष्ठानादिकरणेऽनुमानेन विवेद सः । कृता देवेन केनाऽपि मायेयं परिभाव्यते ॥ ९७९ ॥
एवं विचिन्त्य मनसा सोऽस्थान्मौनपरायणः । मित्ररूपी सुरः सोऽस्य विलेपनमढौकयत् ॥ ९८० ॥
पुष्पाणि च सुगन्धीनि गृहाणेत्यमुनोदितः । न किञ्चिदपि जग्राह श्राद्धोऽसौ नाऽप्यभाषत ॥ ९८१ ॥
पुंसैकेन नीयमानां ततोऽसौ तस्य गेहिनीम् । त्रिदशो दर्शयामास तथाऽप्येष चुकोप न ॥ ९८२ ॥
अनुकूलोपसर्गांस्तान् सुरः कृत्वैवमादिकान् । ततः सिंहपिशाचादीन् प्रतिकूलान् व्यधात्ततः ॥ ९८३ ॥
न चुक्षोभ तथाऽप्येष दिव्यरूपोऽथ सोऽमरः । शंसन् शक्रप्रशंसां तां किं करोमीत्यभाषत ॥ ९८४ ॥
निरीहश्रावकस्तस्मान्न किञ्चिदप्ययाचत । देवोऽवादीन्न मोघं च जायते मम दर्शनम् ॥ ९८५ ॥
जिनचन्द्रोऽवदत्तर्हि सुरश्रेष्ठ ! तथा कुरु । यथाऽत्र जायते लोके शासनस्य प्रभावना ॥ ९८६ ॥

प्रतिपद्याऽथ तद्वाक्यं स देवो जिनमन्दिरे । परिवारयुतो गत्वा व्यधादष्टाह्निकोत्सवम् ॥ ९८७ ॥
सुगन्धकुसुमैः पूजां विधाय च जिनेशितुः । ऊर्ध्वीकृतभुजद्वन्द्वो नृत्यं चक्रे पुरोऽस्य सः ॥ ९८८ ॥
नृत्यन्तं त्रिदशं दृष्ट्वा जनः सर्वो विसिष्मिये । जजल्प चाऽहो ! माहात्म्यं जिनधर्मस्य भूतले ॥ ९८९ ॥
देवोऽप्युवाच कल्पद्रुचिन्तामणिसमप्रभः । जना ! जिनेन्द्रधर्मोऽयं ध्रुवं स्वर्गापवर्गदः ॥ ९९० ॥
तदत्र सर्वथा यत्नो विधातव्यो सुखैषिभिः । लोकोऽपि हि तथा चक्रे तद्भक्तिप्रीतमानसः ॥ ९९१ ॥
एवं जिनेन्द्रधर्मस्य सुरः कृत्वा प्रभावनाम् । आपृच्छ्य जिनचन्द्रं च सौधर्ममगमत् पुनः ॥ ९९२ ॥
स एष जिनचन्द्रस्ते कथितः पौषधव्रते । नाऽचाल्यत मनो यस्य धर्मध्यानात्सुरैरपि ॥ ९९३ ॥

॥ इति पौषधव्रते जिनचन्द्रकथा ॥

आतिथीनां संविभागो विज्ञेयं द्वादशं व्रतम् । तिथिपर्वोत्सवगणस्त्यक्तो येनेह सोऽतिथिः ॥ ९९४ ॥
न्यायागतैः कल्पनीयैः सुद्रव्यैरोदनादिभिः । देशकालोचितैः श्रद्धासत्कारविधिपूर्वकम् ॥ ९९५ ॥
संविभागोऽनगाराणां भक्त्या धर्मधियाऽत्र यत् । भवेदतिथिदानं तन्महापुण्यनिबन्धनम् ॥ ९९६ ॥ ( युग्मम् )
आतिथीनां दानमेतत्सुखहेतुः प्रजायते । शूरपालनरेन्द्रस्य दत्तं पूर्वभवे यथा ॥ ९९७ ॥
चक्रायुधनृपेणाऽथ पृष्टः शान्तिजिनेश्वरः । क एष शूरपालाख्यो युष्माभिः कथितः प्रभो ! ॥ ९९८ ॥
सर्वसाधारणेनाऽथ वचसा मेघनीरवत् । तत्कथां कथयामास शान्तिनाथो जिनेश्वरः ॥ ९९९ ॥

अस्तीह भरते रम्यं श्रीकाञ्चनपुरं पुरम् । ऋद्धयाऽमरपुरप्रख्यं विख्यातमवनीतले ॥ १००० ॥
जितारिर्नाम भूपालो मगलोज्ज्वलसद्यशाः । बभूव विक्रमी तत्र तस्य राज्ञी सुलोचना ॥ १००१ ॥
महीपालोऽभिधानेन क्षत्रजातिः कृषीवलः । अवात्सीन्नगरे तत्र भार्या तस्य च धारिणी ॥ १००२ ॥
समजायन्त धरणीधरः कीर्तिधरस्तथा । पृथ्वीपालः शूरपाल इति पुत्रास्तयोः क्रमात् ॥ १००३ ॥
चन्द्रमती कीर्तिमती शान्तिशीलमतीद्वयम् । इत्यभूवन् प्रियास्तेषां चतस्रः क्रमयोगतः ॥ १००४ ॥
महीपालसुतास्तेऽथ वर्षाकालेऽन्यदा ययुः । कर्म कर्तुं निजक्षेत्रे समुत्थाय निशात्यये ॥ १००५ ॥
पश्चात्तेषां प्रियास्तत्र यावत् प्रचलितास्तदा । अतनिष्ट घनो वृष्टिं विद्युद्गर्जारवोत्तरः ॥ १००६ ॥
प्रत्यासन्नवटेऽथैतास्तत्पयो वञ्चितुं गताः । तस्यैकदेशमाश्रित्य तस्थुश्च निरुपद्रवाः ॥ १००७ ॥
तत्पृष्ठे श्वशुरस्तामामागात् सोऽपि भयादपाम्[1] । द्वितीयं देशमाश्रित्य तस्थौ तस्यैव शाखिनः ॥ १००८ ॥
अजानन्त्यो महीपालमेकान्तत्वादशङ्किताः । स्वेच्छालापममुं चक्रुश्चन्द्रमत्यादयोऽथ ताः ॥ १००९ ॥
शुश्राव श्वशुरोऽप्यासामालापं निभृतस्थितः । ऊचेऽथ चन्द्रमत्येवं ब्रूत स्वरुचितं हलाः ! ॥ १०१० ॥
शीलमत्यवदत् कर्णा वृतेरपि भवन्ति यत । स्वभावकथनं तन्न युक्तमत्रेति मे मतम् ॥ १०११ ॥
इतरा स्माह मा भैस्त्वं यतो नास्त्यत्र कश्चन । मोचे तर्हि क्रमेणोच्या सर्वाभिः स्वस्वकामना ॥ १०१२ ॥

---

१ जलानाम् ।

चन्द्रमत्यवदत्तावत् सद्यः सिद्धं घृतान्वितम् । मम क्षिप्रचटं(टीं) भोक्तुं समीहा वर्तते हला: ! ॥ १०१३ ॥
यद्वा पर्युषितां रब्बां युक्तां दध्ना घृतेन वा । संसक्ताम्रफलकच्चूरककचरिकान्विताम् ॥ १०१४ ॥
अवोचत् कीर्तिमत्येवं लभ्यते चेन्मनःप्रियम् । ततः खण्डघृतयुता क्षैरेयी रोचते मम ॥ १०१५ ॥
सघृतौ शालिसूपौ वा तीक्ष्णाम्लव्यञ्जनानि च । ऊचे शान्तिमती वाञ्छा मदीया श्रूयतामितः॥१०१६॥
सुस्वादमोदकादीनि पक्वान्नानि प्रियाणि मे । मंडिकेड्डरिकादीनि भक्ष्याणि च विशेषतः ॥ १०१७ ॥
शीलवत्यब्रवीन्नाऽन्नं स्पृहयालुरहं यतः । याचते जठरं पूरं न क्रूरमिति लोकगीः ॥ १०१८ ॥
जानाम्यदो यदि स्नाता विलिप्ता कुङ्कुमादिभिः । परिधाय सुवस्त्राणि भूषणैर्भूपिता सती ॥ १०१९ ॥
श्वशुरज्येष्ठभर्तृणां प्रयच्छामि सुभोजनम् । गृहलोकाय सर्वस्मै दीनादिभ्यो ददामि च ॥ १०२० ॥
शेषं कदशनं किञ्चिद्भोजनं प्रकरोमि चेत् । ततो मे मनसो नित्यं निवृत्तिः संप्रजायते ॥ १०२१ ॥
एवं स्वकीयाभिप्राये शीलमत्या निवेदिते । जजल्पुरन्याः स्वेच्छेयं घटमाना न तात्त्विकी ॥ १०२२ ॥
कोटुम्बिकानां गेहे यदशनाद्यपि दुर्लभम् । सुवस्त्राभरणादीनामुत्सर्गस्य च का कथा ? ॥ १०२३ ॥
तासामेवं वदन्तीनां वृष्टिर्विरमति स्म सा । ततस्ताः प्रययुः क्षेत्रे महीपालोऽप्यचिन्तयत् ॥ १०२४ ॥
पश्याऽहो ! भोजनस्याऽर्थे ताम्यन्त्येवं मम स्नुषाः । नूनं भक्तमपि श्वश्रूर्नैतासां संप्रयच्छति ॥ १०२५ ॥
ततो गत्वा गृहेऽद्याऽहं तर्जयित्वा स्वगेहिनीम् । एतासां पूरयिष्यामि तिसृणामपि चिन्तितम् ॥ १०२६ ॥

असमञ्जसभाषिण्यास्तूर्यवध्वाः परं मया । पूरणीया कदशनाहारवाञ्छैव केवलम् ॥ १०२७ ॥
गेहे गत्वा ततस्तेन कथयित्वा वधूकथाम् । प्रोक्ता भार्येप्सिताहारो वधूभ्यो देय इत्यलम् ॥ १०२८ ॥
इत्यादिश्य महीपालोऽप्यगात् क्षेत्रे ततश्च तत् । सर्वं भोजनवेलायां गृहमागात् कुटुम्बकम् ॥१०२९॥
भर्तारं भोजयित्वाऽथ तनयानपि धारिणी । पत्यादिष्टरसवत्या भोजयामास ताः स्नुषाः ॥ १०३० ॥
अन्योऽन्यं वीक्ष्य वक्त्राणि चिन्तयन्ति स्म ता इति । केनाऽपि कारणेनाऽद्य जातं नो मन्त्रिताशनम्॥१०३१॥
एकस्थाननिविष्टायाः किमेतस्याः कुभोजनम् । दत्तमित्यादि तास्तिस्रश्चिन्तयन्त्योऽत्र जेमिताः॥१०३२॥
शीलमत्यपि दध्यौ किं ममाऽगौरवभोजनम् । दीयतेऽद्य किमु मया मन्दिरेऽत्र विनाशितम् ॥ १०३३ ॥
भुक्त्वा स्नुषाश्चतस्रोऽपि ताः क्षेत्रे चलिताः पुनः । पुनरेव वदन्ति स्म शेषाः शीलमतीमिति ॥१०३४॥
हला ! ह्यश्चिन्तितः सोऽद्य संपन्नो नो मनोरथः । त्वयाऽपि चिन्तितं यादृक् तादृग्लब्धं हि भोजनम्॥१०३५॥
फलं चिन्तानुरूपं स्यात् प्रायः पुण्यवतामपि । मनोरथोऽपि नो तुच्छस्ततः कार्यो मनीषिणा ॥१०३६॥
साऽप्यवोचत् किमनया भोजनस्येच्छया यतः । भुक्तं सारमसारं वा तुल्यं स्यादुदरे गतम् ॥ १०३७ ॥
मनोऽभिरुचितं कार्यं यदा संपत्स्यते मम । तदा कृतार्थमात्मानं गणयिष्यामि निश्चितम् ॥ १०३८ ॥
अभीष्टभोजनप्राप्त्या नित्यं साशङ्कमानसाः । तिस्रो वधूटिकाः श्वश्रूं पृच्छन्ति स्मैवमन्यदा ॥ १०३९ ॥
किमम्ब ! भोजनं फल्गु शीलमत्याः प्रदीयते । किं वाऽस्माकं प्रतिदिनं तद्धि प्राघुर्णकोचितम्॥ १०४० ॥

ततस्तया समाख्यातं तासां तन्मन्त्रणादिकम् । तामिश्च शीलमत्यास्तत्साऽभून्म्लानमुखी क्षणात्॥ १०४१ ॥
पृष्टा सा शूरपालेन रात्रावेकान्तगाऽन्यदा । प्रिये ! प्रसन्नवक्त्राऽपि किमुद्विग्नेव दृश्यसे ? ॥ १०४२ ॥
किं वा तेऽवज्ञया माता भोजनं संप्रयच्छति ?। अकार्यविनयः कश्चित्त्वया किं वा विनाशितम् ? ॥ १०४३ ॥
न गोप्यमस्ति ते किञ्चिदित्युक्ताऽथ तयाऽखिला । स्ववार्ता कथिता तस्याऽभिप्रेतकथनादिका॥ १०४४ ॥
सोऽथ दध्यावहो तातामबयोः पश्यत मूर्खताम् । परिभूतं कुबुद्धिभ्यां याभ्यां स्त्रीरत्नमीदृशम् ॥ १०४५ ॥
अहो ! अस्याः प्रियाया मे सुप्रशस्यो मनोरथः । मध्ये नारीजनस्यैषा भविष्यत्युत्तमा खलु ॥ १०४६ ॥
ततो देशान्तरे क्वापि गत्वा कर्म करोमि तत् । येनाऽस्याः पूर्यते सर्वं सुगेहिन्या स्ववाञ्छितम् ॥ १०४७ ॥
विचिन्त्यैवमथो पृष्टा गत्यर्थं तेन तत्र सा । मोद्विग्नचिता भावीस्त्वं आश्वेष्यामीति जल्पिता ॥ १०४८ ॥
वेणीबन्धं तथैतस्याः परिधानं नियम्य च । विधाय स स्वपाणिभ्यां पुनरेवमभाषत ॥ १०४९ ॥
वेणीदण्डस्य मोक्षोऽस्य कार्यो मय्यागते प्रिये । मद्वदुत्तारणीयोऽयं कञ्चुकोऽपि न वक्षमः ॥ १०५० ॥
एवमाभाष्य पत्नीं स्वां शूरपालः स्वमन्दिरात् । खड्गमहायो निःसृत्य चचालैकदिशं श्रितः ॥ १०५१ ॥
तत्प्रियाऽपि क्षणं हर्षविषादाभ्यां समाकुला । स्थित्वा पुनर्लगति स्म स्वोचिते गृहकर्मणि ॥ १०५२ ॥
शूरपालमपश्यन्तो महीपालादयोऽथ ते । पप्रच्छुस्तत्प्रियां शुद्धिं न जानामीति साऽब्रवत् ॥ १०५३ ॥

---
१ भूयास्त्वं इति साधु ।

तत्प्रवृत्तिमजानाना मन्त्रयन्ति स्म ते मिथः। पराभूतः स केनाऽपि ययौ निःसृत्य मन्दिरात्॥ १०५४ ॥
जगदुस्तनयास्तातं नाऽस्मन्मध्यात्स केनचित्। निरूपमूचेऽनिष्टः स्यात् प्रायेण न कनिष्ठकः ॥ १०५५ ॥
पुनः पृष्टा वधूटी तैः किं भद्रे! त्वयका सह । रोपस्य कारणं किञ्चिन्न जातं दयितस्य ते ॥ १०५६ ॥
सोचे सार्धं न मे भर्त्रा रोपस्थानं किमप्यभूत्। किं त्वयं वेणिदण्डो मे कृतस्तेन स्वयं निशि ॥ १०५७ ॥
इदं चाऽभाणि मोच्योऽयं स्वहस्तेन मया प्रिये!। एतदेव हि जानामि तत्स्वरूपं हि नाऽपरम्॥ १०५८ ॥
त्रयोऽपि चिन्तयामासुर्भ्रातरस्ते यदन्वया । वधूटी परिभूतेयं स गतस्तेन हेतुना ॥ १०५९ ॥
जननीं जनकं बन्धुं धनं धान्यं गृहं गृहाम् (न्) । अपमानकराद्दूरात्त्यजन्त्येतानि मानिनः ॥ १०६० ॥
अपि मातृ(ता)पितृकृतादपमानाद्विभोरपि । इह मानधनैर्जीवैर्देशत्यागो विधीयते ॥ १०६१ ॥
अपमानं गुरोरेव शिष्यस्यैव हितावहम् । यतस्ते तर्जयन्त्येनं वारणस्मारणादिभिः ॥ १०६२ ॥
पराभवः स तस्यैव तत्प्रियायाः कृतो हि यः। पीडितायां तनौ नाम शरीरी दूयते न किम्॥ १०६३ ॥
सर्वत्राऽन्वेषयित्वा तमथ ते जनकादयः । चक्रिगे स्वानि कर्माणि नित्यं तद्विरहार्दिताः ॥ १०६४ ॥
प्रययौ शूरपालोऽपि महाशालाभिधं पुरम् । जम्बूवृक्षस्य च्छायायां सुष्वापोपवने च सः ॥ १०६५ ॥
परिश्रमवशात्तस्य तत्र निद्रा समाययौ । तत्प्रभावेण नो तस्य तरोच्छाया न्यवर्तत ॥ १०६६ ॥

१ दारान् ।

अत्रान्तरे पुरे तत्राऽपुत्रो राजा व्यपद्यत । चक्रे च पञ्चदिव्याधिवासना सचिवादिभिः ॥ १०६७ ॥
परिभ्रम्य पुरे तानि दिनस्य प्रहरद्वयम् । प्राप्तानि तत्र यत्राऽभूच्छूरपालः स पुण्यवान् ॥ १०६८ ॥
तं निरीक्ष्य करीन्द्रेण चक्रे गुलगुलायितम् । हेषितं च तुरङ्गेण च्छत्रं तस्योपरि स्थितम् ॥ १०६९ ॥
भृङ्गारेण प्रदत्तोऽर्धश्चामराभ्यां स वीजितः । उत्थितश्च जयजयारवो मङ्गलगीतिमान् ॥ १०७० ॥
ततोऽसौ मन्त्रिसामन्तैः सर्वाङ्गेषु विलोकितः । चक्रस्वस्तिकमत्स्याद्यैर्लक्षितः शुभलक्षणैः ॥ १०७१ ॥
दृष्ट्वाऽनिवर्तमानां च छायां जम्बूतरोश्च ते । एवमूचुरयं स्वामी जातः पुण्येन नः खलु ॥ १०७२ ॥
विनिद्रः शूरपालोऽथ किमेतदिति चिन्तयन् । अभ्यर्थ्य सचिवाद्यैस्तैरुपावेश्य च (त) विष्टरे ॥ १०७३ ॥
ततः स्नानविलिप्तांगं वस्त्राभरणभूषितम् । एनमारोहयामासुः सचिवाद्याः सुहस्तिनम् ॥ १०७४ ॥
ततो धृतातपत्रोऽसौ चामराभ्यां च वीजितः । महाविभूत्या नगरे पार्थिवस्तैः प्रवेशितः ॥ १०७५ ॥
प्रार्थ्यमानः पुरन्ध्रीभिश्चेतसा कृतमङ्गलः । प्रविश्य राजसदने सभायां निषसाद सः ॥ १०७६ ॥
कृताभिषेकः प्रत्येकं सामन्तैः प्रतिवासरम् । पुरे तत्र महाराजः शूरपालो बभूव सः ॥ १०७७ ॥
सोऽन्येद्युश्चिन्तयामास राजलक्ष्म्या किमेतया । यदसौ मम भार्या नो पूरयत्यात्मवाञ्छितम् ॥ १०७८ ॥
स्वहस्तलिखितं लेखमर्पयित्वाऽन्यदाऽमुना । स्वानानेतुमथो राज्ञा प्रेषिता निजपूरुषाः ॥ १०७९ ॥
ते काञ्चनपुरे प्राप्तास्तत्र तं सकुटुम्बकम् । ददृशुर्न महीपालमन्वेषणपरा अपि ॥ १०८० ॥

केनाऽपि कथितं तेषां जज्ञे दुर्भिक्षमत्र यत् । जातं किमपि नो तस्य महीपालस्य कर्षणे ॥ १०८१ ॥
ततः सोऽन्यन्यवसायानभिज्ञः सकुटुम्बकः । अन्यत्र प्रययौ क्वापि शुद्धिर्न ज्ञायते परम् ॥ १०८२ ॥
इत्याकर्ण्य पुमांसस्ते वलित्वाऽऽगत्य भूपतेः । तद्वार्ता कथयामासुस्तच्छ्रुत्वा विषसाद सः ॥ १०८३ ॥
स्वमानुपाणां वैधुर्यश्रवणात्स महीपतिः । संप्राप्तराज्यलाभोऽपि सुखं लेभे कदापि न ॥ १०८४ ॥
इतश्च वर्षे यत्राऽसौ निर्गतः पितृमन्दिरात् । ततो द्वितीयवर्षे नो मेघवृष्टिरजायत ॥ १०८५ ॥
ततो बभूव दुर्भिक्षे भूरिलोकक्षयंकरम् । यत्राढ्या अपि सीदन्ति दुर्गताश्च विशेषतः ॥ १०८६ ॥
मार्गा दुःसंचरा यत्र जायन्ते तस्करव्रजैः । मानुषो मानुषेणैव क्षुधितेन च भक्ष्यते ॥ १०८७ ॥
त्यज्यन्ते यत्र लोकेन स्वापत्यानि रुदन्त्यपि । विक्रीयन्तेऽथवा तानि निन्द्यनीचकुलेष्वपि ॥ १०८८ ॥
लभन्ते यत्र कष्टेन भिक्षामपि तपोधनाः । आच्छिद्य रङ्कनिवहैस्तेभ्यो भिक्षाऽपि भुज्यते ॥ १०८९ ॥
मुच्यते यत्र भार्याऽपि यस्यां स्नेहो महत्तरः । तस्य दुर्भिक्षकालस्य वार्ताऽपि भयकारिणी ॥ १०९० ॥
॥ चतुर्भिः कुलकम् ॥
सकुटुम्बो महीपालः स निर्गत्य पुरात्तदा । कुर्वाणोऽनेककर्माणि स्थाने स्थाने परिभ्रमन् ॥ १०९१ ॥
निवसन् शून्यशालासु प्राप्तनिःस्नेहभोजनः । बुभुक्षितकुटुम्बेन दूयमानो दुरुक्तिभिः ॥ १०९२ ॥

लंघयन्नगरग्रामपर्वतारण्यनिम्नगाः । आगान्महाशालपुरे प्राप्तः कष्टदशामिमाम् ॥ १०९३ ॥
॥ त्रिभिर्विशेषकम् ॥
शीलमत्यपि वेणीं तां कञ्चुकं च पटच्चरम् । अमुं मुञ्चेति श्वशुरेणोच्यमानाऽपि नाऽमुचत् ॥ १०९४ ॥
तद्वाक्याकरणात् सर्वकुटुम्बोद्वेगकारिणी । भर्त्सिताऽपि ततस्तेन सहमाना पराभवम् ॥ १०९५ ॥
पत्यादेशं प्रकुर्वन्ती रक्षन्ती दूषणं कुले । साऽपि तस्मिन् पुरे तेन श्वशुरेण महाऽऽगता ॥ १०९६ ॥
इतस्तेन नरेन्द्रेण सर्वलोकहितैषिणा । पुरे खानयितुं तत्राऽऽरब्धमेकमभून्सरः ॥ १०९७ ॥
तत्र कर्म करोति स्म निर्धनः प्रचुरो जनः । कुटुम्बसहितः सोऽथ महीपालोऽपि तद्व्यधात् ॥ १०९८ ॥
अन्यदा सर्वलोकेन विज्ञप्तो जगतीपतिः । तडागेऽत्र प्रभो ! दृष्ट्या प्रमादः क्रियतामिति ॥ १०९९ ॥
ततो हस्तिसमारूढः सर्वसेनासमन्वितः । शूरपालनृपस्तत्राऽऽययौ लोकोपरोधतः ॥ ११०० ॥
अथ कर्मकरान् सर्वान् वीक्षमाणेन भूभुजा । सकुटुम्बो महीपालो दृष्टोऽसौ जनको निजः ॥ ११०१ ॥
सा च शीलमती दृष्टा विग्रहावस्थया तथा । दुर्बलाङ्गी परनरालोककर्मपराङ्मुखी ॥ ११०२ ॥
दध्यौ च मे कुटुम्बस्य दैवयोगेन कीदृशी । जाता कर्मकरावस्था ही विपाकः कुकर्मणाम् ॥ ११०३ ॥
ततः कर्मकरान् सर्वान् प्रत्येकं वीक्ष्य भूपतिः । उद्दिश्य स कुटुम्बं तत् प्रोचे पञ्चकुलं प्रति ॥ ११०४ ॥
नव मानुषरूपाणि कुर्वन्त्येतानि कर्म सत् । दीयतेऽत्र किमेतेषामित्युक्तेऽथ तदाऽब्रवीत् ॥ ११०५ ॥

भृतकानां हि सर्वेषामेकैको रूपकः प्रभो ! । दीयते कणभक्तं च मध्यमं युष्मदाज्ञया ॥ ११०६ ॥
पुनर्भूपोऽब्रवीदेषां साधुकर्मविधायिनाम् । विशेषः क्रियतां कश्चिद्येनेदं पठ्यते जने ॥ ११०७ ॥
साध्वसाधुजने स्वामी निर्विशेषो यदा भवेत् । तदा साधुगुणोत्साहः साधोरपि न वर्धते ॥ ११०८ ॥
अमीषां द्विगुणां वृत्तिः कणभक्तमथोत्तमम् । देयमित्युदिते राज्ञा तान्या(ना)हूय जगाद तत् ॥ ११०९ ॥
हंहो युष्माकमार्येण प्रसादोऽयं विनिर्मितः । महाप्रसाद इत्युच्चैर्महीपालादयोऽवदन् ॥ १११० ॥
राज्ञोचे द्विकलत्रोऽस्ति किमेकस्तनयस्तव । निरीक्ष्यन्ते त्रयोऽमी यच्चतस्रश्च तथाऽपरा ॥ ११११ ॥
पुत्रप्रवासवार्ताऽस्य ततस्तेन निवेदिता । कुतस्त्वमागतोऽसीति पुनः पप्रच्छ तं नृपः ॥ १११२ ॥
तेनाऽपि काञ्चनपुरादिति प्रोक्ते नृपेण सा । शीलमत्यात्मनो गेहमाहूता तक्रहेतवे ॥ १११३ ॥
ततश्चाऽगान्नृपो गेहं जनः सर्वो विसिष्मिये । केनाऽपि सह नः स्वामी नैतावज्जल्पतीत्यहो ! ॥ १११४ ॥
साऽथ शीलमती प्राप्ता गोरसार्थं नृपौकसि । तदाऽऽदिष्टप्रतीहार्या कथिता सा महीभुजः ॥ १११५ ॥
तेन सा भणिता भद्रे ! कञ्चुकः किं तवेदृशः । लज्जावनम्रया किञ्चित्तया च न हि जल्पितम् ॥ १११६ ॥

१ एतच्छ्लोकानन्तरम्—"पृष्टश्च भूभुजा वृद्धः किमेतैः सह तात ! ते । कोऽपि स्वजनसंबन्धो न वेति धृतस्मृतः ॥ १ ॥ अङ्गुल्या दर्शनात् सोऽथ देवेयं मम गेहिनी । एतेऽथ तनया एता जनन्या वध्वश्च यत् ॥ २ ॥" इति प्रक्षिप्तश्लोकद्वयमशुद्धप्रायं क्वचित्पुस्तके टिप्पनिकारूपेण दृष्टं प्रकृतसंबन्धोपयोगित्वादिहापि टिप्पनिकारूपेणैव यथावस्थं न्यस्तमस्माभिः प्रसिद्धिकर्तृभिः ।

राज्ञाऽथ दापितं तस्याः प्रचुरं गोरसादिकम् । सा संप्राप्ता निजे गेहे भणिता श्वशुरादिभिः ॥ १११७ ॥
कूर्पासं त्वं नवं वत्से ! परिधेहि यतो गता । विगुप्यसि नृपावासे सा तच्चक्रे न तद्वचः ॥ १११८ ॥
द्वितीयदिवसे प्रोक्ता सा राज्ञा सदने गता । गृहाण वारबाणं त्वममुं भद्रे ! मयाऽर्पितम् ॥ १११९ ॥
ततः सा तमगृह्णन्ती क्रुद्धेनेव महीभुजा । अभाणीदमकुर्वत्या भविता सुन्दरं न ते ॥ ११२० ॥
साऽवोचत्सुन्दरं देव ! भवताद्वा असुन्दरम् । अहं हि न करिष्यामि निजनिश्चयखण्डनम् ॥ ११२१ ॥
यतः-"आयातु यातु वा लक्ष्मीर्यत्तद्वा वदताज्जनः। जीवितं मरणं वाऽस्तु सतां न्याय्यक्रियाव्रताम्" ११२२
इयं रे क्षिप्यतां गुप्तौ ममाज्ञाभङ्गकारिणी । इत्यादिष्टैर्नरैः राज्ञा चालिता साऽथ तां प्रति ॥ ११२३ ॥
एवं कृतेऽपि सा यावन्न मुमोच स्वनिश्चयम् । ततस्तुष्टेन भूपेनाऽऽनायिता स्वान्तिकं पुनः ॥ ११२४ ॥
ऊचे च कारणेन त्वं केन भद्रे ! न मुञ्चसि । जीर्णमेतं वारबाणमङ्गवैरूप्यकारकम् ॥ ११२५ ॥
साऽप्यवादीदियं वेणी मम भर्त्रा विनिर्मिता । तेनैवाऽहं स्वहस्तेन कञ्चुकं परिधापिता ॥ ११२६ ॥
ततोऽयं मुच्यते देव ! भर्तुरेव करेण मे । सोऽब्रवीत्तव भर्ताऽहं भवामि त्यज कञ्चुकम् ॥ ११२७ ॥
भणितं च तया नेदं वक्तुमप्युचितं तव । यतस्त्वं मेदिनीपालो दुर्नीतिपरिरक्षकः ॥ ११२८ ॥
दुःशील:(लैः) परिभूतानां सतीनां शीलखण्डनम् । ततः सत्यमिदं जातं यतो रक्षा ततो भयम् ॥ ११२९ ॥
अन्यच्च—गोत्रं विगोपितं तेन पौरुषं चरितं तथा। भ्रामितो मेदिनीपीठे यशःपटहकोऽखिले ॥ ११३० ॥

महार्घ्यमपि तेन स्वं विहितं रजसा समम् । परस्त्रीसेवनं येन निर्लज्जेन कृतं खलु ॥ ११३१ ॥ ( युग्मम् )

प्रोक्तं पार्श्वस्थितैर्भद्रे ! प्रार्थ्यते योऽबलाजनैः । कथं तमत्र जानासि प्रार्थनातत्परं नृपम् ? ॥ ११३२ ॥

साऽपि स्माह लगत्यङ्गे परिणीतः पतिर्मम । ज्वालाकरालो वह्निर्वा जीवन्त्या नाऽपरो नरः ॥ ११३३ ॥

ततः संकेतवाक्यानि तत्प्रतीतानि भूपतिः । आख्यायोवाच संवीक्ष्य मुग्धे ! मामुपलक्षय ॥ ११३४ ॥

यतोऽहं नगरेऽमुष्मिन्नपुत्रनृपतेर्मृतौ । पञ्चदिव्यैः कृतो राजा शूरपालः स ते पतिः ॥ ११३५ ॥

सर्वं सप्रत्ययं राजवाक्यमाकर्ण्य विस्मिता । निरीक्ष्य संमुखं सम्यक् सा स्वकान्तं विवेद तम् ॥ ११३६ ॥

हृष्टा सजलपाथोददर्शनात् केकिनीव सा । जाता रोमाञ्चिताङ्गी च धाराहतकदम्बवत् ॥ ११३७ ॥

ततो राजसमादिष्टचेटिभिः स्नपिता सका । सर्वाङ्गेषु च तन्वङ्गी कुङ्कुमेन विलिप्य च ॥ ११३८ ॥

ततः पटांशुकादीनि वस्त्राणि परिधापिता । भूषिता तिलकचतुर्दशेनाऽऽभरणेन च ॥ ११३९ ॥

सा ययौ भूपतेः पार्श्वे तेनाऽप्यर्धासने निजे । उपावेशि ततो मन्त्रिसामन्ताद्यैर्नमस्कृता ॥ ११४० ॥

इतस्तस्मिन् दिने शान्तिमत्येताऽभूत्तया सह । गुप्तिप्रक्षेपकालेऽस्या वलित्वा सा गृहं गता ॥ ११४१ ॥

शशंसैवं कुटुम्बस्य यथाऽसौ राजढौकितम् । मुकञ्चुकमगृह्णन्ती कारावासिन्यजायत ॥ ११४२ ॥

सर्वैरपि ततोऽभाणि युक्तमस्या इदं स्फुटम् । बहुधा भण्यमानाऽपि या नो वाक्यममन्यत ॥ ११४३ ॥

भोक्तुं निमन्त्रितोऽन्येद्युर्महीपालो महीभुजा । आययौ सकुटुम्बोऽपि सकाले राजमन्दिरे ॥ ११४४ ॥
कारयित्वा ततः स्नानं वस्त्राणि परिधाप्य च । यथायोग्यमलङ्कारैः सकुटुम्बोऽपि मण्डितः ॥ ११४५ ॥
महीपालस्ततो दध्यौ किमेष जगतीपतिः । करोत्यस्माकमतुलं बन्धूनामिव गौरवम् ? ॥ ११४६ ॥
यस्य पार्श्वाद्यदा येन लभ्यं स्याद्यदिलातले । लभते निर्गुणोऽप्येष तस्य पार्श्वात्तदैव तत् ॥ ११४७ ॥
एवं विचिन्तयश्चित्ते तत्कुटुम्बमथाऽखिलम् । रम्यासनेषु राज्ञा भोजनार्थमुपवेशितम् ॥ ११४८ ॥
न्यवेश्यन्त विचित्राणि स्थालान्यस्य पुरस्तथा । निषसाद च भूपोऽपि भोक्तुं तत्रोचितासने ॥ ११४९ ॥
अत्रान्तरे नृपादिष्टा देवी शीलमती स्वयम् । विदधे शालिसूपाद्याहारस्य परिवेषणम् ॥ ११५० ॥
भणिता सा पुना राज्ञा चिरकालविचिन्तितान् । सफलीकुरुष्व सर्वान् प्रियेऽद्य स्वमनोरथान् ॥ ११५१ ॥
भोजने च कृते राज्ञा महीपालो निवेशितः । सिंहासने वरेऽन्येषु भ्रातरश्च यथाक्रमम् ॥ ११५२ ॥
जननी भ्रातृजायाश्च यथायोग्यासनेषु च । ततो नत्वा महीपालं शूरपालनृपोऽवदत् ॥ ११५३ ॥
तात ! सोऽहं तव सुतो निर्गतो यस्तदा गृहात् । तावकीनमिदं राज्यं ततस्ते सेवकोऽस्म्यहम् ॥ ११५४ ॥
विज्ञायाऽपि मया त्वं यत्कारितः कर्म गर्हितम् । क्षन्तव्यः पूज्यपादैः स सर्वोऽप्यविनयो मम ॥ ११५५ ॥
शीलमत्यपि सर्वेषां नत्वा पादानदोऽवदत् । मया संतापिता यत्तत्क्षमध्वं यूयमद्य मे ॥ ११५६ ॥
यद्युष्मद्वचनेनाऽपि न मुक्तः कञ्चुको मया । तदवश्यं स्वकान्तस्य तात ! वाक्यमनुष्ठितम् ॥ ११५७ ॥

महीपालोऽप्यभाषिष्ट हृष्टः समुपलक्ष्य तम् । निजपुण्यार्जितां लक्ष्मीं त्वं च भुंक्ष्व चिरं सुत ! ॥ ११५८ ॥
जातस्त्वद्दर्शने वत्स ! हर्षकल्लोलवानहम् । सरस्वानिव शीतांशोरुदये हि विदूरगः ॥ ११५९ ॥
उत्थायाऽऽदाय बाहुभ्यां शूरपालं ततः पिता । निवेशयामास सिंहासने नीतिविशारदः ॥ ११६० ॥
राज्यप्रतिष्ठितः पुत्रो वन्द्यः पित्राऽपि साञ्जसम् । राजनीतिरियं येन महीपालोऽपि तद्व्यधात् ॥ ११६१ ॥
भणितैवं प्रियैर्वाक्यैर्गुरुणा शीलमत्यपि । जीवलोके त्वमेवैका पुत्रि ! धन्याऽसि सर्वथा ॥ ११६२ ॥
यस्या मनोरथानामसंभाव्यानामपि स्फुटम् । जाता सिद्धिः समस्तानां स्त्रीरत्नं त्वमेव हि ॥ ११६३ ॥
रक्षितं यत्त्वयाऽनन्यसदृशं शीलमात्मनः । विहिता पत्युराज्ञा च तत्ते तुल्याऽपराऽत्र का ? ॥ ११६४ ॥
याऽभूत् पदे पदे पूर्वं तस्य संतापकारिणी । साऽपि जाता स्तुतिपदं प्रभावो ह्यहो श्रियः ॥ ११६५ ॥
सोचेऽपमानता तात ! सफला मे तवाऽभवत् । गुरूणामपमानोऽपि यतः स्याद्वाञ्छितप्रदः ॥ ११६६ ॥
यदि त्वमपमानं मे तदा नाऽदर्शयिष्यथाः । आगमिष्यत्ततश्चाऽत्र कथं तात ! तवाऽऽत्मजः ? ॥ ११६७ ॥
अलप्स्यत कथं राज्यं गौरवं भवतां कथम् । अकरिष्यदसौ मे वाऽपूरयिष्यत् कथं प्रियम् ? ॥ ११६८ ॥
एवमुक्त्वा स्थिता साऽथ शूरपालो नरेश्वरः । उद्दिश्य सर्वसामन्तानदोऽवादीत् प्रगल्भवाक् ॥ ११६९ ॥
भो भो ! मे जनकोऽयं हि मर्मैते भ्रातरस्तथा । इयं माता प्रजावत्यस्तिस्रश्चैता मम स्फुटम् ॥ ११७० ॥

१ श्वशुरेण । २ भ्रातृभार्याः ।

तदेतेषां गुरूणां मे प्रणामं कुरुताऽऽदरात् । इत्युक्तास्ते तथा चक्रुर्दुर्लङ्घ्यं स्वामिशासनम् ॥ ११७१ ॥
राज्ञाऽथ शूरपालेन सर्वे ते निजपूर्वजाः । भूरिदेशप्रदानेन चक्रिरे मण्डलेश्वराः ॥ ११७२ ॥
पितरावात्मनः पार्श्वे स्थापितौ तौ मगौरवम् । स एवं कृतकृत्यः सन्निजं राज्यमपालयत् ॥ ११७३ ॥
अथाऽन्येद्युः पुरे तत्र श्रुतसागरसंज्ञकः । समाययौ सूरिवरस्तस्थौ च नगराद्बहिः ॥ ११७४ ॥
तं नन्तुं धार्मिकं लोकं निर्यान्तं वीक्ष्य पत्तनात् । तत्कारणमसौ राजा पप्रच्छ सचिवं वरम् ॥ ११७५ ॥
विज्ञातपरमार्थोऽसौ जजल्पेवं महीपतिम् । ज्ञानवानागतोऽस्त्यद्य कोऽपि सूरिवरः पुरे ॥ ११७६ ॥
राजा प्रोवाच हे मन्त्रिन् ! यथैते यान्ति नागराः । तथाऽऽचार्यं नमस्कर्तुं यामो वयमपि स्फुटम् ॥ ११७७ ॥
युक्तमित्युदिते तेन सोऽथ तातप्रियान्वितः । गत्वा नत्वा च तं सूरिं निषसादाऽस्य सन्निधौ ॥ ११७८ ॥
आचख्यौ सूरिरप्यस्य धर्मं सर्वज्ञभाषितम् । संसारसागरोत्तारगुरुपोतसमप्रभम् ॥ ११७९ ॥
ततः श्रावकधर्मं स गृहीत्वा गुरुसन्निधौ । भूयोऽपि तं नमस्कृत्याऽऽययौ च निजमन्दिरम् ॥ ११८० ॥
एवं प्रतिदिनं सूरिवन्दनार्थं ययावसौ । अन्यस्मिंश्च दिने तेन पृष्टः स भगवानिति ॥ ११८१ ॥
प्रभो ! पूर्वभवेऽकारि किं मया सुकृतं यतः । कष्टं विनाऽपि येनेयं लब्धा राज्येन्दिरा वरा ॥ ११८२ ॥
सोऽथाऽभाषिष्ट हृष्टास्यः सुगुरुः श्रुतसागरः । राजँस्त्वयाऽतिथिसंविभागश्चक्रे पुरा भवे ॥ ११८३ ॥
इहैव भरते भूमिप्रतिष्ठे नगरे वरे । वीरदेवोऽभिधानेन श्रावकः प्रवरोऽभवत् ॥ ११८४ ॥

तस्याऽऽसीत् सुव्रतानाम्नी श्राविका वरगेहिनी । तावपालयतां गेहवासं धर्मपरायणौ ॥ ११८५ ॥
अन्येद्युरष्टमीघस्रे वीरदेवः स पौषधम् । जग्राह पारणे चैवं चिन्तयामास चेतसि ॥ ११८६ ॥
धन्यास्ते पर्वदिवसे ये कृत्वा वरपौषधम् । तत्पारणे सुसाधुभ्यो दानं ददाति भाविनः ॥ ११८७ ॥
द्वारावलोकनं सोऽथ कुर्वन्नवमवर्जिति । ददर्शाऽऽगच्छदावासे साधुयुग्मं तपःकृशम् ॥ ११८८ ॥
कृत्वाऽभिगमनं तस्य नत्वा च चरणद्वयम् । सद्भक्त्या भक्तपानेन वीरस्तत् प्रत्यलाभयत् ॥ ११८९ ॥
स्तोकभूमिमनुव्रज्य तौ नत्वा च मुनी पुनः । स्ववेश्मन्याययौ वीरो धन्योऽहमिति चिन्तयन्॥ ११९० ॥
दध्यौ सा सुव्रताऽप्येवं कृतार्थोऽयं पतिर्मम । दत्तं येन सुसाधुभ्यां दानं श्रद्धातिरेकिणा ॥ ११९१ ॥
एवं विशुद्धभावेन प्रकुर्वत्यानुमोदनाम् । सुपात्रदानपुण्यस्य तयाऽप्यंश उपार्जितः ॥ ११९२ ॥
एवं तौ दम्पती धन्यौ दत्त्वा दानमनेकधा । पालयित्वा सुसम्यक्त्वौ चिरं च श्रावकव्रतम् ॥ ११९३ ॥
कृत्वाऽन्ते चाऽनशनत्यागं विपद्य च समाधिना । ईशानकल्पे संजातावमरौ सुखशालिनौ ॥ ११९४ ॥ युग्मम् ॥
वीरदेवस्य जीवोऽथ देवलोकात् परिच्युतः । प्रचण्डो मेदिनीपालः शूरपालो भवानभूत् ॥ ११९५ ॥
बभूव सुव्रताजीवो दिवश्च्युत्वा तव प्रिया । एषा शीलमतीनाम्नी सुमनोरथशालिनी ॥ ११९६ ॥
इंहो पूर्वभवे दत्तं युवाभ्यां विहायतम् । तेन राज्यमिदं लब्धं विना क्लेशेन भूतले ॥ ११९७ ॥

१ दानम् ।

ततश्च जातिस्मरणं नृपोऽवाप स सप्रियः । प्रत्यक्षमिव तत्पूर्वभववृत्तं ददर्श च ॥ ११९८ ॥
चन्द्रपालं निजसुतं राज्ये च (ऽथ) विनिवेश्य सः । मतातः सप्रियो दीक्षां गुरोस्तस्यान्तिकेऽग्रहीत् ॥ ११९९ ॥
विशुद्धां पालयित्वा तां कृत्वा च विविधं तपः । ययावात्मतृतीयोऽपि स मोक्षं प्राप्तकेवलः ॥ १२०० ॥

॥ इत्यतिथिसंविभागव्रते शूरपालनृपकथा ॥

अन्यच्च—

सुपात्रदानजाद्धर्मादिहलोकेऽपि मानवः । अभीष्टार्थमवाप्नोति व्याघ्रः कौटुम्बिको यथा ॥ १२०१ ॥
संजातसर्वतोभद्रे पारिभद्रे पुरे वरे । बभूव क्षत्रियो जात्या व्याघ्रनामा कृषीवलः ॥ १२०२ ॥
सेवावृत्तिं परित्यज्य कुर्वतोऽप्यस्य कर्षणम् । समपद्यत नो वित्तं कृतदारिद्र्यधर्षणम् ॥ १२०३ ॥
तद्भार्या विजयानाम्नी डिम्भरूपमसूयत । प्रतिवर्षं प्रसभस्य दारिद्र्यस्य प्रभावतः ॥ १२०४ ॥
सोऽन्यदा शिथिलारंभो भणितो भार्यया तया । निश्चिन्त इव हे कान्त ! निर्व्यापारः कथं त्वसि? ॥ १२०५ ॥
सोऽवदन्मन्दभाग्यस्य व्यापाराः फलदा न मे । नृपसेवाकर्षणाद्यास्तत्प्रिये ! किं करोम्यहम् ? ॥ १२०६ ॥
पुनरूचे तया सोऽथ भाग्यहीनोऽसि यद्यपि । तथापि स्वोचितं कान्त ! व्यापारं कुरु कञ्चन ॥ १२०७ ॥
सुवस्त्राभरणादीनां शोभा दूरेऽस्तु त्वद्गृहे । भोजनस्यापि नो वाञ्छा पूर्णा मम कदाचन ॥ १२०८ ॥
इमानि डिम्भरूपाणि जेमनार्थमनेकशः । रुदन्ति वीक्ष्य किं नाम तव चेतो न दूयते? ॥ १२०९ ॥

त्वयाऽग्रे विहिता सेवा पुरस्याऽस्य महीपतेः। अधुनाऽन्यस्य कस्याऽपि भूपतेः सा विधीयताम्॥ १२१० ॥
तयैवं भणितः सोऽभूत्सेवावृत्तिसमुद्यतः। प्रायेण गृहिणीवाक्यं दुर्लङ्घ्यं गृहमेधिनाम् ॥ १२११ ॥
अथाऽसौ वणिजं कञ्चिदित्यूचे मे कुटुम्बिनी। यद्याचते देयमस्यास्तन्ममोद्धारके त्वया ॥ १२१२ ॥
नरेन्द्रसेवया लक्ष्मीमुपार्ज्याऽहमुपागतः। पूरयिष्यामि भवतः स्वप्रियायाश्च वाञ्छितम् ॥ १२१३ ॥
किञ्चित्पाथेयमादाय सुमुहूर्त्ते ततश्च सः। वस्त्रशस्त्रादिसामग्रीसंयुक्तो निर्ययौ गृहात् ॥ १२१४ ॥
पुरे शंखपुरे गत्वा वत्सलस्याऽनुजीविनाम्। सेवकत्वं प्रपन्नोऽसौ शूरसेनमहीपतेः ॥ १२१५ ॥
वचसाऽऽह्लादितोऽत्यन्तमल्पदानेन चाऽमुना। व्याघ्रः सर्वात्मना सेवां चक्रे तस्य धनाशया॥ १२१६ ॥
कियद्भिर्वासरैर्द्रव्यं तत्सर्वं तेन भक्षितम्। अन्यच्चाऽलभमानेन विक्रीतं क्षुरिकादिकम् ॥ १२१७ ॥
संवत्सरेऽप्यतिक्रान्ते ततः किञ्चिदनाप्नुवन्। स एवं चिन्तयामास विषादकलिताशयः ॥ १२१८ ॥
आदावुदारवचनो निःसारोऽयं शनैः शनैः। बभूव मे महीपालः शाल्मलीपुष्पसन्निभः ॥ १२१९ ॥
अस्याः कुस्वामिसेवायास्तद्वरं कर्षणं मम। वियोगः स्वकुटुम्बेन यत्र नैव प्रजायते ॥ १२२० ॥
निःस्वस्य[1] गेहगमनं ह्रीकरं मम यद्यपि। तथापि निष्फलारम्भः किमन्यत् प्रकरोम्यहम्? ॥ १२२१ ॥
विचिन्त्यैवं ततः स्थानान्निःसृत्याऽसावशम्बलः। आगात् पन्थानमुल्लंघ्य रात्रौ निजनिकेतनम् ॥ १२२२ ॥

१ निर्धनस्य।

गृहाद्बहिः स्थितः कुड्यान्तरे शुश्राव च प्रियाम् । याचमानान् शुभाहारं बोधयन्ती शिशूनिति॥ १२२३ ॥
हे पुत्रा ! भवतां तातः सेवां कर्तुं महीपतेः । गतोऽस्ति सोऽधुना वित्तं बह्वादाय समेष्यति ॥ १२२४ ॥
तस्मिन् समागते दास्ये युष्मभ्यं वरभोजनम् । समानेष्यति वासांसि भवद्योग्यान्यसौ तथा ॥ १२२५ ॥
ममाऽप्येष सुवस्त्रालङ्कारान् कारयिता स्फुटम् । भविष्यति शुभं सर्वं विधेयं तन्न रोदनम् ॥ १२२६ ॥
श्रुत्वा तद्वचनं तस्या दध्यौ व्याघ्रो मनस्यदः । अहो मंभावनां गुर्वीं मत्प्रिया मन्यते मयि॥ १२२७ ॥
यदि मामीदृशावस्थं द्रक्ष्यत्येषा गृहागतम् । संजातहृदयस्फोटा निराशा तन्मरिष्यति ॥ १२२८ ॥
प्रभूतेनापि कालेन समुपार्ज्य श्रियं मया । आगन्तव्यं स्वगृहेऽत्र नाऽन्यथा तु कथञ्चन ॥ १२२९ ॥
निर्मितोऽसि नरः किं त्वं विलीनोऽस्युदरे न किम् । जीव रे निर्धनावस्था जाता यस्येदृशी तव ॥ १२३० ॥
नाऽर्जिता कमला नैव चक्रे भर्तव्यपोषणम् । दत्तं च येन नो दानं तस्य जन्म निरर्थकम् ॥ १२३१ ॥
आत्मानमप्रकाश्यैव ततः स्थानाद्विनिःसृतः । चारुरत्नान्युपादातुं सोऽचालीद्रोहणं प्रति ॥ १२३२ ॥
कुर्वन् भिक्षाटनं मार्गे तं च पृच्छन् जनं जनम् । क्रमेण स ययौ तत्र दूरं किं व्यवसायिनाम्? ॥१२३३॥
खनित्वाऽथ खनित्रेण रोहणाचलभूमिकाम् । जग्राह वररत्नानि कन्थान्तस्तानि चाऽक्षिपत् ॥ १२३४ ॥
भिक्षावृत्त्या पुनर्जीवन् वलितः स्वगृहं प्रति । निषण्णः काननस्याऽन्तः कस्यचिच्छाखिनस्तले॥ १२३५ ॥
प्रसारितास्यकुहरं दंष्टाक्रकचभीषणम् । वनान्तरात्समायान्तं व्याघ्रमेकं ददर्श सः ॥ १२३६ ॥

भयभीतस्ततः शीघ्रमारुरोह स पादपम् । रत्नकन्था तु तत्रैव जीविताच्यर्थोऽस्य विस्मृता ॥ १२३७ ॥
स्थित्वा तत्र क्षणं व्याघ्रो विलक्षः प्रययौ वनम् । व्याघ्रनामा तु तद्भीत्या नोत्ततार तरोस्ततः ॥१२३८॥
अत्रान्तरे कपिः कश्चिद्रत्नकन्थां मुखेन ताम् । गृहीत्वा प्रययौ शीघ्रं प्रकृत्या चञ्चलो हि सः ॥१२३९॥
हरिणा[1] ह्रियमाणां तां कन्थां वीक्ष्य झटित्यपि । उत्तीर्य पादपात्तस्माद्व्याघ्रस्तमनुधावितः ॥ १२४० ॥
वृक्षाद्वृक्षं समुत्प्लुत्य गच्छन् शाखामृगोऽथ सः । क्षणेनाऽयाददृश्यत्वं व्याघ्रस्त्वेवमचिन्तयत् ॥१२४१॥
यत किञ्चिन्निबिडं पापं जीव रे विहितं त्वया । तेन त्वं निष्फलारम्भः कृतोऽसि धरणीतले ॥१२४२॥
व्यर्थः पुरुषकारः स्यान्निष्पुण्यानां हि यद्यपि । तथाऽप्येष न मोक्तव्यो महोद्यमवता ध्रुवम् ॥१२४३॥
इति संधीरयित्वा स्वं सोऽग्रतश्चलितः पुनः । आससाद ग्राममेकमटवीप्रान्तवर्तिनम् ॥ १२४४ ॥
तद्बहिश्चैकमद्राक्षीद्योगिनं तं ननाम च । वत्साऽदरिद्रो भूयास्त्वमित्यूचे स च तं कुधीः ॥ १२४५ ॥
ततश्चाऽऽत्मकथां व्याघ्रः कथयित्वाऽब्रवीत् प्रभो ! । अदरिद्रीभविष्यामि तुष्टेन भवता यदि ॥ १२४६ ॥
योगिनाऽपि रसकल्पमाख्यायैष प्रवेशितः । विवरे तत्र सुलभ इव कूपे तथैव च ॥ १२४७ ॥
केनाऽपि पूर्वप्रक्षिप्तपुंसा तस्याऽपि तुम्बकम् । समर्पितं रसापूर्णं कथितं चाऽस्य चेष्टितम् ॥ १२४८ ॥
कूपकण्ठगतः सोऽपि याचितस्तेन तुम्बकम् । नाऽर्पयामास व्याघ्रस्तं ततो योगी व्यचिन्तयत् ॥ १२४९ ॥

१ कपिना । २ वानरः ।

बहिर्गतोऽप्युपायेन वञ्चनीयो मया ह्ययम् । इति ध्यात्वाऽमुनाऽऽकृष्टो रसकूपादसौ ततः ॥ १२५० ॥
निःसृत्य विवरात्तस्माद्ग्रामोपान्तमुपागतः । ऊचे त्रिदण्डी भो भद्र ! सिद्धास्तव मनोरथाः ॥ १२५१ ॥
रसेनाऽनेन संसिक्तं लोहं प्रज्वाल्य वह्निना । करिष्यते जातरूपं जातरूपं शरीरिणाम् ॥ १२५२ ॥
किञ्चिदग्रेतनं तस्याऽर्पयित्वाऽथ सुवर्णकम् । योगी स्माह वराहारं वत्स ! साम्प्रतमानय ॥ १२५३ ॥
वासोयुग्मं च प्रत्येकं मम चाऽऽत्मकृते त्वया । आनेतव्यं यतो लक्ष्म्या एतदेवादिमं फलम् ॥ १२५४ ॥
व्याघ्रो व्यचिन्तयत् सत्यं ममाऽयं हितकारकः । अर्पयामास कनकमात्मीयं कथमन्यथा ॥ १२५५ ॥
यत्त्वस्य हेतवे भोज्यवस्त्रे चाऽऽनाययत्यसौ । तन्मन्ये मे हिताधायी निश्चितं न हि वञ्चकः ॥ १२५६ ॥
ततोऽसौ योगिनः पार्श्वे विमुच्य रसतुम्बकम् । गत्वा ग्रामे मण्डकादिवरभोज्यमकारयत् ॥ १२५७ ॥
घटकर्परयोस्तच्च निक्षिप्य जलपूतयोः । वासांस्यपि समादाय यावदागादसौ बहिः ॥ १२५८ ॥
तावदग्रे गतो योगी रसालाबुयुतः क्वचित । तमपश्यन्नथो व्याघ्रो मुष्टोऽस्मीत्यवदद्वचः ॥ १२५९ ॥ युग्मम् ॥
विमुच्याऽऽहारपात्रे ते वस्त्राणि च तरोस्तले । पपात मूर्च्छया पृथ्व्यां लब्धसंज्ञो जगाद च ॥ १२६० ॥
हा दैव ! मत्समः कोऽपि किमन्यो नास्ति भूतले । अहमेव दुःखभाण्डागारिको यत्कृतस्त्वया ॥ १२६१ ॥
आदौ निर्धनता तावत्सेवा विफलिता ततः । हानिश्च रसरत्नानामहो दुःखपरम्परा ॥ १२६२ ॥
ततो मे मरणं श्रेय इत्युक्त्वा वटपादपे । आरुह्य तस्य शाखायां स्वमुद्बध्धुं समुद्यतः ॥ १२६३ ॥

सोऽनगारं ददर्शैकमीर्यासमितितत्परम् । अभिग्रामं समायान्तं मासक्षपणपारणे ॥ १२६४ ॥
अचिन्तयच्च यच्छामि दानमस्य महात्मनः । जायते यत्प्रभावेण सुखं जन्मान्तरे यथा ॥ १२६५ ॥
ततो वृक्षात्समुत्तीर्य मुनिवर्यं प्रणम्य च । स तस्मै ढौकयामास तद्भक्तं चीवराणि च ॥ १२६६ ॥
तदुद्गमोत्पादनादिदोषवर्जितमेकतः । कर्परादग्रहीत् साधुः कल्पनीये च वाससी ॥ १२६७ ॥
पुनः प्रणम्य तेनाऽसौ विसृष्टोऽगान्निजाश्रयम् । व्याघ्रोऽपि दध्यौ धन्योऽहं संयोगोऽभूद्यदीदृशः ॥ १२६८ ॥
क्वेदृशाहारवसनसंपत्तिरभवन्मम । प्रान्तग्रामेऽथवाऽमुष्मिन् क्वेदृक्साधुसमागमः ॥ १२६९ ॥
विवेकविकलस्याऽपि क्वेदृशी दानवासना । जाताऽहो जन्मनस्तन्मे सारमेतदहो ध्रुवम् ॥ १२७० ॥
अत्रान्तरे जगादैनं देवता वटवासिनी । मुनिदानेन तुष्टाऽस्मि वत्स ! किं करवै तव ॥ १२७१ ॥
सोऽवदद्यदि तुष्टाऽसि काऽपि त्वं मम देवता । तद्देहि पारिभद्रस्य वैभवं विभवं तथा ॥ १२७२ ॥
देवतोवाच सर्वं ते भविष्यति महाशय ! । भुंक्ष्व भक्ष्यमिदं तावत्प्राणाधारविधायकम् ॥ १२७३ ॥
संप्राप्य देवताऽऽदेशं व्याघ्रोऽपि मुदिताशयः । चक्रे तद्भोजनं ते च चीवरे परिधीतवान् ॥ १२७४ ॥
देवतायाः प्रभावेण कपिरेत्य वनादसौ । रत्नकन्थां पुरस्तस्य मुक्त्वाऽगात् काननं पुनः ॥ १२७५ ॥
रसतुम्बकमादाय स योग्यपि समाययौ । निष्पाद्य तेन कल्याणं व्याघ्रस्यैव समर्पितम् ॥ १२७६ ॥
इतश्च पारिभद्रस्य पुरः स्वामी कथञ्चन । विपन्नो नाऽभवत्तस्य कोऽपि राज्यधरः सुतः ॥ १२७७ ॥

ततः सा देवता व्याघ्रं रत्नस्वर्णसमन्वितम् । निनाय नगरे तत्र लोकस्यैवं शशंस च ॥ १२७८ ॥
भो भो जना ! भवद्योग्य आनीतोऽस्ति मया प्रभुः । तमानयत पूर्मध्ये महोत्सवपुरस्सरम् ॥ १२७९ ॥
देवतादेशसन्तुष्टा यावत्तत्र ययुर्जनाः । तावत्ते ददृशुर्व्याघ्रं तं स्वपत्तनवासिनम् ॥ १२८० ॥
ततश्च महिमा तस्य चक्रिरे ते प्रमोदिनः । पाषाणोऽपि भवेत् पूज्यो देवताधिष्ठितो यतः ॥ १२८१ ॥
हस्तिस्कन्धाधिरूढोऽसौ यावदानीयते स्म तैः । पुरे तत्र पुरा तावद्यज्जातं तन्निवेद्यते ॥ १२८२ ॥
सा तस्य गेहिनी नित्यं वणिग्घट्टात्कणादिकम् । आनिनाय ततो द्रव्यं तेन लभ्यमभूद्बहु ॥ १२८३ ॥
व्याघ्रोदन्ते त्वविज्ञाते सापत्याऽप्यमुना सका । धृत्वा धरणके नीता पुरारक्षस्य मन्दिरे ॥ १२८४ ॥
वृत्तान्तं तमथो ज्ञात्वा व्याघ्रेण पृथिवीभुजा । दत्त्वार्थं वणिजस्तस्य सा निन्ये राजमन्दिरे ॥ १२८५ ॥
व्याघ्रोऽपि राजसदनं संप्राप्तो मन्त्रिपुङ्गवैः । सामन्तैरन्यलोकैश्च भक्तिपूर्वं नमस्कृतः ॥ १२८६ ॥
सभासीनः स सर्वेषां तेषामग्रे निजां कथाम् । कथयामास सकलां महाविस्मयकारिणीम् ॥ १२८७ ॥
तोषयामास जायां च वस्त्रालङ्करणादिभिः । अपत्यानि च सर्वाणि स्ववार्ताख्यानपूर्वकम् ॥ १२८८ ॥
सुपात्रदानसंप्राप्तराज्यश्रीः सोऽथ भूपतिः । पुनरेव सुपात्रेभ्यो ददौ दानमनेकशः ॥ १२८९ ॥
अनुभूतां शरीरेण स्मरन् दुःखपरम्पराम् । स्वसंवेदनतो मैत्रीं चक्रेऽसौ सर्वजन्तुषु ॥ १२९० ॥
ज्ञानगुप्ताभिधोऽन्येद्युस्तत्राऽऽचार्यः समाययौ । तस्य पादौ नमस्कर्तुमागाद्व्याघ्रमहीपतिः ॥ १२९१ ॥

कृत्वा प्रणाममासीने नृपे तस्मिन्मुनीश्वरः । स धर्मदेशनां चक्रे प्रतिबोधविधायिनीम् ॥ १२९२ ॥
राजाऽवोचत् प्रभो ! धर्मफलं प्रत्यक्षमेव मे । जातं सुपात्रदानेन यदैश्वर्यमिहैव हि ॥ १२९३ ॥
परमेवं ममाऽऽख्याहि पातकं किं पुराभवे । अकारि यत्प्रभावेणाऽनुभूतं च मयाऽसुखम् ॥ १२९४ ॥
सोऽथ ज्ञानी समाचख्यावासीत् पूर्वभवे भवान् । दुर्गसिंहाभिधः पल्लीपतिः क्षितिधरावनौ ॥ १२९५ ॥
परवित्तापहरणं भिल्लाः कुर्वन्ति यद्यपि । परिणामविशेषाः स्युस्तेषामपि शुभाशुभाः ॥ १२९६ ॥
तद्यथा—अवस्कन्दगतः कश्चिद्ब्रूतेऽभिमुखमागतः । द्विपाच्चतुष्पात्सर्वोऽपि मारणीयोऽपशङ्कितं ॥ १२९७ ॥
अन्यो वदति तिर्यग्भिः किमेतैर्हन्त मारितैः । हन्तव्या नृस्त्रियो येन ग्राममध्ये भयं भवेत् ॥ १२९८ ॥
अपरः प्राह किं स्त्रीभिर्मारणीया नराः खलु । जल्पत्यन्यो निहन्तव्या नरा अप्यायुधान्विताः ॥ १२९९ ॥
वक्त्यन्यो युध्यमाना हि हन्तव्या अपरस्तथा । धनापहारः कर्तव्यो मारणीयो न कश्चन ॥ १३०० ॥
तत्राऽऽद्यःकृष्णलेश्यावान् द्वितीयो नीललेश्यकः। अन्यः कपोतलेश्यायुक् तेजोलेश्यान्वितोऽपरः॥ १३०१ ॥
पञ्चमः पद्मलेश्यावान् शुक्ललेश्यस्तथाऽपरः । त्रयोऽधोगामिनः पूर्वे शेषास्तु क्रमशः शुभाः ॥ १३०२ ॥
दुर्गसिंहोऽपि पल्लीशः पद्मलेश्यासमन्वितः । परद्रव्यापहारेण सदा वृत्तिं चकार सः ॥ १३०३ ॥
अन्यदा वैरिसिंहाख्यनृपसैन्येन सोऽहत । कियतोऽपि भवाँस्तिर्यग्योनौ भ्रान्त्वाऽभवद्भवान् ॥ १३०४ ॥
यदन्यवित्तहरणं त्वया चक्रे पुरा भवे । समपद्यत तन्न श्रीः संपन्नाऽपि हृता तव ॥ १३०५ ॥

सुपात्रदानपुण्येन तदा तु फलितेन ते । पुनः समागता लक्ष्मीर्जातं राज्यमिदं तथा ॥ १३०६ ॥
श्रुत्वेति प्रतिबुद्धोऽसौ सूरिं नत्वा गतो गृहम् । निवेश्य तनयं राज्ये दीक्षां गुर्वन्तिकेऽग्रहीत् ॥ १३०७ ॥
अन्ते समाधिना मृत्वा देवलोकमियाय सः । च्युत्वा ततो मनुष्यत्वं लब्ध्वा मोक्षमवाप्स्यति ॥ १३०८ ॥

॥ इति व्याघ्रराजर्षिकथा ॥

इहैवाऽतिथिदानस्य साफल्यालङ्कृता वरा । कथितेयं व्याघ्रकथा चक्रायुध नरेश ! ते ॥ १३०९ ॥
द्वादशाऽपि व्रतान्येवमुक्तानि गृहमेधिनाम् । एतानि पालयित्वाऽन्ते कुर्यात्संलेखनां गृही ॥ १३१० ॥
गृहधर्मं पालयित्वा दीक्षां गृह्णाति यत्सुधीः । एषा संलेखना शुद्धा समये परिभाषिता ॥ १३११ ॥
अथ चैकादशश्राद्धप्रतिमादर्शनादिकाः । कुर्यात्तासामभावेन दीक्षां संस्तारके स्थितः ॥ १३१२ ॥
त्रिविधा चतुर्धा वा गृह्णात्यनशनं सुधीः । वर्धमानपरीणामो गुरूणां चरणान्तिके ॥ १३१३ ॥
शृणोत्याराधनाग्रन्थान् गुरुवक्त्रविनिर्गतान् । संवेगरङ्गमनघं दधानो निजमानसे ॥ १३१४ ॥
पञ्चाऽतिचारा अत्राऽपि वर्जनीयाः सुचेतसा । अर्थतो नामतश्चाऽपि तानहं कथयामि ते ॥ १३१५ ॥
आद्यस्तावदिहलोकाशंसाप्रयोगनामकः । अहं मनुष्यो भूयासमित्यन्तश्चिन्तनं किल ॥ १३१६ ॥
द्वितीयश्च परलोकाशंसारूपो भवेद्यथा । प्रकृष्टो देवलोको मे भूयादिति विचिन्तनम् ॥ १३१७ ॥

तृतीयो जीविताशंसाप्रयोगः स च जायते । निरीक्ष्य महिमां स्वस्य क्रियमाणां[1] वृषार्थिभिः ॥ १३१८ ॥
चतुर्थो मरणाशंसाप्रयोगोऽनशने सति । क्षुधापीडितगात्रस्याऽसहिष्णोः संप्रजायते ॥ १३१९ ॥
पञ्चमश्च कामभोगाशंसासंज्ञो निवेदितः । शब्दरूपरसाः कामो गन्धस्पर्शौ तथाऽपरौ ॥ १३२० ॥
संलेखनाया विषये दृष्टान्तः कथितः पुरा । सुलसस्य कथायां सुश्रावको जिनशेखरः ॥ १३२१ ॥
एवं संलेखनायुक्तं धर्मं शान्तिजिनोदितम् । आकर्ण्याऽमृतसिक्तेव बभूव सकला सभा ॥ १३२२ ॥
अत्रान्तरे समुत्थाय चक्रायुधमहीपतिः । नत्वा विज्ञपयामास प्रभुमेवं कृताञ्जलिः ॥ १३२३ ॥
समस्तसंशयध्वान्तनिर्नाशनदिवाकर ! । त्रैलोक्यवन्दित ! श्रीमच्छान्तिनाथ ! नमोऽस्तु ते ॥ १३२४ ॥
दुष्कर्मनिगडान् भङ्क्त्वा रागद्वेषौ तथाऽप्यरी । भवगुप्तिगृहात्त्वं मामरं निःसारय प्रभो ! ॥ १३२५ ॥
भवजन्मजरामृत्युवह्निदीप्ताद्भवौकसः । दीक्षाहस्तावलम्बेन निस्तारय जिनेश ! माम् ॥ १३२६ ॥
पुत्रप्रदत्तराज्योऽसौ पञ्चत्रिंशन्नृपान्वितः । दीक्षितोऽथ जिनेन्द्रेण चक्रायुधधरापतिः ॥ १३२७ ॥
ततः पृच्छां करोति स्म प्रभो ! किं तत्त्वमित्यसौ । उत्पत्तिरिति तत्त्वं तु समाचख्यौ जिनेश्वरः ॥ १३२८ ॥
एवं विचिन्तयामास गत्वैकान्ते स बुद्धिमान् । उत्पद्यन्तेऽनुसमयं जीवा नारकिकादयः ॥ १३२९ ॥
एवमुत्पद्यमानास्ते जन्तवो भुवनत्रये । कथं भवन्ति चेदन्या गतिः क्वापि भवेन्न हि ? ॥ १३३० ॥

[1] धर्मार्थिभिः ।

पुनः पप्रच्छ भगवन् ! किं तत्त्वमिति राड् यतेः । विगमस्तत्त्वमित्याख्यत्तस्मै च त्रिजगद्गुरुः ॥ १३३१ ॥
पुनः स दध्यौ च सर्वविगमे शून्यता भवेत् । किं तत्त्वमिति भूयोऽपि ततः पप्रच्छ तीर्थपम् ॥ १३३२ ॥
स्थितिस्तत्त्वमिति पुनर्जिनेन कथिते सति । जीवस्वरूपमखिलं ततो विज्ञातवानसौ ॥ १३३३ ॥
त्रिपद्या अनुसारेण द्वादशाङ्गानि स क्षणात् । विदधे गाढप्रज्ञावानेवमन्येऽपि तेऽखिलाः ॥ १३३४ ॥
द्वादशाङ्गीं विधायाऽगुस्ते सर्वे जिनसन्निधौ । तद्विज्ञायाऽऽसनवरादुत्तस्थौ भगवानपि ॥ १३३५ ॥
अत्रान्तरे सहस्राक्षः स्थालं सद्गन्धपूरितम् । समादाय पुरस्तस्थौ शान्तिनाथजिनेशितुः ॥ १३३६ ॥
गन्धान् समस्तसङ्घस्याऽर्पयामास जिनेश्वरः । प्रदक्षिणात्रयं ते च ददिरे परितः प्रभुम् ॥ १३३७ ॥
गन्धाँस्तदुत्तमाङ्गेषु ससङ्घोऽपि जिनोऽक्षिपत् । तेषां गणधरपदस्थापनैवं विनिर्मिता ॥ १३३८ ॥
दीक्षिता जिननाथेन बहवः पुरुषाः स्त्रियः । साधुसाध्वीपरीवारस्ततोऽस्य समजायत ॥ १३३९ ॥
यतिधर्मासमर्था ये पुरुषा महिलास्तथा । श्रावका श्राविकाश्चाऽपि जज्ञिरे ते जिनान्तिके ॥ १३४० ॥
एवं चतुर्विधः सङ्घः समुत्पन्नो जगद्गुरोः । आद्ये समवसरणे शरणे भव्यदेहिनाम् ॥ १३४१ ॥
पौरुष्यन्ते समुत्थाय विशश्राम जिनेश्वरः । गत्वा द्वितीयप्राकारमध्यस्थे देवच्छन्दके ॥ १३४२ ॥
पादपीठे जिनेन्द्रस्य निषण्णः प्रथमो गणी । चक्रे द्वितीयपौरुष्यां व्याख्यानं सदसः पुरः ॥ १३४३ ॥
जैनधर्मस्थिरीकारकारिणीमघहारिणीम् । सङ्घस्य कथयामास सोऽन्तराङ्गकथामिमाम् ॥ १३४४ ॥

क्षेत्रे मनुष्यलोकेऽत्र शरीरे नगरे बली । मोहो नाम महीपालः स्वेच्छया विलसत्यहो ! ॥ १३४५ ॥
मायानाम्नी प्रिया तस्य तनयोऽनङ्गनामकः । लोभनामा महामात्यः क्रोधो योधोऽस्य दुर्धरः ॥ १३४६ ॥
रागद्वेषावतिरथौ मिथ्यात्वं मण्डलेश्वरः । माद्यन्मानगजेन्द्रस्य(श्च) मोहराजस्य वाहनम् ॥ १३४७ ॥
आरूढा इन्द्रियाश्वेषु विषयास्तस्य सेवकाः । एवमाद्यपरं तस्य सैन्यमत्यन्तदुर्धरम् ॥ १३४८ ॥
वसन्ति नगरे तत्र कर्मसंज्ञाः कृषीवलाः । प्राणाश्च वणिजः प्रौढा रक्षको मानसाह्वयः ॥ १३४९ ॥
गुरूपदेशदानेन भेदिते सति मानसे । धर्मराजः ससैन्योऽपि प्रविशेत्तत्र पत्तने ॥ १३५० ॥
तस्याऽप्यार्जवतानाम्नी पट्टराज्ञी मनोहरा । सन्तोषश्च महामात्यः सम्यक्त्वं मण्डलेश्वरः ॥ १३५१ ॥
महाव्रतानि सामन्ताः पत्तयोऽणुव्रतादयः । गजेन्द्रो मार्दवो नाम योधाश्चोपशमादयः ॥ १३५२ ॥
सच्चारित्ररथारूढः सेनानीः श्रुतनामकः । निर्जित्य मोहराजोऽसौ तेन निस्सार्यते पुरात् ॥ १३५३ ॥
ददाति धर्मराजोऽथ सर्वस्याऽऽज्ञामिमां यथा । न मोहस्याऽवकाशोऽत्र देयः केनाऽपि निश्चितम् ॥ १३५४ ॥
एवं कृतेऽपि यः कश्चिद्याति मोहवशं पुनः । स कर्मपरिणत्या हि पुनः संस्थाप्यते पथि ॥ १३५५ ॥
यथाऽनीतिपुरं प्राप्तो रत्नचूडो वणिक्सुतः । विपश्चित्तारितो बुद्धिदानतो यमघण्टया ॥ १३५६ ॥
क एष रत्नचूडाख्य इति सङ्घेन जल्पिते । कथयामास गणभृत्तत्कथां चित्रकारिणीम् ॥ १३५७ ॥
इहाऽस्ति भरतक्षेत्रे वार्द्धिवेलासमाकुले । महेभ्यजनसम्पूर्णा ताम्रलिप्तीति सत्पुरी ॥ १३५८ ॥

सद्वृत्तः सरसः श्रीमान्मर्यादालङ्कृतः सदा । श्रेष्ठी रत्नाकरस्तत्र रत्नाकर इवाऽभवत् ॥ १३५९ ॥
पुण्यनैपुण्यलावण्यदाक्षिण्यगुणभूषिता । बभूव वनितासारा तस्य पत्नी सरस्वती ॥ १३६० ॥
करप्राप्तमहारत्नशिखोद्योतितमन्दिरम् । निशाशेषेऽन्यदा स्वप्नं दृष्ट्वा पत्युः शशंस सा ॥ १३६१ ॥
प्रिये ! ते तनयो भावीत्युक्ता तेन जहर्ष सा । प्रशस्तलक्षणैर्युक्तं समये सुषुवे सुतम् ॥ १३६२ ॥
रत्नचूडाभिधानोऽयं चक्रे स्वप्नानुसारतः । जनकेन कलाभ्यासं कारितः समये तथा ॥ १३६३ ॥
उद्यौवनः समं मित्रैरलङ्कारवराञ्चितः । स्वैरं विहरति स्माऽसौ नगरोपवनादिषु ॥ १३६४ ॥
हट्टमार्गेऽन्यदा तेन गच्छताऽभिमुखागता । सौभाग्यमञ्जरी वेश्या दूनांसेन कथञ्चन ॥ १३६५ ॥
राज्ञो वारविलासिन्या धृत्वा प्रच्छादनाञ्चले । सोपहासं साभ्यसूयं तथैवं भणितोऽथ सः ॥ १३६६ ॥
हंहो वाक्यमिदं सत्यं वदन्तीति विपश्चितः । धनेनाऽनेडमूकत्वं[1] यद्भवेत् पश्यतोऽपि हि ॥ १३६७ ॥
यस्त्वं दिवाऽपि बालोऽपि विपुलेऽपि चतुष्पथे । न मामभिमुखं स्वस्याऽऽगच्छन्तीमपि पश्यसि ॥ १३६८ ॥
अयं धनमदः किंतु तव कर्तुं न युज्यते । येनेदमपि नीतिज्ञाः प्रवदन्ति मनीषिणः ॥ १३६९ ॥
पित्रोपार्जितवित्तेन विलासं कुरुते न कः । स श्लाघ्यो यः स्वयं लक्ष्मीमुपार्ज्य विलसत्यहो ! ॥ १३७० ॥
एवमुक्त्वाऽथ मुक्त्वा तं स्वस्थानं गणिका ययौ । तच्छ्रुत्वा रत्नचूडोऽपि मनस्येवमचिन्तयत् ॥ १३७१ ॥

---

१ बधिरमूकत्वम् ।

अहो ! अस्या वचः सत्यं करणीयं मया खलु । बालादपि हितं ग्राह्यं पठ्यतेऽदो बुधैर्यतः ॥ १३७२ ॥
सविषादममुं गेहप्राप्तं दृष्ट्वाऽवदत् पिता। अद्याऽऽख्याति सचिन्तत्वं वत्स! ते श्यामवक्त्रता ॥ १३७३ ॥
तद्ब्रूहि किमसंपूर्णं वर्तते तव पुत्रक ! । किमेकतनयस्याऽपि पूरयिष्यामि नेप्सितम् ? ॥ १३७४ ॥
किञ्चिद्विहस्य सोऽथाऽऽख्यादर्थोपार्जनहेतवे । तात ! देशान्तरे गन्तुमिच्छामि त्वदनुज्ञया ॥ १३७५ ॥
भूयो रत्नाकरोऽवोचत् पुत्राग्रेऽपि धनं बहु । विद्यते मद्गृहे तेन पूरय स्वसमीहितम् ॥ १३७६ ॥
देशान्तरोऽतिविषमो गन्तुं शक्योऽतिकर्कशैः । सुकुमारतनुस्त्वं तु कथं तत्र गमिष्यसि ॥ १३७७ ॥
इन्द्रियाणि वशे यस्य स्त्रीभिर्यो न विलुभ्यते। वक्तुं यो वा विजानाति याति देशान्तराणि सः ॥ १३७८ ॥
ततो देशान्तरे गत्वा वत्स! किं त्वं करिष्यसि ?। या मयोपार्जिता लक्ष्मीः सा त्वदीयैव सर्विका ॥ १३७९ ॥
एवमुक्तोऽप्यसौ यावन्न मुमोच तमाग्रहम् । ततो विसृष्टः पित्राऽपि किं न स्यान्निश्चये कृते ॥ १३८० ॥
ततः स्वोद्धारके द्रव्यलक्षमादाय पैतृकम् । उपाददौ भाण्डजातं स देशान्तरलाभदम् ॥ १३८१ ॥
रैया प्रवहणं किञ्चिद्गृहीत्वा तत्क्रयाणकम् । तत्र निक्षेपयामास प्रगुणश्च बभूव सः ॥ १३८२ ॥
ददौ शिक्षामिमां तस्मै श्रेष्ठी यद्वत्सक ! त्वया । नगरे न हि गन्तव्यमनीतिपुरनामनि ॥ १३८३ ॥
अन्यायस्तत्र भूपोऽस्ति सचिवस्त्वविचारकः। सर्वग्राह्याऽऽरक्षकश्चाऽशान्तिनामा पुरोहितः ॥ १३८४ ॥

१ धनेन ।

गृहीतभक्षकः श्रेष्ठी मूलनाशश्च तत्सुतः । रणघण्टेति गणिका यमघण्टा च कुट्टिनी ॥ १३८५ ॥
द्यूतकारचौरपारदारिकाद्या अनेकशः । वसन्ति सततं तत्र लोका उच्चगृहस्थिताः ॥ १३८६ ॥
अविज्ञातस्वरूपो यस्तत्र याति वणिज्यया । गृह्यते तस्य सर्वस्वं तल्लोकैर्वञ्चनापरैः ॥ १३८७ ॥
तदनीतिपुरं मुक्त्वा गत्वाऽन्यत्र यदृच्छया । व्यवहारस्त्वया कार्यो वत्स ! शिक्षा ममेदृशी ॥ १३८८ ॥
इत्यादिविविधां शिक्षां तद्दत्तां प्रतिपद्य सः । कृतमङ्गलोपचारः शुभेऽह्नि चलितो गृहात् ॥ १३८९ ॥
अन्वीयमानः स्वजनैः शकुनोत्साहितश्च सः । तत्र याने समारूढो विनिवृत्तानुयातृकः ॥ १३९० ॥
ततः सितपटस्फीतः स धीवरगुणोत्करः । संचचार संवरान्तः पोतः संयतसन्निभः ॥ १३९१ ॥
कूपस्तम्भोपविष्टेन पुंमालोकितपद्धतिः । धीवरैरीप्सितद्वीपं प्रत्यचाल्यत सोऽन्वहम् ॥ १३९२ ॥
भवितव्यनियोगेन तत्र द्वीपे जगाम सः । यत्राऽनीतिपुरं नाम प्रसिद्धं विद्यते पुरम् ॥ १३९३ ॥
दृष्ट्वा तं पोतमायान्तं पुरस्याऽस्य जनोऽखिलः । हृष्टोऽवलोकयामास तस्याऽभिमुखमुच्चगः॥ १३९४ ॥
तं वीक्ष्य शङ्कितो रत्नचूडो निर्यामकाश्च ते । पृच्छन्ति स्म नरं कञ्चिद्वेलाकूलमुपागतम् ॥ १३९५ ॥
भद्रायं कतमो द्वीपः किमेतन्नगरं तथा । सोऽवदच्चित्रकूटाख्यो द्वीपोऽयं विदितो जने ॥ १३९६ ॥
पूर्वाख्याते च पूर्नाम्नि पुंसा तेन निवेदिते । दध्यौ श्रेष्ठिसुतो दैवात्संजातं न हि सुन्दरम्॥ १३९७ ॥
निषिद्धो यत्र तातेन तत्रैवाऽहं यदागमम् । परं मे वाञ्छितो लाभो नूनमत्र भविष्यति ॥ १३९८ ॥ ( युग्मम् )

प्रशस्ताः शकुना यानेऽनुकूलपवनस्तथा । उत्साहो मनसश्चैतत्सर्वं लाभस्य सूचकम् ॥ १३९९ ॥
ततो यानात्समुत्तीर्य प्रसन्नवदनाम्बुजः । निवासमकरोद्वेलाकूले श्रेष्ठिसुतोऽथ सः ॥ १४०० ॥
तत्र चाऽऽनाययामास भाण्डं कर्मकरैस्तथा । ददौ शुल्कधनं देयं राजपश्चकुलस्य यत् ॥ १४०१ ॥
आययुर्वणिजस्तत्र चत्वारो नगरान्तरात् । ते रत्नचूडमित्यूचुः स्वागतप्रश्नपूर्वकम् ॥ १४०२ ॥
श्रेष्ठिपुत्र! यदत्र त्वं मुक्त्वाऽन्यस्थानमागतः । तत्साधु विदधे येन वयं ते स्वजनाः किल ॥ १४०३ ॥
ग्रहीष्यामो वयं सर्वं तावकीनं क्रयाणकम् । यतो भावी तवाऽऽयासः कुर्वतः क्रयविक्रयम् ॥ १४०४ ॥
इदमस्य हि मूल्यं यद्वस्तुभिस्त्वयकोदितैः । यानं ते पूरयिष्यामो गच्छतो नगरं निजम् ॥ १४०५ ॥
एवमस्त्विति तेनोक्ते सर्वं तस्य क्रयाणकम् । विभज्य स्वस्वगेहेषु निन्ये तैः कूटबुद्धिभिः ॥ १४०६ ॥
ततः पदातिसंयुक्तो वस्त्राद्याडम्बरान्वितः । स चचाल पुरस्यान्तर्द्रष्टुमन्यायभूपतिम् ॥ १४०७ ॥
कारुरत्रान्तरे कश्चिदुपानद्युगलं वरम् । तस्योपढौकयामास स्वर्णरूप्यादिमण्डितम् ॥ १४०८ ॥
दापयित्वाऽथ ताम्बूलं तस्मै श्रेष्ठिसुतोऽवदत् । करिष्ये त्वामहं हृष्टमित्युक्त्वा चाऽग्रतोऽगमत् ॥ १४०९ ॥
एकाक्षः कितवः कश्चिदथो रत्नाकरात्मजम् । इत्युवाच सहस्रेण द्रव्यस्य मयका किल ॥ १४१० ॥
स्वनेत्रं त्वत्पितुः पार्श्वे मुक्तं ग्रहणकेऽस्ति भोः । त्वत्तोऽहं तद्ग्रहीष्यामि गृहाण त्वं तु तद्धनम् ॥ १४११ ॥ ( युग्मम् )
इत्युदित्वाऽऽर्पयदसौ रत्नचूडस्य तद्धनम् । दध्यौ सोऽथाऽघटमानं वाक्यमेष वदत्यहो! ॥ १४१२ ॥

तथाऽप्युपस्थितं वित्तं स्वायत्तं प्रकरोम्यहम् । पश्चादत्रोत्तरं किञ्चिद्युक्तं तत्करिष्यते ॥ १४१३ ॥
एवं विचिन्त्य तद्दत्तं गृहीत्वा तमभाषत । आगन्तव्यं त्वयाऽऽवासे समेतस्य ममाऽन्तिकम् ॥ १४१४ ॥
ततश्च पुरतो यान्तं तं दृष्ट्वा श्रेष्ठिनन्दनम् । जजल्पुरेवमन्योऽन्यं चत्वारो व्यंसका[1] नराः ॥ १४१५ ॥
तत्रैकःस्माह—
नीरमानं समुद्रस्य गङ्गायाः सिकतामितिम् । बुद्धिमन्तो विजानन्ति न स्त्रियो हृदयं पुनः ॥ १४१६ ॥
द्वितीयोऽवोचदत्युक्तिः केनाऽप्येषा प्रजल्पिता । यथा स्त्रीहृदयं तद्वद्द्वयं वेत्ति न कोऽप्यदः ॥ १४१७ ॥
तृतीयः स्माह नाऽसत्यं पूर्वसूरिसुभाषितम् । परं शुक्रगुरुप्रख्यैः कैश्चिद्विज्ञायतेऽप्यदः ॥ १४१८ ॥
अथ प्रोक्तं चतुर्थेन ताम्रलिप्त्याः समागतः । बालोऽप्येष विजानाति सर्वमेतच्छुभाकृतिः ॥ १४१९ ॥
ततश्चाऽन्योऽवदद्दूरे वर्तते सा सुरापगा । त्वं रत्नाकरनीरस्य मानमेनं हि कारय ॥ १४२० ॥
एवं कृत्वा हठाद्वादं तेन प्रोत्साहितस्तथा । तमर्थं श्रेष्ठिपुत्रोऽपि यथाऽङ्गीकृतवानयम् ॥ १४२१ ॥
त्वमेवं यदि कर्ताऽसि तदा नः कमला तव । न चेद्वयं ग्रहीष्यामश्चत्वारोऽपि श्रियं तव ॥ १४२२ ॥
इत्युदित्वाऽमुना सार्धं विदधे तैः कराहतिः । रत्नचूडोऽपि तत्कृत्वा चचाल पुरतस्ततः ॥ १४२३ ॥

१ धूर्ताः ।

स एवं चिन्तयामास यादृक् पित्रा ममोदितः । तादृगेव जनः सर्वः स्थानीयोऽत्र प्रवर्तते ॥ १४२४ ॥
एतेषां हन्त कार्याणां निर्वाहो भविता कथम् । अथवा याम्यहं तावद्गणिकाया निकेतनम् ॥ १४२५ ॥
यत्सानेकमनुष्याणां चित्तरञ्जनकर्मठा । जानाति विविधोपायान् बुद्धिदात्री ममाऽप्यतः ॥ १४२६ ॥
अथ तत्र गतस्याऽस्याऽभ्युत्थानं विदधे तया । तेनाऽपि दत्तमेतस्यै तद्वित्तं कितवार्पितम् ॥ १४२७ ॥
अभ्यङ्गोद्वर्तनस्नानभोजनानि सगौरवम् । कारितानि तया तस्य सन्ध्याकालस्ततोऽभवत् ॥ १४२८ ॥
स तस्या वासगेहेऽथ शयनीये मनोहरे । निषसाद पुरः साऽस्य स्फारभृङ्गारशोभिता ॥ १४२९ ॥
यावत् प्रकर्तुमारेभे सा गोष्ठीं वैदुषाञ्चिता । तावदाख्याय वार्तां स्वामित्यूचे श्रेष्ठिसूनुना ॥ १४३० ॥
अयि त्वमत्र वास्तव्या वेत्सि स्वपुरचेष्टितम् । किमेतेषां विवादानां वद कार्यं मयोत्तरम् ॥ १४३१ ॥
अस्मिन्निर्वाहिते कार्ये रङ्गवार्तां त्वया सह । अहं सुभ्रु करिष्यामि सचिन्तोऽस्म्यधुना पुनः ॥ १४३२ ॥
प्रत्यूचे धीमती सा तं शृणु सुन्दर ! कारणम् । दैवादिह समायाति यः कश्चिद् व्यवहारिकः ॥ १४३३ ॥
स एतैर्गृह्यते मर्वैः सर्वस्वं वञ्चनापरैः । उपात्तविभवस्यांशो दीयते तु महीपतेः ॥ १४३४ ॥
सचिवस्य द्वितीयोंऽशस्तृतीयः श्रेष्ठिनस्तथा । आरक्षकस्य तुर्यांशः पञ्चमस्तु पुरोधसः ॥ १४३५ ॥
मन्मातुर्यमघण्टायाः षष्ठोंऽशस्तत्र दीयते । सर्वोऽपि करणाचारस्तदग्रे क्रियते परम् ॥ १४३६ ॥

१ न्यायः ।

अतिप्रज्ञावती सा तूत्तरप्रत्युत्तरादिकम् । तेषां सर्वं ममाख्याति योग्यं स्वस्य परस्य च ॥ १४३७ ॥
समीपे यमघण्टायास्त्वां नेष्याम्यात्मना सह । तत्रोपविष्टः श्रोताऽसि तद्वार्तां त्वमपि स्फुटम् ॥१४३८॥
इत्याख्याय स्त्रियो वेषं परिधाप्य तयाऽथ सः । निन्ये समीपमकायास्तदौदार्यप्रहृष्टया ॥ १४३९ ॥
कृत्वा प्रणाममासीना कुट्टिन्या भणिता सुता । हे वत्से ! बालिका केयमागतेह त्वया सह ? ॥ १४४० ॥
साऽऽख्यद्रूपवतीनाम्नी श्रीदत्तश्रेष्ठिनः सुता । हे अम्ब ! बालिकेयं मे वयस्या प्राणवल्लभा ॥ १४४१ ॥
ममैकवारं पूर्मध्ये संचरन्त्या यथा तथा । मिलत्येषा दिनेऽस्मिँश्च व्याक्षिप्ताऽभूत्स्वमन्दिरे ॥ १४४२ ॥
कृत्वा मिषान्तरं किञ्चिद्भिःसृत्याऽऽगारतोऽधुना । ममेयं मिलनायाऽऽगादानीता च ततो मया ॥१४४३ ॥
अत्रान्तरेऽन्तिकेऽकाया वणिजस्ते समागताः । सकलं रत्नचूडस्य जगृहे यैः क्रयाणकम् ॥ १४४४ ॥
न्यस्तासनोपविष्टास्ते भणिता यमघण्टया । नन्वद्य यानिकः[1] कश्चिदिहाऽऽयातः श्रुतो मया ॥ १४४५ ॥
तेऽत्रोचन्नागतोऽस्त्यत्र स्तम्भतीर्थाद्वणिक्सुतः । सोचे तत्राऽऽगते लाभो जातः कश्चन वो न वा ॥ १४४६ ॥
ततः क्रयाणकग्राहे तथा तैः कथिते सति । कुट्टिन्युवाच नो लाभः सा हानिर्भवतामहो ॥ १४४७ ॥
कथं हानिरियमिति पृष्टे तैः साऽभ्यधात् पुनः । तदिष्टवस्तुना यानं पूरणीयं हि तस्य यत् ॥ १४४८ ॥
इच्छा चाऽनेकरूपा स्यात्ततोऽसौ मशकाऽस्थिभिः । चेत्कारयति पूर्णं तत् यूयं कुरुत भोः किमु? ॥ १४४९ ॥

---

१ नाविकः ।

अजल्पुस्ते न तस्येदृग्धीप्रपञ्चो भविष्यति । येनाऽसौ बालको मुग्धोऽप्रगल्भवचनस्तथा ॥ १४५० ॥
जगाद कुट्टिनी बाल इत्यवज्ञाऽत्र नोचिता । बालोऽपि स्यात् सुधीः कश्चित्कश्चिद्वृद्धोऽप्यपण्डितः ॥१४५१॥
अन्यच्च—धूर्तलोकोचितमिदं वेत्ति सर्वोऽपि पत्तनम् । स एवाऽत्र समायाति यस्य स्याच्छेमुषीबलम्[1]॥१४५२॥
संजाते भवतां लाभे भवेल्लाभो ममाऽपि भोः । न ह्यात्मा प्रीणनीयोऽयं परं व्यर्थमनोरथैः ॥ १४५३ ॥
इत्युक्तास्ते ययुः स्वौकः सोऽथ शिल्पी समागतः । विप्रकृष्टोपविष्टः[2] सन्नित्यूचे विकसन्मुखः ॥ १४५४ ॥
अक्काद्य श्रेष्ठिनः पुत्रः कश्चिदत्राऽऽययौ पुरे । अर्पितं मयका तस्योपानद्युग्मं मनोहरम् ॥ १४५५ ॥
करिष्यामि प्रहृष्टं त्वामित्युक्तोऽस्म्यमुना ततः । गृहीते तस्य सर्वस्वे भाविनी मे प्रहृष्टता ॥ १४५६ ॥
ततोऽहमीदृशं वार्तामागां तव निवेदितुम् । तवाऽपि भविता भागस्तद्वित्तस्याऽम्बिके ! यतः ॥ १४५७ ॥
अक्काऽवोचदरे कौरो[3] ! स्वानुरूपो मनोरथः । कर्तव्यः पुरुषेणेह तल्लो(ल्ला)भः क्व तवेदृशः? ॥ १४५८ ॥
नरेन्द्रतनयोत्पत्तिं निवेद्य त्वामसौ यदा । हृष्टो नो वेति वक्ता भोस्तदा ते कीदृशी गतिः? ॥ १४५९ ॥
ययौ सोऽपि ततश्चाऽऽगाद् द्यूतकारः स एकदृक् । सोऽप्याऽऽत्मधूर्ततावार्तां कुट्टिन्यग्रे न्यवेदयत् ॥ १४६० ॥
विहस्य यमघण्टोचे तवाऽहो कूटसूत्रणा[4] । परं तत्र कृतं साधु दत्तं स्वं तस्य यत्त्वया ॥ १४६१ ॥
सोऽब्रवीत्तद्धनादानसत्यङ्कार इवाऽर्पितम् । मया हि स्वधनं तस्य तत्त्वं वक्षीदृशं कथम् ? ॥ १४६२ ॥

---

१ बुद्धिबलम् । २ दूरमुपविष्टः । ३ शिल्पिन् । ४ कूटरचना ।

कुट्टिन्युवाच नो शक्यं हर्तुं केनाऽपि तद्धनम् । सोऽवदन्म दुग्रहान्मोक्षः कथं तस्य भविष्यति ? ॥ १४६३ ॥
अक्का भूयोऽभ्यधादक्षि कस्याऽप्यन्यस्य देहिनः । तद्रूपमथवा वस्तु तवाऽयं ढौकयिष्यति ॥ १४६४ ॥
मामकीनमिदं नाक्षि यदा वक्ता भवाँस्तदा । क्षिप्त्वा तोलनयन्त्रे तत्त्वामेवं संवदिष्यति ॥ १४६५ ॥
क्षिपाऽत्र नेत्रमात्मीयं तुल्ये जाते उभे अपि । ग्राह्ये इमे त्वयेत्युक्तस्तेन त्वं किं करिष्यसि ?॥ १४६६ ॥
जगाद कितवो बुद्धिकौशलं हि तवेदृशम् । ततोऽस्य गृहसर्वस्वं मम हस्तगतं खलु ॥ १४६७ ॥
उत्थाय प्रययौ सोऽपि ततस्ते व्यंसका नराः । आगत्य कथयामासुस्तस्यास्तामात्मनः कथाम् ॥ १४६८ ॥
तयेति भणितास्तेऽथ प्रपञ्चे भवतामपि । न किञ्चिदपि पश्यामि स्वार्थे निजमनीषया ॥ १४६९ ॥
मया समुद्रनीरस्य मानं कार्यं हि सर्वथा । युष्माभिर्निम्नागातोयं पृथक्कार्यं ततः पुनः ॥ १४७० ॥
इत्युक्तास्तेन तत्कर्तुमशक्ता यूयमेव भोः । लप्स्यध्वे गृहसर्वस्वहरणं दीनवादिनः ॥ १४७१ ॥ युग्मम् ॥
ययुस्तेऽपि निजं स्थानं तत्सर्वं श्रेष्ठिनन्दनः । श्रुत्वा बभार चित्ते स्वे प्रहृष्टो गुरुवाक्यवत् ॥ १४७२ ॥
ततः स्थानात्समुत्थाय स समं रणघण्टया । आययौ तद्गृहे तां चाऽनुज्ञाप्याऽगान्निजाश्रये॥ १४७३ ॥
ततश्च कुट्टिनीप्रोक्तोपायेन सकलान्यपि । कार्याणि साधयामास रत्नचूडो महामतिः ॥ १४७४ ॥
भाण्डग्राहिवणिक्पार्श्वाच्चतुर्लक्षमितं धनम् । वार्घ्यम्बुचारिकारिभ्योऽप्येतावत्सोऽग्रहीद्बलात् ॥ १४७५ ॥
तेन व्यतिकरेणाऽयं बभूव विदितः पुरे । अन्येद्युरुपदापाणिर्ययौ च नृपसन्निधौ ॥ १४७६ ॥

कृतप्रणाममासीनं तमथो मेदिनीपतिः । पप्रच्छ सर्ववृत्तान्तं सोऽपि तस्य शशंस तम् ॥ १४७७ ॥
सोऽथाऽवोचदहो ! अस्य पुंसो महात्म्यमद्भुतम् । येनाऽस्मन्नगरस्याऽपि लोकाद्वित्तमुपाददे ॥ १४७८ ॥
तं जगाद च भो भद्र ! तुष्टोऽहं किं करोमि ते । ययाचे रत्नचूडोऽपि नृपात्तां गणिकां प्रियाम् ॥ १४७९ ॥
ततो राज्ञा समादिष्टा जज्ञेऽसावस्य गेहिनी । तस्याश्च कारयामास प्रभूताभरणान्यसौ ॥ १४८० ॥
एवं संप्राप्ते लाभेऽसावुपादाय क्रयाणकम् । तेन संपूर्य यानं च स्वस्थानगमनोत्सुकः ॥ १४८१ ॥
तत्राऽधिरूढः क्षेमेण निस्तीर्य सरितां पतिम् । स्तोकैरेव दिनैरागात् पुनस्तां नगरीं निजाम् ॥ १४८२ ॥ युग्मम् ॥
श्रेष्ठी पुरोगतेनैकपुंसा रत्नाकरोऽथ सः । संवर्धितः प्रमोदेन तदागमनवार्तया ॥ १४८३ ॥
गत्वाऽप्यभिमुखमेतेन महोत्सवपुरस्सरम् । निजावासं समानिन्ये सप्रियस्तनयो निजः ॥ १४८४ ॥
रत्नचूडः सदारोऽपि प्राणमच्चरणद्वयीम् । पितुर्मातुः शुभाशीर्भिस्तं चाऽवर्धयतामिमौ ॥ १४८५ ॥
पित्रा पृष्टः स्ववृत्तान्तं सोऽथ सर्वं न्यवेदयत् । तं श्रुत्वा प्रमदं श्रेष्ठी बभार हृदयेऽधिकम् ॥ १४८६ ॥
ईषच्च वर्णयामास तद्गुणान् वचसा यतः । पुत्रप्रशंसा गुरुभिः प्रायेण क्रियते न हि ॥ १४८७ ॥
गृहीत्वाऽक्षतपात्राणि लोकस्तस्याऽऽययौ गृहे । संमाननं यथायोग्यं कृत्वा तं विससर्ज सः ॥ १४८८ ॥
सौभाग्यमञ्जरी सा तु वेश्या तं द्रष्टुमागता । आसयित्वाऽऽसने रत्नचूडेनैवं प्रजल्पिता ॥ १४८९ ॥
भद्रे ! त्वदुपदेशेन गत्वा देशान्तरे मया । उपार्जितेयं कमला कमलाक्षी च वल्लभा ॥ १४९० ॥

वस्त्राभरणसन्दोहैः साऽपि संमानिताऽमुना । ऊचेऽहमपि राज्ञाऽनुज्ञाता स्यां गृहिणी तव ॥ १४९१ ॥
उपायनेन भूपालस्तोषितोऽनेन भूयसा । ततश्चाऽनुज्ञया राज्ञो जज्ञे साऽप्यस्य गेहिनी ॥ १४९२ ॥
ततस्तेन पितुर्द्रव्यं पितुरेव परिग्रहे । विदधे शेषद्रव्येण त्यागभोगौ चकार सः ॥ १४९३ ॥
अन्यानि च कलत्राणि विधिना परिणीतवान् । कारयामास नगरे तत्रोच्चैर्जिनमन्दिरम् ॥ १४९४ ॥
चिरं भोगश्रियं भुक्त्वा जातपुत्रः सकोऽन्यदा । शुश्राव सद्गुरोः पार्श्वे धर्मं प्रव्रजितस्ततः ॥ १४९५ ॥
प्रव्रज्यां पालयित्वाऽथ विपद्याऽन्ते समाधिना । गतः स्वर्गं महानन्दपदं च स ययौ क्रमात् ॥ १४९६ ॥

अत्रोपनयः कार्यः—

सुकुलं मर्त्यजन्मेदं भव्यप्राणी वणिक्सुतः । जनको धर्मबोधोऽस्य गुरुर्वा हितकारकः ॥ १४९७ ॥
श्रद्धादिजनितप्रोत्साहना वेश्यात्रचःसमा । पुण्यलक्ष्म्या उपचयं कर्तुं साऽपि भवेद्यतः ॥ १४९८ ॥
मूलद्रव्यं च चारित्रमर्पितं गुरुणा स्वयम् । अनिष्टपूर्निषेधश्च स्मारणा वारणा गुरोः ॥ १४९९ ॥
संयमोऽयं महापोतस्तरणीयो भवाम्बुधिः । कर्णधारकतुल्याश्च साधर्मिकतपोधनाः ॥ १५०० ॥
भवितव्यनियोगाभः प्रमादः परिकीर्तितः । अनीतिपुरसंकाशं दुःप्रवृत्तिप्रवर्तनम् ॥ १५०१ ॥
अन्यायभूपतिर्मोहो भाण्डग्राहिवणिक्समाः । कषायास्तत्र चत्वारो विवेकधनहारिणः ॥ १५०२ ॥
विषयाशा च वेश्येव साऽक्का कर्मपरीणतिः । सा च पूर्वभवकृता जन्तोः सुमतिदायिनी ॥ १५०३ ॥

उल्लंघ्य सर्वमशुभं तत्प्रभावेणं देहभृत् । पुनरानीयते धर्ममार्गे जन्मक्षिताविव ॥ १५०४ ॥
इत्याद्युपनयः सर्वो यथायोगं मनीषिभिः । करणीयो धर्मविधिर्धर्मपुष्टिविधित्सया ॥ १५०५ ॥

॥ इति रत्नचूडकथा ॥

कृता गणधरेणैवं प्रवरा धर्मदेशना । कथिता द्वादशाङ्गी च या स्वयं तेन निर्मिता ॥ १५०६ ॥
साधूनां च दशविधा सामाचारी प्रकाशिता । तेषामशेषकृत्यं च श्रुतकेवलिनाऽमुना ॥ १५०७ ॥
इति शान्तिजिनवरो विजहार महीतले । भव्याम्बुजवनं नित्यं रविवत्प्रतिबोधयन् ॥ १५०८ ॥
केचिद्भगवतः पार्श्वे प्रव्रज्यां जगृहुर्जनाः । गृहस्थधर्मं केचिच्च शुभभावात्प्रपेदिरे ॥ १५०९ ॥
केचनाऽविरतसम्यग्दृष्टयो भद्रकाः परे । संजायन्ते स्म भगवच्छ्रीशान्तिप्रतिबोधिताः ॥ १५१० ॥
सर्वस्याऽपि तमो नष्टमुदिते जिनभास्करे । कौशिकानामिवाऽन्धत्वमभव्यानामभूच्च तत् ॥ १५११ ॥
वह्निनाऽपि न सिध्यन्ति यथा कंकटुकाः कणाः । तथा सिद्धिरभव्यानां जिनेनाऽपि न जायते ॥ १५१२ ॥
यथोषरक्षितौ धान्यं न स्याद्वृष्टेऽपि नीरदे । बोधो न स्यादभव्यानां जिनदेशनया तथा ॥ १५१३ ॥
यत्र यत्र जनपदे श्रीशान्तिर्व्यहरत् प्रभुः । सर्वदुरितोपशान्तिस्तत्र तत्राऽभवज्जने ॥ १५१४ ॥
नाऽभूवन् योजनशतमध्ये विहरति प्रभौ । दुर्भिक्षडमरादीनि पीडाकारीणि देहिनाम् ॥ १५१५ ॥
फलपुष्पाकुला वृक्षा वसुधा सुखसञ्चरा । पञ्चविंशतियोजन्यामभूदेवं जिनागमे ॥ १५१६ ॥

इत्यादिजिनमाहात्म्यं विश्वविस्मयकारकम् । कियदस्मादृशैस्तुच्छबुद्धिभिर्भण्यते भुवि ॥ १५१७ ॥
यो न पल्योपमायुष्को यो न जिह्वासहस्रकः । स कथं वर्णयत्येतत्पुण्यमाहात्म्यमर्हताम् ? ॥ १५१८ ॥
विजानाति जिनेन्द्राणां को निःशेषगुणोत्करम् । त एव हि विजानन्ति दिव्यज्ञानेन तं पुनः ॥ १५१९ ॥
इत्यद्भुतैकचरितः श्रीशान्तिजिनपुङ्गवः । विजहार धरापीठे लोकानां हितकाम्यया ॥ १५२० ॥
चक्रायुधगणधरः सह शान्तिजिनेन्दुना । विचचार प्रकुर्वाणः शुश्रूषां तस्य भूतले ॥ १५२१ ॥
जानन्नपि विभोः पार्श्वे चक्रे पृच्छा अनेकशः । प्रतिबोधकृते भव्यजीवानां भगवानसौ ॥ १५२२ ॥
एवं शान्तिजिनेन्द्रेण पृथ्व्यां विहरता सता । सद्विषष्टिसहस्राणि दीक्षिता मुनिपुङ्गवाः ॥ १५२३ ॥
एकषष्टिसहस्राणि षट्शतैरधिकानि च । प्रभुणा दीक्षितास्तेन श्रमण्यः शीलशोभिताः ॥ १५२४ ॥
सत्सम्यक्त्वगुणभृतां सुश्राद्धव्रतधारिणाम् । जीवाजीवादिसत्तत्त्ववेदिनां पापभेदिनाम् ॥ १५२५ ॥
धर्मादक्षोभणीयानां रक्षोयक्षामरादिभिः । अस्थिमज्जानुरागेण रक्तानां जिनशासने ॥ १५२६ ॥
समुच्छ्रितफलहकापिहितद्वारवेश्मनाम् । नित्यं त्यक्तप्रवेशानां परौकोऽन्तःपुरादिषु ॥ १५२७ ॥
जिनवाक्यमेतदर्थः परमार्थस्तथैव च । अनर्थं शेषमित्यग्रे सर्वलोकस्य शंसताम् ॥ १५२८ ॥
चतुर्दश्यष्टमीराकाऽमावास्यासु च पौषधम् । कुर्वतामशनाद्यैश्च प्रतिलाभयतां मुनीन् ॥ १५२९ ॥
श्रीशान्तिजिननाथेन बोधितानामगारिणाम् । नवतिसहस्रायुक्ता जाता लक्षद्वयी वरा ॥ १५३० ॥ षड्भिः कुलकम्

पूर्वोदितगुणैर्युक्ताः श्राविकास्त्रिजगद्गुरोः । त्रिनवतिसहस्राणि त्रीणि लक्षाणि चाऽभवन् ॥ १५३१ ॥
अजिनानां जिन इवाऽतीताऽनागतवेदिनाम् । चतुर्दशपूर्वभृतां सहस्राण्यष्ट चाऽभवन् ॥ १५३२ ॥
पश्यतां रूपिद्रव्याणि सङ्ख्यातान्नृभवाँस्तथा । सहस्रत्रितयं शान्तेरवधिज्ञानिनामभूत् ॥ १५३३ ॥
विदुषां समयक्षेत्रगतसंज्ञिमनोरथान् । मनःपर्ययवतां जाता सहस्रचतुष्टयी ॥ १५३४ ॥
तथा चतुःसहस्राणि बभूवुस्त्रिशतानि च । केवलज्ञानयुक्तानां साधूनां सर्वदर्शिनाम् ॥ १५३५ ॥
वैकुर्विकलब्धीनां षट्सहस्राणि चाऽभवन् । चतुःशताधिके द्वे तु सहस्रे वादिनां तथा ॥ १५३६ ॥
वैयावृत्त्योद्यतो नित्यं ध्वस्तप्रत्यूहसञ्चयः । यक्षोऽभूद्गरुडो नाम्ना तीर्थे शान्तिजिनेशितुः ॥ १५३७ ॥
सर्वदा कृतसान्निध्या निर्वाणी नाम विश्रुता । श्रीमतः शान्तिनाथस्य जज्ञे शासनदेवता ॥ १५३८ ॥
पर्युपास्तिकरो नित्यं चक्रायुधनृपात्मजः । बभूव शान्तिनाथस्य राजा कोणाचलाऽभिधः ॥ १५३९ ॥
चत्वारिंशद्धनुस्तुङ्गं मृगाङ्कं काञ्चनद्युतिम् । त्रिजगत्यप्रतिरूपं श्रीशान्तेरभवद्वपुः ॥ १५४० ॥
चत्वारो जन्मजा एकादश कर्मक्षयोद्भवाः । एकोनविंशतिश्चाऽन्ये देवसङ्घेन निर्मिताः ॥ १५४१ ॥
चतुस्त्रिंशदतिशया एते सिद्धान्तभाषिताः । यथाऽन्येषां तीर्थकृतां शान्तेरपि तथाऽभवन् ॥ १५४२ ॥ युग्मम् ॥
भुवनत्रयनाथत्वसूचकानि जिनेशितुः । प्रातिहार्याणि तस्याऽष्टावशोकादीनि जज्ञिरे ॥ १५४३ ॥
एवं त्रिभुवनश्रेयःस्थानं शान्तिरपालयत् । स पञ्चविंशतिवर्षसहस्राण्यनगारताम् ॥ १५४४ ॥

ऊनान्येकेन वर्षेण तानि केवलितां पुनः । वर्षलक्षमनूनं च सर्वायुरभवत्प्रभोः ॥ १५४५ ॥
निर्वाणसमयं स्वस्याऽऽसन्नं ज्ञात्वा जगद्गुरुः । आरुरोहच्च शिखरे संमेतस्य महीभृतः ॥ १५४६ ॥
विज्ञातस्वामिनिर्वाणाः सुरेन्द्रा एत्य सत्वरम् । चक्रुस्तत्राऽन्त्यसमवसरणं सरणं श्रियाम् ॥ १५४७ ॥
तत्रोपविश्य भगवाँश्चक्रे पर्यन्तदेशनाम् । आचख्यौ सर्वभावानामनित्यत्वं महीतले ॥ १५४८ ॥
इत्युवाच च भो भव्याः! कार्यं तत्कर्म किञ्चन । येन सा प्राप्यते मुक्तिर्मुक्त्वाऽपारां भवस्थितिम् ॥ १५४९ ॥
अत्राऽन्तरे गणधरः पादप्रणतिपूर्वकम् । पप्रच्छैवं जिनं कीदृग्रूपा सिद्धिर्भवत्यसौ ॥ १५५० ॥
प्रभुः प्रोवाच सा हारहीरचन्द्रकरोज्ज्वला । योजनानां पञ्चचत्वारिंशल्लक्षाणि विस्तृता ॥ १५५१ ॥
श्वेतोत्तानवरच्छत्रसमसंस्थानसंस्थिता । सकलस्याऽपि लोकस्य साऽग्रभागे प्रतिष्ठिता ॥ १५५२ ॥
पिण्डे च योजनान्यष्टौ मध्यभागे सका पुनः । जायते मक्षिकापत्रतन्वी चाऽन्ते क्रमादियम् ॥ १५५३ ॥
यदन्त्ययोजनं तस्याऽन्त्यक्रोशस्य षडंशके । सिद्धाः प्रतिष्ठितास्तत्राऽनन्तसौख्यसमन्विताः ॥ १५५४ ॥
तत्र जन्मजरामृत्युरोगशोकाद्युपद्रवाः । न जायन्ते कषायाश्च क्षुत्तृषाद्याश्च देहिनाम् ॥ १५५५ ॥
सौख्यं निरुपमं तत्र वर्तते सुस्थिरं परम् । मुग्धलोकानुमानेनोपमा तस्येह दीयते ॥ १५५६ ॥
तथाहि—श्रीसंकेतपुरस्वामी शत्रुमर्दनभूपतिः । विपरीततुरङ्गेण हृतः कान्तारमासदत् ॥ १५५७ ॥
गाढश्रमवशाज्जाततृष्णापीडितविग्रहः । मूर्छयाऽतुच्छया सोऽथ पपात पृथिवीतले ॥ १५५८ ॥

प्रत्यासन्नगिरौ तत्र वसन्ति स्म पुलीन्द्रकाः । कन्दमूलफलाहारास्तरुवल्कलचीवराः ॥ १५५९ ॥
शिलायामासनं तेषां शयनं च शिलातले । आत्मानं सुखिनं तेऽपि मन्यमाना अदोऽवदन्॥ १५६० ॥
सुलभं नैर्झरं वारि सदा सन्निहिता प्रिया । शुभो वासः पुलीन्द्राणां श्रूयते नाऽहितं वचः ॥ १५६१ ॥
तेषां मध्यादथो कश्चित् पुलीन्द्रः समुपाययौ । तत्र यत्राऽभवद्भूपो मूर्छया पतितो भुवि ॥ १५६२ ॥
भूषणैर्भूषिताङ्गत्वाज्ज्ञात्वा तं पृथिवीपतिम् । स एवं चिन्तयामास तृष्णयैष विपत्स्यते[1] ॥ १५६३ ॥
अस्मिँश्च संस्थिते[2] पृथ्वी निर्नाथा सकला भवेत् । तदयं नीरपानेन युक्तो जीवयितुं मम ॥ १५६४ ॥
जीवनीय[3]मथाऽऽनीय पलाशानां पुटेन सः । पाययामास नृपतिं ततः स्वस्थो बभूव सः ॥ १५६५ ॥
तस्योपकारमतुलं दधानो मानसे नृपः । यावदस्थात् क्षणं वार्तां प्रकुर्वाणोऽमुना सह ॥ १५६६ ॥
तावत्तत्राऽऽययुस्तस्य सैनिकास्तैश्च ढौकितम् । राज्ञो भक्ष्यं मोदकादि शीतलं सलिलं तथा ॥ १५६७ ॥
पुलीन्द्रस्याऽपि तद्भक्ष्यं दापितं पृथिवीभुजा । सुखासनगतः स्वेन सहाऽऽनीतः पुरे च सः ॥ १५६८ ॥
कारयित्वा ततः स्नानं परिधाप्य सुवाससी । भूषणैर्भूषितश्चारुश्रीखण्डाद्यैर्विलिप्य च ॥ १५६९ ॥
शालिदाल्यादिसद्भक्ष्यैर्भोजितश्चाऽतिगौरवात् । दत्तं त्रयोदशगुणख्यातं ताम्बूलमस्य च ॥ १५७० ॥
शेते स्म चारुशय्यायां रम्यावासगतोऽथ सः । हतं तस्याऽऽशु दारिद्र्यं यस्य तुष्टो महीपतिः॥ १५७१ ॥

---

१ मरिष्यति । २ मृते । ३ जलम् ।

इत्थं संप्राप्तसौख्योऽपि विसस्मार वनं न सः । तत्र स्वैरविहारं च निजां सहचरीं च ताम् ॥ १५७२ ॥
किंकिल्लिपल्लवाहारं सुन्दरे नन्दने वने । चरन्नपि स्मरत्येव करभः स्वां मरुस्थलीम् ॥ १५७३ ॥
परं शशाक नो गन्तुं पत्तिभिः सुनियन्त्रितः । एवमस्थात्तत्र कालं कियन्तमसकौ तथा ॥ १५७४ ॥
वर्षाकालेऽन्यदाऽऽयाते गर्जत्यम्बुधरेऽसकृत् । विद्युद्विलासे जाते च सोऽभूद्विरहपीडितः ॥ १५७५ ॥
मेघगर्जारवो विद्युद्विलासः केकिनां स्वरः । दुःसहो विरहार्तानामेकैको यमदण्डवत् ॥ १५७६ ॥
सोऽथ दध्यौ सुवस्त्रालङ्कारो यास्याम्यहं यदि । भाविनी व्याहृतिस्तन्मे नग्नस्यैव गतिः शुभा ॥ १५७७ ॥
एवं विचिन्त्य वञ्चयित्वा यामिकान् स कथञ्चन । निःसृत्य भवनाद्रात्रौ शनैः स्वस्थानमाययौ ॥ १५७८ ॥
अन्याकारममुं दृष्ट्वा संभ्रान्तं तत्कुटुम्बकम् । पप्रच्छ हन्त कोऽसि त्वं सोऽवदत्तावकोऽस्म्यहम् ॥ १५७९ ॥
ततश्च प्रत्यभिज्ञाय पृष्टस्तन्मानुषैरयम् । क्काऽस्थाः कालमियन्तं त्वं किं वा कान्तिस्तवेदृशी ॥ १५८० ॥
ततस्तेन स्ववृत्तान्तः सर्वस्तेषां निवेदितः । कथितं चानुभूतं तद्ग्रामवासादिकं सुखम् ॥ १५८१ ॥
शंस कीदृशरूपं तदिति भूयोऽपि पृच्छताम् । तत्प्रतीतोपमानेन तेषां कथयति स्म सः ॥ १५८२ ॥
सुस्वादफलकन्दाभा मोदका भक्षिता मया । भुक्तं च शालिदाल्यादि नीवाराद्यशनोपमम् ॥ १५८३ ॥
पत्राणि गुन्दिकापत्रसमान्यशितवानहम् । शाल्मलीकण्टकाकारं तथा पूगीफलं ददुः ॥ १५८४ ॥
चारुवल्कलसंकाशे परिधीते मयाऽम्बरे । वर्णप्रसूनमालाभभूषणानि तथैव च ॥ १५८५ ॥

नीरन्ध्रकन्दराकारे प्रासादेऽप्युषितोऽस्म्यहम् । शिलातले वा[1] विपुलशय्यायां शयितस्तथा ॥ १५८६ ॥
स एवमुपमेयस्य प्रधानस्याऽपि वस्तुनः । असारवस्तुना स्वानुमानेनोपमितिं व्यधात् ॥ १५८७ ॥
एवं संसारिलोकस्य पुरतोऽस्मादृशैरपि । सिद्धिसौख्यमिह लोकानुमानेनोपमीयते ॥ १५८८ ॥
यत्कामभोगजं लोके यच्च दिव्यं महत्सुखम् । ततोऽनन्तगुणं सौख्यं सिद्धानां शाश्वतं भवेत् ॥ १५८९ ॥
एवमाख्याय भगवान् ततः स्थानात्समुत्थितः । प्रधानशिखरे क्वाप्याऽऽरुरोहाऽस्य महीभृतः॥ १५९० ॥
केवलज्ञानिनां चारुसाधूनां नवभिः शतैः । सार्धं शान्तिजिनस्तत्र मासिकाऽनशनं व्यधात् ॥ १५९१ ॥
सर्वेऽपि सपरीवाराः सुरेन्द्रास्त्रिजगत्प्रभोः । परमप्रीतिसम्पन्नाश्चक्रिरे पर्युपासनम् ॥ १५९२ ॥
ज्येष्ठश्यामत्रयोदश्यां भरणीस्थे निशाकरे । शुक्लस्य चरमं भेदं ध्यायन् सिद्धिं ययौ प्रभुः ॥ १५९३ ॥
सर्वेऽपि साधवस्तत्र जग्मुस्ते क्रमयोगतः । जायतेऽपुनरावृत्तिर्गतानां यत्र देहिनाम् ॥ १५९४ ॥
ज्ञात्वा सिद्धिगतं नाथं देवदेवीगणान्विताः । सुरेन्द्राः शोकसंपूर्णा अश्रुपातविधायिनः ॥ १५९५ ॥
त एवं विलपन्ति स्म स्मारं स्मारं प्रभोर्गुणान् । यतो वैक्रियरूपास्ते समायान्ति महीतले ॥ १५९६ ॥
हा नाथ! संशयध्वान्तविच्छेदनदिवाकर! । मुक्त्वाऽनाथानिहाऽस्माँस्त्वं श्रीशान्ते! क्व गतोऽसि हा? ।१५९७।
स्वस्वभाषापरीणामातिशयाऽऽह्लाददायिनीम् । विना भवन्तं हे नाथ ! कः कर्ता धर्मदेशनाम् ?॥ १५९८ ॥

१ वा इवार्थे ।

दुर्भिक्षेत्याद्यशिवानां लोकबाधाविधायिनाम्। कः कर्ताेपशमं नाथ! संप्राप्ते त्वयि निर्वृतिम्॥ १५९९ ॥
हित्वा निर्जरकृत्यानि समागत्य महीतले। वयं कस्येह कर्तास्मः शुश्रूषां त्वां विना प्रभो!!॥ १६०० ॥
इति खेदपरास्तेऽथ क्षीरोदध्यादिसंबरैः। शरीरं स्नपयामासुः शान्तिनाथजिनेशितुः ॥ १६०१ ॥
सनन्दनवनानीतहरिचन्दनदारुणः। घर्षेणाऽतिसुगन्धेन तत्तैर्भक्त्या व्यलिप्यत ॥ १६०२ ॥
कर्पूरं तन्मुखे दत्त्वा देवदूष्येण वाससा। आच्छादितं तदगरुसुगन्धेन च वासितम् ॥ १६०३ ॥
मन्दारपारिजातकसंन्तानकतरूद्भवैः। पुष्पैः संपूजितं भक्त्या सुरेन्द्रैर्भगवद्वपुः ॥ १६०४ ॥
वररत्ननिर्मितायां शिबिकायां ततश्च तत्। तैरक्षेपि चिता नैर्ऋत्यां चक्रे चन्दनदारुभिः ॥ १६०५ ॥
शिबिका सा समुत्पाट्य नीता तैस्तत्र खेदिभिः। प्रक्षिप्तं च चितामध्ये जैनेन्द्रं तद्वपुस्तरम्॥ १६०६ ॥
कृत्यं शेषानगाराणां चक्रुर्वैमानिकाऽमराः। मुखेन मुक्तस्तत्राऽग्निर्देवैरग्निकुमारकैः ॥ १६०७ ॥
ततः प्रज्वालितो वायुकुमारैर्वायुनाऽनलः। दग्धे च तेन पललशोणिते भगवत्तनौ ॥ १६०८ ॥
ततो मेघमुखैर्मुक्त्वा नीरं सुरभि शीतलम्। अमर्षक्षमयेवाऽऽशु शामितः स चिताऽनलः ॥ १६०९ ॥
ततश्च दक्षिणां दंष्ट्रामूर्ध्वस्थामाद्यवासवः। जग्राह चमरेन्द्रश्चाधःस्थितामपरामिमाम् ॥ १६१० ॥
उपर्यधोगते वामदंष्ट्रे भगवतो मुखात्। ईशानेन्द्रो बलीन्द्रश्च भक्त्या जगृहतुः क्रमात् ॥ १६११ ॥

१ संबरं जलम्। २ दारु काष्ठम्। ३ इन्द्रैः। ४ सन्तानकः कल्पवृक्षः। ५ पललं मांसम्।

शेषाऽष्टाविंशतिर्दन्तास्तत्संख्यैः शेषवासवैः । सर्वैर्जगृहिरेऽस्थीनि शेषैरनिमिषैः पुनः ॥ १६१२ ॥
विद्याधरा नराश्चैव चिताभस्म जगद्गुरोः । गृह्णन्ति स्म प्रयत्नेन सर्वोपद्रवनाशनम् ॥ १६१३ ॥
एवं विहितसंस्काराः सुरेन्द्रा भगवत्तनोः । चक्रुः स्तूपं वरं तत्र स्वर्णरत्नविनिर्मितम् ॥ १६१४ ॥
तस्योपरि स्वर्णमयीं प्रतिमां त्रिजगत्प्रभोः । कृत्वा ते पूजयामासुः श्रीशान्तेर्भक्तिपूर्वकम् ॥ १६१५ ॥
कृत्वा नन्दीश्वरे यात्रां स्वस्वस्थानेषु ते ययुः। सर्वे सुरासुराः शान्तिं संस्मरन्तः प्रभुं हृदि ॥ १६१६ ॥
चक्रायुधोऽथ भगवान् बहुसाधुगणान्वितः । विजहार महीपीठे भविकान् प्रतिबोधयन् ॥ १६१७ ॥
घातिकर्मविनिर्मुक्तः संजातः सोऽपि केवली । पुनर्विहरति स्मोर्व्यां देवेन्द्रैः परिपूजितः ॥ १६१८ ॥
इतोऽस्ति भरतक्षेत्रे मध्यखण्डे सुरार्चितम् । भुवि ख्यातं कोटिशिलाभिधानं तीर्थमुत्तमम् ॥ १६१९ ॥
विधायाऽनशनं तत्र बहुकेवलिसंयुतः । चक्रायुधगणधरः पुण्यात्मा प्रययौ शिवम् ॥ १६२० ॥
तस्यां शिलायां कालेन बह्व्यः संयतकोटयः । सिद्धाश्चक्रायुधांह्रिभ्यां यका पूर्वं पवित्रिता ॥ १६२१ ॥
तद्यथा–सिद्धे गणधरे तस्मिँस्तीर्थे शान्तिजिनेशितुः। सिद्धास्तत्र महातीर्थे सङ्ख्याता यतिकोटयः ॥१६२२॥
कुन्थोरपि भगवतस्तीर्थे तत्र शिलातले । साधूनां कोटयः सिद्धाः सङ्ख्याता गतपापकाः ॥ १६२३ ॥
अरस्य स्वामिनस्तीर्थे साधुद्वादशकोटयः । अष्टप्रकारकर्माणि क्षपयित्वा शिवं गताः ॥ १६२४ ॥
तीर्थे मल्लिजिनेन्द्रस्य केवलज्ञानधारिणाम् । षडत्र कोटयः प्राप्ता निर्वाणं व्रतशालिनाम् ॥ १६२५ ॥

मुनिसुव्रतनाथस्य तीर्थे तीर्थेऽत्र विश्रुते । साधूनां कोटयस्तिस्रः संप्राप्ताः पदमव्ययम् ॥ १६२६ ॥
तीर्थे नमिजिनस्याऽपि कोटिरेका महात्मनाम् । सिद्धास्तत्राऽनगाराणां सुविशुद्धक्रियाव्रताम् ॥ १६२७ ॥
एवमन्येऽपि बहवः सिद्धा ये तत्र साधवः । कालेन गच्छता तेऽत्र ग्रन्थे न कथिता मया ॥ १६२८ ॥
येषां तीर्थकृतां तीर्थे सिद्धा कोटिरनूनका । तान्येव कथिताऽन्यत्र सेयं कोटिशिला ततः ॥ १६२९ ॥
चारणश्रमणैः सिद्धयक्षैर्देवासुरैस्तथा । तद्भक्त्या वन्द्यते नित्यं तीर्थं कोटिशिलाभिधम् ॥ १६३० ॥
इत्थं शान्तिजिनेश्वरस्य मयका प्रोक्तो भवो द्वादशः, श्राद्धद्वादशसद्व्रतमद्भुतकथासंलेखनाबन्धुरः ।
सच्चक्रायुधनामधेयगणभृद्व्याख्यानसंवर्धितो, व्याख्यातं सकलं चरित्रमपि तत्तस्यैव तीर्थेशितुः ॥१६३१॥

यस्योपसर्गाः स्मरणात्प्रयान्ति, विश्वे यदीयाश्च गुणा न मान्ति ।
यस्याङ्गलक्ष्म्या कनकस्य कान्तिः, संघस्य शांतिं स करोतु शान्तिः ॥ १६३२ ॥

॥ इत्याचार्यश्रीअजितप्रभसूरिविरचिते श्रीशान्तिनाथचरिते
द्वादशभववर्णनो नाम षष्ठः प्रस्तावः ॥ ६ ॥

## ॥ इति श्रीशान्तिनाथचरित्रम् ॥